# दिव्यज्योतिः

Vol. 37
1992–93
1–5, 7–9, 12
Vol

संस्कृतस्य सचित्रमासिकम्

नववर्षाङ्कः

शिमला। अक्तूबर, १९९२

वर्ष ३७ अङ्कः १

# दिव्यज्योतिः

संस्थापितम् १९५६
प्रधानसम्पादकः—
आचार्य केशव शर्मा



संस्थापकाः तथा
आद्यसम्पादकाः
आचार्यश्रीदिवाकरदत्त
शर्माणः,
राष्ट्रपतिसम्मानिताः

(पत्रमिदं हि० क० सं० भा० अकादमी प्रदत्तानुदानसाहाय्यम् । पत्रिकागत-मुद्रणदोषाणां सम्पादकीयनीति-विषये च अकादमीदायित्वं नास्ति)

**हिमाचल प्रदेश—पंजाब-हरियाणा-जम्मूकश्मीर-मध्य प्रदेश—राजस्थान—महाराष्ट्र उत्तरप्रदेश शासन-स्वीकृतं केन्द्रशासनपुरस्कृतं सचित्रं संस्कृतमासिकम् ।**


## पत्रस्य उद्देश्यानि तथा नियमाः

सरलसरससुबोध-साधनैः सर्वस्मिन् संसारे संस्कृतस्य प्रसारः, साहित्यान्तर्गतानां सकलकलानां समन्वेषणं, संसारस्य हितसम्पादनम्, एवं लौकिक-अलौकिकस्वातन्त्र्यस्य प्राप्तिः ।

"दिव्यज्योतिः" प्रतिमासं पञ्चदशतारिकायाम् (आङ्गलमानेन) प्रकाशितं भवति

पत्रस्य वार्षिकमूल्यं ५० रु० अर्धवार्षिकं २५ रु० एकस्याङ्कस्यच रु० ४/५० भवति ।

वर्षारम्भः अक्तूबरमासतः भवति ग्राहकः कस्मादपि मासाद् भवितुं शक्नोति ।

ग्राहकैः, "सम्पादक, दिव्यज्योतिः, भारती विहार, मशोवरा, शिमला-१७१००७ इति संकेते धनादेशेन वा. शु. प्रेषणीयम् ।

## विषयानुक्रमः




## शुभकामना





मुझे यह जानकर अतीव प्रसन्नता हुई "दिव्यज्योतिः" अपने प्रकाशन के पैंतीसवें वर्ष में प्रवेश कर रहा है ।

संस्कृत के प्रचार-प्रसार में दिव्यज्योतिः की महत्वपूर्ण भूमिका है । आचार्य दिवाकर दत्त जी ने जिस परिश्रम, लगन और समर्पण की भावना से इस देश-विख्यात पत्रिका का प्रकाशन किया है वह समस्त संस्कृत सेवियों का प्रेरणा सूत्र रहा है ।

मैं इस महत्वपूर्ण उपलब्धि पर "दिव्यज्योतिः" परिवार को हार्दिक बधाई देता हूं और कामना करता हूं कि आने वाले वर्षों में यह पत्रिका और अधिक ख्याति अर्जित करे ।

शान्ता कुमार
मुख्य मन्त्री (हि.प्र.)





मुझे यह जानकर प्रसन्नता हुई है कि लोक प्रिय संस्कृत मासिक पत्रिका "दिव्यज्योति" अक्तूबर १९९२ में ३६ वर्षीय संस्कृत सेवा की पूर्ति के साथ ३७वें वर्ष में प्रवेश कर रही है। पिछले वर्षों से दिव्य ज्योति ने कई कठिनाइयों का सामना करते हुए संस्कृत के प्रचार एवं प्रसार के लिए जो सेवा की है सराहनीय है। मुझे आशा है कि भविष्य में भी यह पत्रिका इसी प्रकार संस्कृत की सेवा करती रहेगी।

दिव्य ज्योति के उज्ज्वल भविष्य के लिए मेरी शुभ कामनायें।

वीरभद्र सिंह
पूर्व मुख्य मन्त्री (हि.प्र.)





# भारतीयाध्ययनप्रक्रियायाम् शिष्यस्य सहभागः

— डा० कला आचार्य

क. जे. सोमैया भारतीय संस्कृतिपीठम्
सोमैया विद्याविहार कॅपस, विद्याविहार, मुंबई-४०००७७



अस्माकम् भारतवर्षे प्राचीनकाले अध्ययनाध्यापनपद्धतिः ईदृशो आसीत् ईदृशः च तस्याः परमोत्कर्षः आसीत् यत् मनुना वर्ण्यते—

"एतद्देशप्रसूतस्य सकाशादग्रजन्मनः ।
स्वं स्वं चरित्रं शिक्षेरन् पृथिव्यां सर्वमानवाः ॥"

इति ।१

अस्याः पद्धतेः अनुसरणं न केवलं संस्कृताध्यापने अपि तु अखिले शिक्षणक्षेत्रे यदि अस्माभिः आधुनिके काले क्रियते तर्हि अस्मद्-शिक्षण-प्रणाल्याः स्थितिः न अनुज्ज्वला इति विश्वसिमि ।

अतः प्राचीनकाले गुरुः शिष्य कया पद्धत्या कैः च उपायैः विद्यां ग्राहयति स्म इति विचार्य अद्यतनीये पाठनविधौ अस्याः पद्धतेः अनुसरणं हितकरम् भवेत् वा न वा सर्वथा अनुसरणं कार्यम् अथवा परिवर्तिनि संसारे अत्र अपि परिवर्तनम् यदि आवश्यकम् अस्ति चेत् तर्हि सर्वथा परिवर्तनम् अथवा तेषाम् उपायानाम् नूतनीकरणम् कर्तव्यम्, इति अयं विषय विचार्यते अत्र ।

सर्वैः ज्ञायते एव यत् गुरुशिष्यपरम्परा भारतीयसंस्कृतेः असाधारणं वैशिष्ट्यम् । ऋभुमहर्षिः तच्छिष्यः निदाघः च, धौम्यर्षिः तच्छिष्यः आरुणिः च, श्रीकृष्णः तच्छिष्यः अर्जुनः च, रामकृष्णः परमहंसः तच्छिष्यः विवेकानन्दः च इति एतादृशानि नैकानि उदाहरणानि गुरुशिष्ययोः परस्परसम्बन्धे दृढतां ज्ञापयन्ति । गुरुभक्तिः

भारतीयसंस्कृतेः विशेषः। गुरुमाहात्म्यविषये महद् विचारधनम् संस्कृत-भाषायाम् प्रथितम् किन्तु शिष्याय अध्यापन अध्ययनविधौ तादृशम् महत्त्वम् नैव दत्तम् इति चेत् न शिष्यविषयेऽपि असाधारणम् विचार-धनम् देववाण्याम् उपलब्धम् अस्ति।

## गुरुकुले प्रवेशकाले शिष्यस्य चयनम्

कीदृशः शिष्यः अध्याप्यः इति अस्मिन् विषये मनुः वदति यत् आचार्यपुत्रः, परिचारकः, ज्ञानान्तरदाता, धर्मविद्, मृद्वार्यादिषु शुचिः, बान्धवः, ग्रहणशक्तिपूर्णः, धनदाता, हितेच्छुः, ज्ञातिः च इति एते दश धर्मेण अध्याप्याः। आधुनिककाले धनदाता शिष्यः सर्वेभ्यः रोचते। अतः सः अग्रक्रमेण प्रवेशम् प्राप्नोति महाविद्यालये तथापि एतत् न युज्यते। कुतः? तत्रापि विगतमत्सरः, प्रमादरहितः, नियतेन्द्रियः, चाञ्चल्यरहितः, विद्यानिधिस्वरूपरक्षकः शुश्रूषावरः च भवेत् शिष्यः इति आसीत् मार्गदर्शकम् तत्त्वम् ३

अस्मिन् सन्दर्भे छान्दोग्ये ब्राह्मणे उच्यते 'विद्याह वै ब्राह्मण-माजगाम तवाहमस्मि त्वं माम् पालय अनर्हते मानिने मादा गोपाय मां श्रेयसी तथाहमस्मि। असूयकाय विद्या न दातव्या इति मनुः अपि निर्दिशति। "छान्दोग्यब्राह्मणे विशेषः निर्देशः कृतः यत् विद्यया सह एव अध्यापकेन वरम् मर्तव्यम् न च सर्वथा अध्यापनयोग्यशिष्याभावे च अपात्राय ताम् प्रतिपादयेत् मनुः उपदिशति—

"धर्मार्थौ यत्र न स्यातां शुश्रूषा वापि तद्विधा।
तत्र विद्या न वक्तव्या शुभं बीजमिवोषरे॥"

वरम् मरणम् न तु अपात्रे विद्यादानम् इति विचारः मनुना अपि दृढतया प्रतिपादितः पात्राय दत्ता विद्या प्रसीदति इति कविकुलगुरुः कालिदासः। गणपत्यथर्वशीर्षे अपि उच्यते, 'इदम् अथर्वशीर्षम् अशिष्याय न देयम्।'

मन्ये, अनेन प्रकारेण यदि महाविद्यालयेषु प्रवेशकाले चयनम् भवति तर्हि अध्ययनसत्रे छात्राणाम् अनुपस्थितिः, अनुशासने तेषां असहकारः, परीक्षासु च तेषाम् दुराचारः इति ईदृशस्य अराजकस्य अभावः संभवेत्।

गताङ्कादग्रे

## क्षमापुण्यचरितम्

श्रीमती लोलादयाल, बम्बई



नानादेशेषु विभिन्नाचारान् सुतीक्षणमालक्ष्य, स्वकथासु केरलदेशात् प्रतिनिवृत्य, बाष्पयाने "विचित्रपरिषद्यात्रा" विरचिता। पत्यु:स्निग्धतरा युवती लावण्यचेतोहारिणी क्षमा वारं वारमसूयकैर्जनैरधिक्षिप्ता ये समत्सरमूचुः "हन्त, सुन्दरतमायाः क्षमाया बालौ कुरूपतरौ न कुत्रापि दृष्टाविति।" स्यादेव कुरूपता, किन्तु नगरेऽस्मिन्, विविधकलासु चतुरतरौ वा न कावप्यन्यौ बालौ" स्त इति प्रत्यभाषद्यशःकामा क्षमा। अथ द्विवर्षीयवयस्कयोः सा स्वयमेव सचित्रसरलपाठमारब्धवती। येन त्रिदशवर्षीयैः सहाध्यायिभि र्नवाङ्ग्लिय:मन्मथः पञ्चमवर्गे सुखं प्राविशत्। प्रायः प्रथमश्च वर्गेऽभूदसौ। उभावपि शैशवात् तया सह प्रभाते तुरगरोहणाय गतौ, संगीतं नृत्ताभिनयचतुरौ तौ बहुवारं संवादनेष्वपि भागं गृहीतवन्तौ। अथ तयोरालोकं प्रथाविस्तरणाय, यूरोपखण्डं पठनाय पितृभ्यां नीतौ। वर्षत्रयं कम्ब्रिजपुर मन्मथः पर्सनामपाठशालायामपठत् ततो विख्यातकेम्ब्रिजविश्वविद्यालयेऽशिक्षत, सुशोभनपैरिसनगरे लीला फ्रेञ्चचायनीयानदि भाषाः संगीतञ्च अपठत्। वसन्ते मन्मथस्याध्ययनविश्रान्तिकाले क्षमा प्रतिवर्षं पारिसपुरं याता षण्मासाश्च तत्र यापिताः। नियमेन प्रसिद्धनाटकालये चोपस्थिता एवं सा यूरोपीयाधुनिकनाट्य-शैली सूक्ष्ममधीतवती। राघवेन्द्रोऽपि स्वनवीनवैज्ञानिक-विचारान् प्रकटीकरणाय पारिसस्थ-वैद्यसंवादेन बहुधा निमन्त्रितः। लन्डनपुरस्थ-वैदिक्य संमत्रमपि पुरतो मुहुर्मुहुः स्वसूक्ष्मपरीक्षां निरवोचत।

कदाचन शार्मण्य — बेलजीय — होलण्ड — देशीयवैज्ञानिकसंस्थाभि निमन्त्रितोऽसौ । क्षमा चाभीक्ष्णं तेन सहाचरन्ती, नानावैज्ञानिकाश्च तया परिचिताः। अथ पारिसपुर्यां स्थितवत्यां, प्रत्यहं क्षमा नववर्षीयलीलया सह टेनिसक्रीडां क्रीडामण्डले खेलति स्म । न चिराद् बालिका सुष्टु रममाणा, फ्रान्सदेशीय-प्रवराणां टेनिसस्पर्धासु सानायसं विजयं लब्धवती । मातासुते सहभागिन्यौ वहूनि द्विगुणयुद्धानि जयतः स्म। अन्येष्वपि नगरेषु टेनिसक्रीडायुद्धेषु खेलनाय टेनिसमण्डलै निमन्त्रिते । एवं प्रवासेषु विविधलोकानां प्रकृतिराचारादिसुष्टुतया परालोचितम् । सदैव खेलने लीलां प्रोत्साहमाना, श्लोकग्रथनेऽपि प्रवृत्तासीत् । तथापि परदेशेऽपि संस्कृतपठनं न कदापि समुपेक्षितम् । प्रातरुत्थाय श्री मद्भगवद्गीतां नियमेन क्षमाऽपठत् ।

अत्रान्तरे सुपूज्यमहात्मनो गान्धे-रसहकारिता-प्रवृत्तिः १९३० खिस्ताब्दाद् अहन्यहनि संवर्धयत् । असरभसा स्वराज्याय युद्धप्रवृत्तिरेषा प्रत्यहं सकलेषु प्रदेशेषु, विशेषतो गुर्जर - महाराष्ट्र-वङ्गदेशेषु, निःशब्दा विरोधवचनयात्राः सर्वत्र प्रचलन्ति स्म । क्रूरैर्नगरपालैरनघाः यात्रिणः सुतीव्रं दण्डेन ताडिताः शतशश्च नर नार्यर्भकाः कारागृहेषु निक्षिप्ताः । देशसेवकानाँ कष्टानि प्रेक्ष्य १९३१ खिस्ताब्दे अप्रसभयुद्धमुद्दिश्य परपीडाकुलितक्षमया "सत्याग्रहगीता" विरचिता ।

गान्धिवंशप्रदीपाय अष्टादशसर्गीयकाव्यरत्नञ्च समर्पितम् । अपूर्वरचनेयं प्रभूतविद्वद्भिः प्रशस्ता, तत्पद्यग्रथनातिकौशलयं तैरभिज्ञातम् । पण्डितसत्तमानां श्लाघ्याभिनन्दनलेखाः पण्डितापदवी च तयोपलब्धा । अथैकदा समर्सेटमोहम् नाम, विख्याताङ्गललेखको मुम्बापुरे तया मिलितः । तस्या आङ्गलभाषालिखितकथाः पठित्वा सोऽब्रवीत् "अनुपम—संस्कृत—धन—संग्रहयुक्ता, किमिति ह्याङ्गल वाण्यां लेखनेन । भवत्या संस्कृतभाषायामेव रचनाविरच्यतामिति ।" एवं विदेशीयेन प्रेरिता, ततः परं देववाण्यामेव तया सर्वाः रचनाः विरचिताः । सरस्वत्या सुमहत्या कृपया, दिष्ट्या विद्यालङ्कारादिनानापदवीविभूषितः सुमहान् नागप्पाचार्यसत्तमो महिशूरनगरान् मोहमय्यीमायातः तेन क्षमायाः १९३२ खिस्ताब्दे परिचयः सञ्जातः । वहुश्रुतपण्डितवराणां मध्ये न कुत्रापीदृश-विज्ञानसागरपारगोऽयं मिलित-

स्तया । अमरकोशसहिताः सकल शास्त्रप्रबन्धास्तस्य कण्ठस्थजाता इति प्रतीयतेस्म । तस्मिन् समये सत्याग्रहगीताविरचनं तया पूरितम् तत्संशोधनाय क्षमया नियुक्तोऽसौ । प्रतिदिनं तमानेतुं शकटं तया प्रेषितं, होरात्रयानन्तरमसौ शकटेन स्ववासं प्रतिनिवृत्तः । स्मृतिपारगस्य परीक्षां पुरा समुत्तीर्णोऽपि, कार्याभावाद् उदरपूर्तिरपि नाशकत्कर्तुम्, का कथा स्वपरिवारपोषणस्य, पुत्राणां पाठनस्य वा ? अकल्पनीयं खलु तेषु दिवसेषु खीष्टाब्देशास्त्रीणामपि दुर्दशासीत् । दिष्ट्या आङ्गलभाषाभिज्ञा केचित् शास्त्रिणोऽन्यप्रदेशं गन्तुमपारयन् । एवं नागप्पशास्त्रि मुम्बापुरं प्राप्य, क्षमायाः कार्यार्थे, कैश्चितस्या मित्रैरपि नियुक्तः । स्ववासनिकटे खिस्तीयपाठशालायामपि छात्रानपाठयदसौ । १९३८ खीष्टाब्दे पुरा लिखित-लघु - कथा अनुष्टुप्छन्दपदयुतं "कथापञ्चकम्" तथा प्रकाशितम् यथा १९३९ वर्षे स्वप्रियपितुश्चरितं 'शङ्कर-जीवनाख्यानम्" सरलानुष्टुपश्लोकयुतं विरचितम् । अत्रान्तरे विविधालङ्कार-छन्दादीनां सूक्ष्मतमाध्ययनं नागप्पशास्त्रिसकाशात् तया विहितम् । १९३० खीस्ताब्दे गुर्जरदेशीयग्रामात् पर्यटन्ती, दुःखाकुलिता क्षमा त्रयः कथा आङ्गलभाषायां व्यरचयत् या १९३८ वर्षे सरलानुष्टुपच्छन्दः प्रदात् समवगुण्ठ्य, "ग्रामज्योति" र्नाम तत्कथानिचयमलिखत् । सुपूज्य-महात्मनो निदेशमनुसृत्य न केनापि ग्रामिकेन पणमेकं करं प्रदत्तं येन शतशो ग्रामीणा बद्धाः कारागृहाण्यपूरयन् । निवासा अपि राज्येन गृहीताः । तथापि सुदृढनिश्चयै ग्रामीणैः सत्याग्रहो न त्यक्तः । महात्मा गान्धिरपि बद्धः, कारागृहे चिरकालं स्थितः । यथान्ये सहस्रशः सत्याग्रहिणः । बहवश्च कारागृहेषु मृताः । १९४४ अब्दे क्षमायाः प्रियपितृष्वसेयो रणजितपण्डितो लखनौस्थकारागृहे स्वर्गगतः । विश्वयुद्धे तु सहस्रशः भारतीयाः सैनिकाः हता अपि, क्रूराङ्गलराज्यं स्वक्रोधं नाल्पीचकार । एवं भारतीयानां स्वराज्ययुद्धो अविरामं १९४६ वत्सरपर्यन्तं प्राचलत् । अथ नागप्पशास्त्रिप्रवरेण छन्दोबाहूल्यं निरन्तरं पठित्वा, शीघ्रं पद ग्रन्थनकलायाः पारं गत्वा, क्षमा सदैव श्लोकान् विरचयत् टेनिसक्रीडाभूमौ वा शकटगमने वा । ततः परं तस्याः करकमलाद् अत्युत्तमकृतिनिचयः प्रादुरभूत् । एकं ग्रन्थमणिमन्वगच्छदन्या गरीयसी ! १९४३ अब्दे परमशोभना शार्दूलविक्रीडित-पद्यरत्नसंकीर्णा ह्यनुपम "मीरालहरी" तथा विरचिता या १९५० पाञ्चालराज्यवि-

श्वविद्यालयस्य पाठ्यक्रमे निर्धारिता। अथ महात्मनः पञ्चसप्ततितमे जन्मदिनावसरे मदरासपुरस्थाश्रमेण संस्कृतलेखकाः श्रीगान्धेर्जीवकथां स्पर्धां विरचयितुं संप्रार्थिताः ततः "सत्याग्रहगीता' प्रथमभागो, द्वितीयश्च "उत्तर-सत्याग्रहगीता" नाम "सत्याग्रहगीतायाः" पूर्ण-रूपेण क्षमया विरचिता। सकलानां कविप्रवराणां ग्रन्थेषु मध्ये प्रबन्धद्वयं श्रेष्ठतमं महता श्रमेण प्रख्यातं, प्रथम पारितोषिकञ्च तयोपलब्धम्। महाकाव्यमेतद् १९३१ अब्दात् १९४५ वर्षपर्यन्तं यद्यन्महात्मनानुभूताः संघटना वर्णयति। तदा महात्मनः पादाब्जमूले कृतियुग्ममिदं समर्पयत्, किन्तु तत्प्राप्तिरपि तया न प्राप्ता बत।

तस्य देववाण्युपेक्षया साकल्येनाशा खण्डिता, गुर्जरलेखकथाश्रयमपि न प्रकाशितम्। अतिशोचनीयं खलु यत् स्वराज्यलाभान्तेऽपि नो मन्त्रिभिर्न किमपि संस्कृतप्रसारणाय विहितम्। विशाल-देशस्य एकता, सरलसंस्कृतभाषायामेव विद्यते। गच्छत्सु वत्सरेषु, देवभाषाद्वारा विविधप्रान्तेषु पण्डितसत्तमानां तस्या मित्रता सञ्जाता। विशेषतः श्रीनगरस्था महामहोपाध्यायाः शिवनाथशास्त्रिसाहित्याचार्याः "श्रीनामकसंस्कृतमासिकस्य संपादकः. डा, कुलभूषणश्चिकित्सकोऽपि सुरवाणीप्रियः, लवपुरस्याचार्यश्चारुदेवशास्त्रिसत्तमाः, कलकत्ताया पण्डितानुपमा डा० क्षितीशचन्द्रचटोपाध्यायः य स्वजीवनं संस्कृतप्रचारणे समर्पितवान् दयालुमन्नाश्च। "मञ्जूषा" नाम विद्वत्तमप्रचुरोत्तमस्य मासिकपत्रस्य प्रकाशकवरेण्याः। फ्रेञ्च—शार्मण्य—लाटिनादि - पाश्चात्य - भाषा - निष्णाताः सन्तः, प्रत्यङ् मञ्जूषाङ्कः कौतुकपूर्ण—तुलनादृष्टनिबन्धमलिखदसौ। अपि च वाराणसीस्थाः कविकुलगुरुवर्याः साहित्याचार्याः साहित्यवाचस्पतिर्महामहोपाध्यायाः श्रीमन्तो नारायणखिस्तेमहानुभावाः, तेलग्रामस्थाः श्रीमन्तः रामाचार्या गलगलिमहायशाः ये मधुरवाणीं नाम मासिकपत्रिकां नियमेन प्रकाशयन्ति स्म। मुम्बापुरस्थाः सुमहद्यशसः श्रीमन्तो महामहोपाध्यायाः काणे निरुपमाचार्यशार्दूलाः। पुण्यपत्तनस्थस्य विश्वविद्यालयस्य संस्कृत-भागस्याग्रिमप्राध्यापकाः श्रीभालचन्द्रदेवमहाभागाः, मदरासपुरबङ्गलुरस्था अनल्पीयांसः श्रेष्ठाचार्याश्च।

—क्रमशः



अगस्तमासतोऽनुवृत्तम्—

# सोलनशतकम्

केशवराम शर्मा दर्शनाचार्य, एम, ए. एम. फिल.
(प्राप्तस्वर्णपदकद्वय:)



वाग्व्याख्येयं खलु जगदिदं मायिकत्वादसत्यं
ज्ञात्वा ब्रह्मानुभवनिरतो मौनमास्थाय नित्यम् ।
धर्मं लोके त्विषमिव रविर्व्यापयन् सर्वगम्यं
मौनीत्याख्यो मुनिरिह तपः कर्मयोगी व्यधत्त ॥३१॥

यहाँ पर एक मौनी महाराज नाम से प्रसिद्ध कर्मयोगी तपस्वी हात्मा हुए हैं । ऐसा प्रतीत होता था कि वे यह जानकर सदा मौन ारण किये रहते थे कि वाणी द्वारा व्याख्येय यह जगत् माया का लास होने से मिथ्या ही है । वे नित्य ब्रह्मानुभव में लीन रहते थे । पनी कर्मकुशलता के द्वारा उन्होंने सर्वजनगम्य धर्म का ऐसा प्रसार या जैसे सूर्य प्रकाश को फैलाता है ।

ब्राह्मे यामे मधुरभगवन्नामगानक्रमेण
मिश्रो ग्रामे गृहनवबधूधेनुदोहोत्थशब्दः ।
तन्त्रीतालस्वरलयकलामाधुरीं कर्णपेयां
श्रेयोमूलां सृजति हृदयाल्हादिनीं भक्तिभाजाम् ।।३२।।

ब्रह्म मुहूर्त में अनेक लोगों द्वारा गाए जाने वाले भगवन्नाम की ध्वनि से, घर की नवबधू द्वारा धेनुदोहन की ध्वनि का जब मिश्रण होता है तो वाद्य ताल एवं स्वर की कर्णरम्य माधुरी कल्याणकर्त्री एवं भक्तहृदयों की आह्लादिनी माधुरी पैदा होती है।

अस्तं यान्तं दिनकरमनु प्रोच्चसालस्थितानाँ
रोदित्यन्तर्विरहविरुतैरद्रिराजस्तिरश्चाम् ।
उत्सार्यन्ते तरुकिसलयप्रान्तसंस्थाश्रुमालाः
प्रातः चेतः प्रियरविकरैः प्रीतिपुञ्जायमानैः ।।३३।।

पर्वतराज यहां अस्त होते हुए सूर्य को देख कर ऊंचे वृक्षों पर बैठे पक्षियों की चह चह के द्वारा मानो विरहव्यथा से रो पड़ता है। और रात भर के बहे आंसुओं की माला पत्तों के कोरों पर पड़ती है जिसे चित्त प्रिय, प्रीति पुञ्ज रूप सूर्य किरणें सुबह हटाती हैं।

ग्राम्ये मार्गे पणयितुमलं शाकभारं स्वपृष्ठे
नीत्वा श्रान्ता नगरविपणात्सन्निवृत्ताश्च सायम् ।
गेहद्वारे तरुणवनिता जिह्मितार्थस्मितेन
लब्धातिथ्या नवयुवजना वेदनां विस्मरन्ति ।।३४।।

ग्रामों के नवयुवक सब्जियों के भार को पीठ पर उठा कर नगर जाते हैं। नगर में उन्हें बेच कर थके मांदे घर लौटते समय घर के द्वार पर खड़ी तरुण वनिताओं की रहस्यमयी तथा विशेषार्थ की मुस्कराहट से मधुर आतिथ्य पाकर सारी श्रमवेदना भूल जाते हैं।

नीरापूर्णं शिरसि कलशं धारयन्त्यो युवत्यः
पीनप्रांशुस्तनकलशयोर्भूरिभारेण भुग्नाः ।
आक्षिप्यन्ते रसिकतरुणैः प्रस्थिता नैजगेहं
द्वाभ्यां नालं किमिति वहथ त्रीन् घटान् कोमलाङ्ग्यः ? ३५।।

स्थूल एवं उन्नत स्तनकलशों के भार से कुटिल शरीर वाली ग्राम्य युवतियां जब पनघट से जलपूर्ण घट को सिर पर उठाए घर आती हैं तो तरुण रसिक उन्हें छेड़ते है कि हे कोमलाङ्गि ! क्या दो घड़े पर्याप्त नहीं थे जो तीसरा सिर पर उठा रही हो ?

दृष्ट्वा ग्रामे प्रबलमहिषद्वन्द्वयुद्धानि मल्ला
 वृद्धोत्साहा अतुलबलिनं कायमाकांक्षमाणाः ।
व्यायामान्ते स्वगृहमहिषीक्षीरमापूर्य पात्रं
 सर्पिर्मिश्रं श्रमजसलिलस्विन्नदेहाः पिबन्ति ॥३६॥

गांवों में बलिष्ठ भैंसों के द्वन्द्वयुद्ध को देख कर पहलवान युवकों का उत्साह इतना बढ़ जाता है कि वे स्वयं भी उतने बल की कामना करते हैं और व्यायाम के अन्त में पसीने से तर होकर घर में भैंसों का घृतमिश्रित दूध पात्र भर भर कर पीते हैं ।

मूर्ध्न्याधाय स्तिमितगमना घासभारं गृहिण्यो
 क्षीरं चैव स्तनघटयुगे गेहमावर्तमानाः ।
आक्रन्द्यन्ते स्वगृहपशुभिर्बालकैनाथ सायं
 नैजीं वृद्धां किल शमयितुं तीव्रकष्टां बुभुक्षाम् ।३७।

गांवों में तरुण गृहिणियां सायंकाल सिर पर घास का भार तथा स्तन कलशों में उमड़ा हुआ दूध लेकर मन्दगति से जब घर लौटती हैं तो घर के पशु भी तथा बच्चे भी अपनी बढ़ी हुई तीव्र कष्टदायिनी भूख को शान्त करने की आशा से उन्हें चिल्ला चिल्ला कर बुलाते हैं ।

कर्यालाख्ये नटदलकृते हास्यनाट्यप्रयोगे
 रात्रौ लोका अभिनयरसास्वादमुग्धा गृहाग्रे ।
पश्यन्तीनां मदिरनयनैः कामिनीनां गवाक्षात्
 माविध्यन्ते स्मितशितशरैर्मर्मभिद्भिर्युवानः ।३८।

गांवों में कर्याला नाम का हास्य नाट्य प्रयोग होता है । इस में रात्रि के समय घर के आङ्गण में नटों के अभिनय रस के आस्वाद से मुग्ध युवा लोग, खिड़कियों से मस्त नयनों से देखती हुई तरुणियों की तीखी मुस्कराहट के बाणों से घायल हो जाते हैं ।

कन्यासख्यः कटुतरपदान्यन्यपक्षीययूनः
नामग्राहं परिणयदिने सप्रताडं वदन्त्यः ।
द्वारप्रान्तेऽदयमविरतं घ्नन्त्यथो मुष्टिघातं
तस्यास्वादोऽहमहमिकया लभ्यते भाग्यवद्भिः ।३९।

विवाह के समय कन्या की सखियाँ वर पक्षीय युवकों को नाम लेकर जब कटुतर शब्दों (सिठणियों) से ताड़ती हैं, तथा प्रवेशद्वार के कोने में लगातार निर्दयतापूर्वक मुक्के बरसाती हैं तो उस प्रेम प्रहार का ग्रानन्द कोई भाग्यशाली ही पाते हैं।

पाणिग्राहे दुहितुरबलास्विन्नकण्ठोद्गतेषु
विश्लिष्यन्त्या विरहकरुणापूर्णगीतेषु पित्रोः ।
चक्षुर्नीरं प्रवहदवशं क्षेमरोधीत्यवेक्ष्य
पूजातुष्टो ज्वलितहुतभुक् शोषयत्यञ्जसैव ।४०।

विवाह विधि के समय जब नारियां भरे कण्ठ से करुणापूर्ण मङ्गलगीत गाती हैं तो पुत्री के वियोग एवं विरह की वेदना से माता पिता के नयनों से ग्रश्रुजल उमड़ पड़ता हैं तो उसे शुभकार्य में ग्रमङ्गल की ग्राशंका से, पूजा से सन्तुष्ट जलती हुई ग्रग्नि तुरन्त सुखा देती है।

संस्कृतविभागाध्यक्ष राजकीय स्नातकोत्तर
महाविद्यालय सोलन



ग्रनादि देवस्य महाशिवस्य
विवाहकालेऽपि च गालिदानम् ।
ग्रभूत् हिमाद्रावपि सा प्रथा वा
न पाल्यते ऽद्यापि च लोकवृन्दैः? ॥

— सम्पादकः

—

# सामयिक प्रसंग :

## श्रद्धया सत्यमाप्यते

आचार्य सुरेश वरयाड़ी



अस्माकम् पुराणेषु पितृश्राद्धस्य विशदवर्णममस्ति । यो भक्त्या पितृन् प्रीणाति ते पुनः तं प्रीणयन्ति तथा अक्षयधनसम्पत्ति प्रयच्छन्ति । अतो देवकार्यादपि पुनः पितृकार्यं विशिष्यते । पितृणाम्बरं स्थानं दक्षिणदिक् प्रशस्यते । कानि कानि वस्तूनि पितृभ्यः देयानि तदुक्तम् —

प्राचीनाबीतमुदकं तिलाः सव्याङ्गमेव च,
दर्भाः मांसं च पाठीनं गोक्षीरं मधुरा रसाः ।
खड्गलोहामिषमधुकुशश्यामाकशालयः
यवनीवारभुद्गेक्षु शुक्ल पुष्पं धृतानि च ॥

(मत्स्य० पु०)

अनेन पितरः पुष्टिं, स्वर्गं, आरोग्यं प्रजां च प्रयच्छन्ति असंतुष्टाः पितरः विनाशमपि कुर्वन्ति । हविष्मतामधिपतये श्राद्धदेवः रविः स्मृतः । विधिपूर्वकं श्राद्धकृत्येषु देशकाल पात्रस्यापि विचारमावश्यकम् । तदेवोक्तम् —

पतितोः अभिशप्तः क्लीबः पिशुनव्यङ्गरोगिणः
कुनखीश्यावदन्तश्च कुण्डगोलाश्वपालकाः ।
परिवीति र्नियुक्तात्मा प्रमत्तोऽमत्तदारुणाः
वैडालो वकवृत्तिश्च दम्भो देवलकादयः ॥

कृतघ्नान् नास्तिकांस्तद्वन्म्लेच्छदेशनिवासिनः,
त्रिशंकुर्वर्बरद्रावनीतद्रविडकोङ्कमान् ।
वर्जयेद्लिङ्गिनः, सर्वा श्राद्धकाले विशेषतः,
पूर्वेद्युः परेद्युर्वा विनीतात्मा निमन्त्रयेत् ।।
निमन्त्रितान् हि पितरः उपतिष्ठन्ति तान् द्विजान्
वायुभूतानुगच्छन्ति तथासीनमुपासते ।।

(म० पु०)

अत्र शंका भवति यत इह जनैः देयानि हव्यकव्यानि कथं पितृ लोकस्थानं गच्छन्ति अथवा प्रापकः कोऽत्र विद्यते । मर्त्यो द्विजो भुङ्क्ते किं यदि वा अनले हूयते तदन्नं शुभाशुभात्मनै प्रेतैः कथं भुज्यते ।

तत्-शंका निवारणार्थमत्र वैदिकीश्रुतिः यत पितृपितामहाप्रपितामहा वसुरुद्रादित्यस्वरूपाः कथ्यन्ते । तेषां नाम गोत्र मन्त्राः श्रद्धा च हव्यकव्ययोः प्रापकः । यथाचोक्तम्

"अग्निष्वातादयस्तेषामधिपत्ये व्यवस्थिताः
नामगोत्रकालदेशा भवान्तरगतानपि ।
प्राणिनः प्रीणयन्त्येते तदाहारत्वमागतान्
देवो यदि पिता जातः शुभकर्मानुयोगतः ।
तस्यान्नममृतं भूत्वा दिव्यत्वेऽप्यनुगच्छति
दैत्यत्वे भोगरूपेण पशुत्वे च तृणं भवेत् ।
श्राद्धार्थं वायुरूपेण सर्पत्वेप्युपतिष्ठति
पानं भवति यक्षत्वे राक्षसत्वे तथामिषम् ।
दनुजत्वे तथा माया प्रेतत्वे रुधिरोदकम्
मनुष्यत्वेऽन्नपानानि नानाभोगरसं भवेत् ।।

अत इदं प्रत्येकहिन्दूनाम् कर्तव्यं यत ते श्रद्धाऽभावेऽपि स्व-स्व पितृन् तर्पयन्तु तथा परम्परया अनेन स्व हिन्दू संस्कृतिरक्षन्तु-श्रद्धया सत्यमाप्यते ।

---

# संस्कृतशतकम्

मिश्रोऽभिराजराजेन्द्रः
शिमलाविश्वविद्यालये
संस्कृताचार्योऽध्यक्षश्च



अयं त्रिवेणीकविराजराजो विराजते संस्कृततल्लजानाम् ।
मनस्थचैतन्यसुकैरवेषु स्वकीयवाणीवनिताविलासैः ॥
यथा न व्याख्यानशतैः सुलभ्यः तथा स्वकीयैः-कतिचित्-सुपद्यैः
निरूपितः संस्कृतरूपराशिः दिव्यै किलास्मिन्-शतके स्वकीये ॥

— सम्पादकस्य

असंस्कृतं भवेद्राष्ट्रं भरतानां न वै यथा ।
तस्मात्संस्कृतमध्येयमहोरात्रं प्रतिक्षणम् ।१।

मातुः स्तन्यं विना बालो यथा नो पुष्टिमर्हति ।
समाजो भारतीयोऽयमपुष्टः संस्कृतं विना ।२।

शरीरं विधिना सृष्टं पञ्चतत्त्वसमुच्चयैः ।
तथापि क्व नु संस्कारस्तदीयः संस्कृतं विना ? ।३।

विना गङ्गां विना गोदां विना विन्ध्यं हिमाचलम् ।
क्व तिष्ठेद् भारतास्तित्वं विना गीर्वाणभारतीम् ।४।

भारते चापि सम्भूय पठितं यैर्न संस्कृतम् ।
दर्शनायैव ते जाता हन्त विम्बफलोपमाः ।५।

वरमेको गुणी पुत्रो देववाणीविशारदः ।
न चाऽग्लभाषाविज्ञाः पञ्चषा हीनवृत्तयः ।६।

अद्वितीयमपि श्रेष्ठं सुतं संस्कृतपारगम् ।
प्रसूय जननी धन्या मातृसौभाग्यगर्विता ।७।

संस्कृतं ये न जानन्ति संज्ञयाऽपीह भारते ।
अश्रुतपितृसंज्ञांस्तान् जारजानेव मन्महे ।८।

सम्भवेन्नु कथं राष्ट्रे संस्कृताध्ययनं विना ।
आर्षाचरणपद्धत्याः प्रतिष्ठाऽत्र महीयसी ? ? ।९।
नाभिकस्तूरिकाकल्पा संस्कृता वागियं मता ।
भ्रान्ता भ्रमन्त्यरण्यान्यां मूढा गन्धमृगा इव ।१०।
न स्यात्सौधसुखं कामं वरं विटपिसंश्रयः ।
संस्कृताभिरुचिश्चैका स्यान्मे जन्मनि जन्मनि ।११।
यथा क्षेत्रं विना शस्यं यथा वापी विना जलम्
तथैव भारतं राष्ट्रं विना संस्कृतभारतीम् ।१२।
अनिवार्यं यथा भक्ष्यं पेयञ्च जीवितुं सुखम् ।
तथैव संस्कृतं ग्राह्यं ज्ञानसंस्कारहेतवे ।१३।
वेदवेदाङ्गसम्मिश्रं पौराणं शास्त्रसञ्चितम् ।
यत्र संरक्षितं यत्नैरध्येयं तन्नु संस्कृतम् ।१४।
संस्कृतं क्व नु दिव्याभं ज्ञानविज्ञानसम्मतम् ।
क्व च भाषान्तरं सर्वं दोषदारिद्र्यसंकुलम् ! ! ।१५।
बी-यू-टी बटेत्याहुराङ्ग्ल्यां यदि विशारदाः ।
पी यू टी पुटेतीव कथमुच्चार्यते भृशम् ?? ।१६।
एम० वाईति कृते शब्देऽप्यकारायोजनं बिना
कथमुच्चार्यते माईत्यवगन्तुं न शक्यते ? ? ।१७।
निग्टेत्युच्चारणं साधु भाति वर्णप्रयोगतः
नाइटेति कथं तर्हि जी० एच० वर्णौ क्व विद्रुतौ ?? ।१८।
सर्वं पर्याकुलं भाति विपर्यस्तं स्खलद्गतिः ।
आंग्लशब्देषु यत्किञ्चिल्लिख्यते तन्न पठ्यते ।१९।
शब्दे शब्दे ततो यत्नः कार्यस्तत्रास्ति पाठकैः ।
त्रुटयः सम्भवन्त्येवान्यथा प्रतिपदक्रमम् ।२०।
प्रातिवेशिकसन्दर्भे निषेधार्थे च यद्यपि ।
नेवरेति पदं न्वेकं वर्णयोगास्तु भिद्यते ।२१।
अतो नु साम्यमाश्रित्य लेखने पठनेऽथवा ।
किञ्चित्कर्तुं सविश्वासं निर्विशङ्कं न विद्यते ।२२।
देववाणी पुनश्चैषा सर्वदोषविवर्जिता ।
अत्र यल्लिख्यते वर्णैः केवलं तन्नु पठ्यते ।२३।

भवेद्गोचारको ग्राम्यो नागरो वा महामतिः ।
उभावेव पदं सर्वं त्वभिधत्तः यथायथम् ।२४।
ह्रस्वदीर्घप्लुतानाञ्च स्वराणां सुव्यवस्थया ।
स्वरोच्चारणसन्दर्भे न शङ्का जातु जायते ।२५।
निखिले भारते राष्ट्रे किञ्च पूर्णे महीतले ।
देवभाषापदानान्तु रूपमेकं विलोक्यते ।२६।
नियमाः शब्दशास्त्रीयैः पाणिनीयैः स्थिरीकृताः ।
च्युतिं नाणीयसीं याति संस्कृता वागियं मता ।२७।
तस्माद् वैज्ञानिकी प्रोक्ता भारतीयं सनातनी ।
अनन्तशब्दनिर्माणाऽप्यनन्तार्थप्रकाशिका ।२८।
त्रिविधैः पुरुषैरेषामधमोत्तममध्यमैः ।
क्रियानिष्पादकैरत्र त्रिभिर्हि वचनैस्तथा ।२९।
कालखण्डविशेषे हि क्रियान्वेक्षैव भेदतः ।
नवधा जायते नूनं कर्तृगुणानुसारिणी ।३०।
यतो हि कालखण्डास्ते वर्तमानादिभेदतः ।
दशधाऽतः क्रियाऽप्यत्र दृष्टा नवतिरूपिणी ।३१।
कालखण्डा इमे सर्वे त्रैकालिकव्यवस्थया ।
लकारैर्दशभिः ख्याता वर्तमानादिबोधकाः ।३२।
यदि क्रिया पुनस्सैव विविधार्थेषु योज्यते ।
इच्छाप्रेरणाऽऽभीक्ष्ण्यनामधात्वादिकांक्षया ।३३।
रूपाणि सम्भवन्त्यस्यास्तावन्त्येव पुन खलु ।
णिजन्तानि यङन्तानि सन्नन्तादीनि यत्नतः ।३४।
अनया नु दृशैकस्याः क्रियाया अधिसंस्कृतम् ।
सन्ति रूपाण्यनन्तानि व्यापारं बोधयन्ति नु ।३५।
क्रिया सैवेयमेका चेत्प्रत्ययैः कृद्भिरिष्यते ।
कृत्याख्यैः प्रत्ययैर्वापि वक्त्राकाँक्षाप्रपूरकैः ।३६।
तदा सम्भाव्यरूपाणां सहस्रलक्षसंयुताम् ।
गणनां विधिवत्कर्तुं समर्थः कोऽनु भूतले ?? ।३७।
आत्मार्थं च परार्थं च प्रयुक्तेयं क्रिया ततः ।
प्राक्तनाचार्यपद्धत्या भवत्यष्टादशक्रमा ।३८।
यथा चैवं क्रिया दृष्टा त्वष्टादशप्रकारका ।
तथा संज्ञापदञ्चापि सम्भवत्येकविंशतिः ।३९।

क्रियया सह सम्बन्धाः सम्भवाः सप्तधा यतः ।
यथेष्टे वाक्यनिर्माणे कर्तृकर्मादिसंज्ञया ।४०।
वचनानां त्रयाणाञ्च स्थिरया सुव्यवस्थया ।
एकविंशतिरूपाणि सुबन्तानि ततः खलु ४१।
रामः रामौ च रामाश्च कर्त्तरीति व्यवस्थितम् ।
रामं रामौ च रामांश्च व्यवस्थाकर्मणि त्रिधा ।४२।
सन्ति रामेण रामाभ्यां रामैः करणकारके ।
रामाय ननु रामाभ्यां रामेभ्यः सम्प्रदानके ।४३।
अपाये रामाद्रामाभ्यां रामेभ्यश्चेति दृश्यते ।
रामस्य रामयोः रामाणाञ्च सम्बन्धमात्रके ।४४।
कारकेऽन्त्येऽधिकरणे रामे च रामयोरथ ।
रामेष्विति च रूपाणि सन्ति शास्त्रव्यवस्थया ।४५।
कर्तारो यदि योज्येरन् प्रथमोत्तममध्यमाः ।
स्वानुकूलक्रियारूपैर्वचनैश्चापि सङ्गतैः ।४६।
तदा संस्कृतवाक्यानि शुद्धशुद्धानि पाठकैः ।
निर्मातुं ननु शक्यानि प्रयत्नैरल्पमात्रकैः ।४७।
न शङ्का न च सन्देहो न चापि संभ्रमः क्वचित् ।
संस्कृते वाक्यनिर्माणे धारणा यदि निर्मला ।४८।
समासादिव्यवस्थाभिः सूत्ररूपमुपागता ।
भाषेयं संस्कृता रम्या ध्रुवं भाति गरीयसी ४९।
संस्कृता कठिना भाषा जटिला चापि दुर्गमा ।
एवं विवदमानानां रक्षित्री शारदा स्वयम् ।५०।
ततुं यो न विजानाति तदर्थं दुस्तरा नदी ।
स्वाभाविकोऽयं वृत्तान्तो नात्र कार्या विचारणा ।५१।
शिक्षणीयं सन्तरणं प्रथम सन्तितीर्षुणा
एवं कृते समुद्रोऽपि भयं नोपजनिष्यति ।५२
देववाणीरसास्वादं स्वदमानो हि केवलम् ।
निर्मदन्नु विजानाति न पुनर्मत्सरी जनः ।५३।
कापि भाषा न दुर्बोधा भूतले जटिला न वा ।
कातराणां कदर्याणां कृते सर्वं भयास्पदम् ।५४।
भारती चीनदेशीया स्वराघातव्यवस्थिता
चित्रात्मिका च दुर्बोधा विविधार्थाऽपि काकुभिः ।५५।

एवं सत्यपि भाषाया: प्रयोक्तारश्च भाषिणः ।
किन्तु सर्वाधिका: सन्ति तस्याश्चीननिवासिन: !! ।५६।

संस्कृतं चीनभाषातोऽप्यधिकं किं दुरासदम् ?
स्वतः प्रामाण्यमाश्रित्य विदाङ्कुर्वन्तु सूरय: ।५७।

त्यक्त्वाऽकारणविद्वेषं सहजां हीनभावनाम् ।
भ्रान्तिं मोहं भयञ्चापि भाषान्तरवृथारतिम् ।५८।

अमृतद्रोहिणोऽल्पज्ञा अये मैरेयशंसिन: ।
अमत्तारकनेत्राणि सकृदुन्मील्य पश्यत ।५९।

एषा नु वाङ्मयी माता संस्कृताख्या महीयसी ।
विश्वभाषाप्रसवित्री वत्सला वः समीक्षते ।६०।

एनां श्रुत्वा पठित्वा च भाषित्वाऽपि यथायथम् ।
परमां निर्वृतिं कीर्तिं यशो मानमवाप्स्यथ ।६१।

संस्कृतज्ञो नु विश्वस्मिन् भूतले कुत्र नार्च्यते ?
यदि स्यादनहङ्कारो विनीतोऽथ च कोविदः ।६२।

सत्साहित्यपरिज्ञाननिमित्तं हन्त केवलम् ।
संस्कृतं नापि चाध्येयं सन्त्यन्येऽपि च हेतवः ।६३।

— — —

ज्यौतिषं कर्मकाण्डञ्च मन्त्रतन्त्रादिविस्तर: ।
संस्कृतेऽस्ति यतस्सर्वं ततोऽध्येयन्नु संस्कृतम् ।६४।

किमर्थं जायते प्राणी किमर्थं म्रियतेऽथवा ।
चेद्यदीतीव जिज्ञास्यं ततोऽध्येयन्नु संस्कृतम् ।६५।

मृत्योरनन्तरं जीवः कुत्र गच्छत्यलक्षित: ?
किं भुनक्तीति जिज्ञास्यं ततोऽध्येयन्नु संस्कृतम् ।६६।

कथं सञ्चितकर्माणि यान्ति भाग्यस्वरूपताम् ।
यदीदं वेत्तुमाकांक्षा ततोऽध्येयन्नु संस्कृतम् ।६७।

क्रियमाणानि कर्माणि शुभान्यप्यशुभं फलम् ।
अशुभान्यपि कर्माणि कथमैश्वर्यवन्ति च ? ।६८।

सर्वेऽप्येवंविधाः प्रश्ना अनास्थाक्षोभकारकाः ।
यदि युक्त्या समाधेयास्ततोऽध्येयन्नु संस्कृतम् ।६९।

अव्यक्ताद्व्यक्तसंसारः कथमुद्याति सक्रमः ।
कथञ्च लीयते तस्मिन् सहसा सप्रतिक्रमः ।७०।

पञ्चभूतात्मको देहः आत्मनोऽस्ति कथं पृथक् ?
किंस्वरूपोऽयमात्मा च गूढगूढोऽप्यगोचरः ? ? ।७१।

श्रेयः प्रेयो विवेकाभ्यां छिद्यते मोहबन्धनम् ।
कथमेतद्यदि ज्ञेयं ततोऽध्येयन्नु संस्कृतम् ।७२।

अवेद्यवेदने शक्ता दिव्या संस्कृतभारती ।
अदृश्यदर्शने दक्षाऽप्यभेद्यभेदनोद्धुरा ।७३।

विश्वभाषाः समग्रास्तु यज्ज्ञाने क्षीणशक्तयः ।
ऋषीणां वागियं तत्र समर्था क्रान्तदर्शिनी ७४।

पारलौकिकसत्यानां ज्ञाने स्याद्यदि साहसम् ।
मुमुक्षुभिः प्रशान्तैश्च ततोऽध्येयन्नु संस्कृतम् ।७५।

पशुवज्जीवनं क्षुद्रं शोकमोहमलीमसम् ।
विधेयं यदि दिव्याभं ततोऽध्येयन्नु संस्कृतम् ।७६।

मोहलोभमदेर्ष्यादिषड्रिपुक्लिष्टबन्धनम् ।
सविवेकं यदि त्याज्यं ततोऽध्येयन्नु संस्कृतम् ।७७।

नलिनीपत्रवत्तोये वसनीयमनेहसि ।
यदाध्यात्मदृशा नूनं ततोऽध्येयन्नु संस्कृतम् ।७८।

काममर्थंकरी भूयात्सा विद्या या विमुक्तये ।
यदीदं सत्यमास्वाद्यं ततो ऽध्येयन्नु संस्कृतम् ।७९।

विश्वभाषान्तरज्ञाने यदि स्याद्रुचिरात्मिकी ।
निर्विशंकं निरातङ्कं ततो ऽध्येयन्नु संस्कृतम् ।८०।

संस्कृतं विश्वभाषाणां मूलमत्र न संशयः ।
भाषासमीक्षयाऽप्येतत् सिद्धमेव विना श्रमम् ।८१

क्वचित् त्रिवस्टी क्वचित् षष्टिः क्वचित्त्रि श्री क्वचित पुनः ।
क्वचित्केमल् क्रमेलश्च क्वचित्किं दृष्टमन्तरम् ? ।८२।

अधीती संस्कृतस्यैकः समग्रेऽपि महीतले ।
सुखं दिग्विजयं कर्तुं क्षमते नात्र संशयः ।८३।

संस्कृतश्लोकमाधुर्यं विनाऽप्यर्थप्रकाशनम् ।
सामान्यजनसम्मर्दं मदयत्येव साग्रहम् ।८४।

प्रतिकाण्डं यथा गाढाद् रसो गाढतरो भवेत् ।
इक्षुदण्डे तथैवात्र श्लोके संस्कृतवाङ्मयी ।८५।

संगीतमयता हृद्या भावश्चापि सुधामयः ।
छान्दसी माधुरी रम्या संस्कृतस्यास्ति दुर्लभा ।८६।

संस्कृताऽमृतगर्भा वाग् देवचारित्र्यशंसिनी ।
यां पठित्वाऽनभिज्ञोऽपि कलां दैवीं समश्नुते ।८७।

काव्य-शास्त्र-पुरावृत्तवेदवेदाङ्गमण्डिता ।
कामधेनुश्चतुष्पादा संस्कृता वागियं मता ।८८।

सर्वकामदुहा दिव्या प्रवरा नन्दनाश्रिता ।
संस्कृता कल्पवल्लीयं नित्यपुष्पा महीयसी ।८९।

सुवर्णपुष्पां पृथिवीं चिन्वन्ति पुरुषास्त्रयः ।
संस्कृताधीतिनो गेहे पौत्रः पुत्रः पितामहः ।९०।

जातो न जातको यस्मिन् संस्कृतज्ञो गृहाङ्गणे ।
वृथैव तस्य निर्माणे प्रतीता वास्तुसारणी ।९१।

संस्कृतज्ञविहीनं तद् गृहमैश्वर्यमण्डितम् ।
नक्षत्रमण्डितं व्योम चन्द्रहीनं प्रतीयते ।९२।

संस्कृतेनैव संस्काराः संस्कारैरेव संस्कृतिः ।
संस्कृत्यैव भुवि ख्यातं राष्ट्रमार्यं नु भारतम् ।९३।

सत्स्वपि द्रुमपुञ्जेषु यथा चन्दनशाखिना ।
मलयोद्भिर्भुवि ख्यातस्तथा संस्कृतभारतम् ।९४।

संस्कृतेन समायुक्तो दुरारोहोऽपि मानवः ।
मणिना भूषितो भोगी महार्घः सम्प्रतीयते ।९५।

यद्यवश्यमधिग्राह्या भारती काऽपि जीवने ।
कथं न संस्कृता वाणी दिव्यपेयशिवामृतम् ? ।९६।

अल्पप्रयत्नमात्रेण शिक्षिताः शुकसारिकाः ।
संस्कृतं यदि भाषन्ते मानवाः कथमक्षमाः ? ।९७।

नवप्रभातमायात भद्र ! जागृहि जागृहि ।
उदेति दिशिपूर्वस्यां पश्य संस्कृतभास्करः ।९८।

संस्कृतेन प्रभातं स्यान्मध्यन्दिनमथो तथा ।
संस्कृतेन भवेत्सन्ध्या संस्कृतेनैव यामिनी ।९९।

जननं संस्कृतेनैव संस्कृतेनैव जीवनम् ।
मरणं संस्कृतेनैव लोकान्तरगतिस्तथा ।१००।

मिश्रो ऽभिराजराजेन्द्रो देववाणीसमर्चकः ।
विश्वविद्यालये दिव्ये शिमलाख्ये मनोरमे ।१०१।

नियुक्तसंस्कृताचार्यस्त्रिवेणीकविसंज्ञितः ।
प्रश्नोत्तरं ददातीह कुतोऽध्येयन्नु संस्कृतम् ।१०२।

युग्मग्रहग्रहेन्दवब्दे खृस्ते मासे सितम्बरे ।
त्रयोविंशदिने पूर्णं काव्यमेतद् बुधे मया ।१०३।

॥ इति दुर्गाप्रसादाभिराजीसूनुनात्रिवेणीकविना ॥
ऽभिराजराजेन्द्रेण प्रणीतं संस्कृतप्रशस्तिकाव्यं प्रपूर्णम्

— संस्कृतविभागः हि. प्र. वि. वि.






# समीरणः गायताम्



— त्रिपाठी भास्कराचार्यः
सचिवः — म. प्र. संस्कृत अकादमी भोपाल



उपवन–केदारेषु सान्ध्यमंदिरः समीरणः
किन्तु न जाने, क्षितिजे किमसौ वाष्पयते नन्दनपरम्पराम् १
वन्या दरगोधूमवर्णिनी चम्पकलतिका
पल्लविता परिमलकञ्चुकिनी स्वयंदूतिका
क्षणपरिचयरेखा गन्धर्वनगरलेखा रे
द्वारे द्वारे. शीलयते सीत्कृतिमेदुर - वन्दनपरम्पराम्
उपवनकेदारेषु ... ... २
सहसोन्मिषिते अपिततारके हीरकतरले
मेघपटलगोपायमान-पारावतशबले
चेतसि शून्याकाशनिर्मले ते त्वाते
कथय कथं रे, क्षणं वीक्षिते युगकलया स्पन्दनपरम्पराम्
उपवनकेदारेषु ... ... ३
पङ्क्लिकल्पनया नूतनसुमवृन्तविरचनम्
कीदृशमिदं शुभ्रतायां चित्रलपल्लवनम्
शनकैः सङ्कोचिता मेदिनी सहजविकासैः
कलनिश्वासैर्, वारं वारं स्रंसयते बन्धनपरम्पराम्
उपवनकेदारेषु ... ४

# संस्कृतनाटकस्योद्भवो विकासश्च

—रमा कुमारी



नाटकस्योद्भवः कदा कथमभूत्. कथं च तद् विकासक्रमम् अतिक्रम्य इदानीन्तन रूपम् अध्यगात् इत्ययम् प्रश्नोऽतीव विवादग्रस्तो वर्तते । प्रश्नमिमं समाधातुम् अनेके प्राच्याः पाश्चात्याश्च विद्वांसः बहुविधम् अनुसन्धाय स्व स्व सिद्धान्तं उपास्थापययन् । तेषु केचन प्रमुखाः सिद्धान्ता नीचैरुद्ध्रियन्ते—

## वीरपूजा-सिद्धान्तः

वहुषु देशेषु मृतेभ्यो वीरपुरुषेभ्य साभिनयं सम्मानम् प्रदर्श्यते । सैव वीरपूजा अस्माकं देशे प्रचलितं रामलीला, कृष्णलीलादिवीरपूजाया एवोदाहरणम् । डा० रिजवे नामकस्य पाश्चात्यविदुषो मते अस्याः वीरपूजाया एव नाटकोत्पत्तिः सञ्जातेति । अयं सिद्धान्तो नादरणीयः केषाञ्चित ।

## प्रकृतिपरिवर्त्तन-सिद्धान्तः

अस्य सिद्धान्तस्य उद्भावकः कीथ-महोदयः । तन्मते प्राकृतिकम् परिवर्तनं द्योतयितुं कृतैः अभिनयादिव्यापारैः नाटकमुद्भूतम् । महाभाष्ये उल्लिखिते कंसवधनामकनाटके कंसपक्षीयानां जनानां कृष्णम् मुखम् हेमन्तर्तोः कृष्णपक्षीयानां रक्तम्मुखञ्च वसन्तर्तोः द्योतकम् आसीत् । तेन हेमन्तोपरि वसन्तस्य विजय प्रदर्शनमेव अभीष्टमासीत् । अयमपि सिद्धान्तो न मान्यः ।

## पुत्तलिकानृत्यसिद्धान्तः

भारतसहितेषु कतिपयदेशेषु पुत्तलिका नृत्यस्य परम्परा वर्त्तते । डा० पिशेलमहोदयो मन्यते यत् इदम् पुत्तलिकानृत्यमेव नाटकानाम् उद्भवभूमिः । अत्र सूत्रधार' इति शब्द एव प्रमाणम् । पुत्तलिकानृत्ये नेपथ्यस्थ एको जनः सूत्रैः पुत्तलिकाः नर्त्तयति । तदनुकृतावेव नेपथ्यस्थं नाटक-संयोजकं सूत्रधारं वदन्ति, इति तस्य मतम् । अयं सिद्धान्तोऽपि प्रतिष्ठां न प्राप्नोत् ।

## मई-पोल-सिद्धान्तः

पाश्चात्यदेशेषु मईमासे विस्तृते कस्मिंश्चित् स्थाने दीर्घवंशमेकं निखन्य, तत्र जनाः नृत्यन्ति अस्माकं देशे प्रचलितः इन्द्रध्वजोत्सवोऽपि तथैव । कतिपयपाश्चात्यविदुषाम् मते अस्मात् पोलनृत्यादेव नाटकं क्रमशो विकासं लेभे । अयमपि सिद्धान्तो विद्वद्भिर्न समादृतः ।

## भारतीयः पारम्परिकसिद्धान्तः

भारतीयाः सर्वमिदं जगत् ईश्वरसृष्टम् मन्यन्ते । तेषाम् मते एकेश्वरः ब्रह्माणीं शक्तिमाश्रित्य विश्वं सृजति, वैष्णवीमाश्रित्य बिभर्त्ति रौद्रीं चाश्रित्य संहरति । तदनुसारम् ब्रह्मा एव अन्यविद्यानामिव नाट्यविद्याया अपि स्रष्टा । ब्रह्मणा नाट्य-निर्माणस्य कथा भरतमुनेः नाट्यशास्त्रे दृश्यते ।

## साचेत्थम् :

सर्वान् सांसारिकान् नरान् क्लिष्टान् विलोक्य इन्द्र-प्रमुखा देवा ब्रह्माणं नवीनमेकं वेदं स्रष्टुम् अयाचन्त, येन वेदेऽनधिकृतानां स्त्रीशूद्रादीनामपि मनोरञ्जनम् भवेत् । तच्छ्रुत्वा ब्रह्मा ऋग्वेदात् पाठ्यम्, सामवेदाद-

गीतम्, यजुर्वेदाद्-अभिनयम्, अथर्ववेदाद् रसांश्चादाय नाट्यं नाम पञ्चमं वेदमसृजत्।

"जग्राह पाठ्यमृग्वेदात् सामभ्यो गीतमेव च ।
यजुर्वेदादभिनयान् रसानाथर्वणादपि ॥"

ब्रह्मा देवेष्वस्य नाट्यवेदस्य प्रचारार्थम्: इन्द्रम् आदिशत्। इन्द्रोऽवदत् पितामह, नैते देवा नाट्यकर्मणि कुशलाः सन्ति, वेदमर्मज्ञा मुनय एव वेदस्यास्य ग्रहणे प्रयोगे च समर्थाः सन्ति। ततो ब्रह्मणा निर्दिष्टो भरतमुनिः स्वपुत्रान् वेदमिमम् अशिक्षयत्। ते इन्द्र-ध्वजोत्सवस्य अवसरे नाटकमिदम् अभिनीतवन्तः। तद् दृष्ट्वा सर्वे देवाः प्रसन्नाः पात्रेभ्यः पारितोषिकम् प्रायच्छन् किन्तु नाटके दैत्यानामपकर्षं दृष्ट्वा क्रुद्धा दैत्या विघ्नं कर्तुमारेभिरे। तदा दैत्यानां विघ्नेभ्यः नाटकस्य रक्षार्थम् इन्द्रः— विश्वकर्माणं नाट्यगृहनिर्माणार्थम् आदिशत्। क्रुद्धान् दैत्यान् प्रति ब्रह्मोवाच—नाट्यवेदोऽयं यथा देवानां तथैव दैत्यानामपि। त्रैलोक्येऽस्मिन् यावन्तोऽपि भावाः सन्ति, सर्वेषां तेषाम् अनुकीर्त्तनं नाट्येऽस्मिन् वर्त्तते। त्रैलोक्यस्यास्य सर्वस्य नाट्यम् भावानुकीर्त्तनम्। धर्मः, क्रीड़ा, हास्यं, युद्धं चैते सर्वे विषयाः सन्ति नाटकेऽस्मिन्। नास्ति तद् ज्ञानं, नास्ति तच्छिल्पं, नास्ति साकला, यन्नाटकेऽस्मिन् न दृश्यते।

"न तज्ज्ञानं न तच्छिल्पं न सा विद्या न सा कला ।
न स योगो न तत् कर्म नाट्येऽस्मिन् यन्न दृश्यते ।"

इयमेवास्ति संक्षिप्ता कथा नाटकोत्पत्तेः। अयमेवास्ति च भारतीयः सिद्धान्तः। अस्य भारतीयसिद्धान्तस्य अनुसारं ऋगादिभ्यश्चतुर्भ्यो वेदेभ्य एव नाट्यनामकस्य पञ्चमस्य वेदस्योत्पत्तिः अभवत्।

वस्तुतो वेदेभ्यो नाटकोत्पत्तिः वर्तते सुदृढ़ आधारः। संवादः, सङ्गीतम्, नृत्यम्, अभिनयश्चेति सर्वाण्यपि नाटकस्य प्रधानाङ्गानि वेदे अन्तर्भूतानि सन्ति। वेदे अनेकानि सूक्तानि येषु एकाधिकवक्तॄणां कथोपकथनं वर्त्तते। इमानि संवादसूक्तानि कथ्यन्ते। जर्मन विद्वान डा० श्रोडर, डा० हर्टल, डा० ओल्डेनवर्ग डा० पिशेल प्रभृतयो विद्वांसः एषु संवादसूक्तेषु एव नाटकस्य बीजम् पश्यन्ति। संवादसूक्तेषु अन्यतमम् उर्वशीपुरुरवयोः सूक्तम्, कालिदासस्य

'विक्रमोर्वशीयस्य सारो वर्त्तते इति प्रत्यक्ष-प्रमाणम् पक्षमिमं पोषयति। सामवेदस्य गेयत्वम् प्रसिद्धमेव । वैदिकयज्ञेषु अनेके कर्मकाण्डा अभिनयपूर्वकं सम्पाद्यन्ते । अतोवेदेभ्यः नाटकोत्पत्तिः अभूत् इति कथनं युक्तिसङ्गतम् अस्ति । वेदी—चत्वरादिसमेता यज्ञशालैव नाट्यमञ्चस्य प्राचीनतमं रूपमस्ति ।

अस्मिन् प्रसङ्गे इदं ध्यातव्यं यत् नाटकस्य यद् रूपम् इदानीं दृश्यते, तद् न वेदेभ्यो निर्गतम् । वेदेभ्यो विकसितेषु नाटकेषु शनैः शनैः अनेके विशेषाः स्थानं लेभिरे । तथापि इदं तु सम्भाव्यत एव यत् नाटकस्य सत्ता वैदिकयुगे आसीत् । रामायणयुगे नाटकस्य सत्तायाः सुस्पष्टं विवरणम् उपलभ्यते । रामायणे शैलूष, नट, नर्त्तकादि शब्दानाम् प्रयोगो वर्त्तते । एकस्मिन् स्थले आदिकविः कथयति यत्—

"नाराजके जनपदे प्रहृष्टा नट - नर्तकाः ।"

यस्मिन् जनपदे कश्चिद् राजा न भवति, तत्र नटाः, नर्तकाश्च न दृश्यन्ते । अतः नटशब्दः अभिनेतुर्वाचकः ।

महाभारतेऽपि नट-नर्त्तक-गायक सूत्रधारादयः शब्दाः दृश्यन्ते । तद् यथा—

"आनर्त्ताश्च तथा सर्वे नटनर्त्तकगायकाः ।"

इति महाभारतस्य परिशिष्टभूते हरिवंशेऽपि नाटकाभिनयस्य भूयसी चर्चा वर्त्तते ।

पाणिनेः अष्टाध्याय्यां शिलालिना कृशाश्वेन च प्रणीतानां नटसूत्राणाम् उल्लेखो वर्त्तते । (पाराशर्यशिलालिभ्यां भिक्षुनटसूत्रयोः तथा 'कर्मन्दकृशाश्वादिनिः इति । अनेन सिद्ध्यति यत् पाणिनेः काले ५०० खृष्टाब्दे नाटकस्य समाजे तावान् नाट्यसूत्राणि अरचयन् । पतञ्जलेः समयेऽपि नाटकानाम् अभिनयो बाहुल्येन भवति स्म । "कंसं घातयति, "वलिं बध्नाति", इत्यादयः प्रयोगा अस्या प्रमाणम् ।

विक्रमात् पूर्वं चतुर्थशताब्द्याम् भासः अजायत येन 'नाटक चक्र' रचितमासीत् । विक्रमपूर्वप्रथमशताब्द्यां तु विश्वस्य सर्वश्रेष्ठः संस्कृत नाटककारः कालिदासः समभवत्, येन शाकुन्तल-सदृशं सर्वगुणविभूषितम् अमरं नाटकं रचितम् । (शेषः २७ पृष्ठे)




"साधना शास्त्री"



सुन्दरा - सरसा - सुमधुरा इयं संस्कृतभाषा
अध्ययनं करिष्याम्यहं मदियं अभिलाषा
सौम्या - रससंयुता देवैः उपहाररूपेण प्रदत्ता-
इयं भाषा मदियं अभिलाषा -
गीर्वाणभारते सरस्वती - वाणी
प्राचीनतमा क्लिष्टशब्दयुक्ता
तथापि मदसंयुता इयं भाषा
छन्दोवद्धअलंकारसंयुता
रसमाधुर्ययुक्ता इयं भाषा
अहो धन्यं त्वां संस्कृतभाषा
अध्येष्याम्यहं मदियं अभिलाषा

रा. मा. वि. नाहन (हि. प्र.)



(२५ पृष्ठस्य शेषः)

एतावता भारते अतिप्राचीनकाले एव नाटकीय उत्पत्तिः विकासश्च अभवताम्— इति सुसिद्धम् भवति।

रमा कुमारी C/o डा० उपेन्द्रझा,
संस्कृत नगर (छपकी) गैस गोदाम के पीछे
(लक्ष्मीसागर) दरभंगा—८४६००४ (बिहार)

---

(लघुकथा)

# हिरण्यकशिपुः

— डा० लेखराम शर्मा



हिरण्यकशिपुः प्रतिदिनं भगवन्तमुपास्ते। तपसा प्रसन्नो भगवान् तं वरं याचयितुं कथयति। सः प्रार्थयति—'भगवन्! नाहं दिवा म्रियेयम् न च रात्रौ, न गृहाभ्यन्तरे न च बहिर् नाकाशे न च भूमौ तथा न पशुना न च मनुष्येण' इति। भगवानुवाच- 'तथास्तु' कशिपुः वरदानं प्राप्य महतीं सम्पत्तिमर्जयत्। भोगेषु मग्नः वरदातारं भगवन्तं व्यस्मरत्। स सर्वतः स्वदेहमरक्षत्। दिवा, रात्रौ, भूमौ आकाशे च काऽपि तं मारयितुं न शक्नोति स्म। पर 'भोगाः न भुक्ताः वयमेव भुक्ताः' इत्युक्तिं चरितार्थयन् तस्य शरीरं शनैः शनैः क्षीणतां याति। इन्द्रियाणि शिथिलानि सञ्जातानि। इन्द्रियाणां व्यतिरेकात् दिने रात्रिर्दृश्यते। गृहाभ्यन्तरे बाह्यं जगदनुभूयते। एकस्मिन् दिने भगवान् कालरूपेण कशिपोः प्राणान् कर्षति एवं भगवता पूर्वदत्तं वरदानं सत्यापितम्।

असुराणां शृंगाः न भवन्ति। मनुष्यस्य एका मनोवृत्तिरेव आसुरं भावं प्राप्य तथाभूतं वरदानं च याचित्वा स्वर्गतिं लभते।

— प्राध्यापकः
राजकीयः संस्कृत महाविद्यालयः
सोलनम् (हि. प्र.)




# सुदामचरितम्

प्रणेता:– डा० इन्द्रदत्त द्विवेदी ।

प्राप्तिस्थानम्:- भारती साहित्य परिषद्

३/७२ विश्वास खण्ड.

गोमती नगर, लखनऊ (उ० प्र०)

मूल्यम् :: एकशतं रूप्यकाणि १००

डा० श्री इन्द्रदत्त द्विवेदिमहोदया

लखनऊस्थे (लक्ष्मणपुर) केन्द्रीयसंस्कृतविद्यापीठे प्राध्यापका: (रीडर) सन्ति । भवद्भि र्विरचितमिदं महाकाव्यं सुदामचरितमिति नवीना किलास्य रचना एकविंशति-- सर्गात्मिका ।

काव्येऽस्मिन् कविना त्रिंशत् छन्दसां प्रयोगो विहित:। सर्गनामानि चेत्थम्:— विद्यालयगमनम् ।

समिदाहरणम् । छन्दो वर्षा । मित्रान्वेषणम् मुनिदर्शनम् । मुनिवर्णनम् । सदुपदेश: । परावर्तनम् । गृहमार्ग: । भुक्ति: । भार्यानुनीति । शिक्षणम् । जीवनपथम् । द्वारिकापुरीवर्णनम् । राजनीतिसम्वाद: । गृहागमनम् । पुर्नमिलनम् । भवभोग: । गृहत्याग: । मुक्तिश्चेति ।

काव्येऽस्मिन्—नूतनछन्दसामपि प्रयोग: कविना कृत: । सेयं नूतना उपलब्धि: । मुद्रणं शुद्धम् ।

कविरयं संस्कृतजगति नापरिचित: । मन्ये विद्वांस: काव्यस्यास्य स्वागतं करिष्यन्ति येन कविरयं पुनरपि स्वसरसरचनाभि: संस्कृत-साहित्यागारं प्रवर्धयेत ।

— दिव्यज्योति: समीक्षाविभाग:



# संस्कृतदिवसोत्सवः सुसम्पन्नः

चुनार । अगस्त मासस्य १३-८-९२ तारिकायां श्रीमती भागीरथी ट्रष्टादर्शसंस्कृतमहाविद्यालये परगनाधिकारिणां स्वनामधन्यानां श्रीमतां संकटा प्रसादत्रिपाठि—महोदयानां मुख्यातिथित्वे आचार्य प्रवराणां पं० श्रीरामप्यारेमिश्रमहोदयानामाध्यक्ष्ये संस्कृतदिवसस्य कार्यक्रमः समायोजितोऽभूत् । क्रमादौ महाविद्यालयस्य प्राचार्यवर्यैः पं० श्रीगणेशप्रसादमिश्रमहोदयैः समागतातिथीनां स्वागतं व्याहरद्भिः कार्यक्रमः सञ्चालितः । सम्मेलनेऽस्मिन् मुख्यातिथित्वेन परगनाधिकारिमहोदयैः स्वीयेऽभिभाषणे उक्तं यज्जीवने सर्वविधकल्याणाय संस्कृताध्ययनं परमावश्यकम् । एतदनन्तरं सभाध्यक्षैः पं० श्रीरामप्यारेमिश्रमहोदयैः अध्यक्षपदेन स्वोक्तौ भणितम्, यत् भारतीयसंस्कृतेः प्रचारायानिवार्यतः सर्वैः संस्कृतमध्येयम् इदमेवास्माकममूल्यो निधिः संस्कृतेश्च सुदृढतम आधारोऽस्ति । सभायामनेकैः विद्वद्वरेण्यैः पं० श्री चन्द्रधरचतुर्वेदि डा० ब्रह्मानन्द शुक्ल, उपेन्द्र-चतुर्वेदि, नन्द किशोर त्रिपाठि, कृष्ण कान्त शुक्ल, सूर्यनारायणकानडे, अम्बिका प्रसाद त्रिपाठि, वीरेन्द्र चतुर्वेदि काशी प्रसाद मिश्रादिभिरपि संस्कृतप्रचारप्रसाराय स्वीया महनीया विचाराः प्रकटिताः ।

अस्मिन्नेवावसरेऽवकाशप्राप्ताधुनिकसहायक प्राध्यापकस्य श्रीरामनिरञ्जन शुक्लमहोदयस्य सौप्रस्थानिकं शुभाभिनन्दनमपि सञ्जातम् ।

अन्ते महाविद्यालयस्य गौरवभूताः प्राचार्यमहोदयाः धन्यवादान् व्यतरन् । अनन्तरं च गोष्ठी विसर्जिता ।

—

# अ० भा० संस्कृतपत्रकारसम्मेलनम् -दिल्ली

पत्रकारिता समारोहः-

नव्या उपस्थिताः केचित्, प्रत्नाश्चैवानुपस्थिताः,
यथा पूर्वं स्थिता तेन संख्या तत्रोपवेशने ।१।

अन्तिमे दिवसे किंच स्वल्पकालाय वै समे,
छन्दांस्यश्रावयन् प्रीत्या विनोदार्थं समुत्सुकाः ।२।

महिलाश्चाप्यदृश्यन्त तिस्रस्तत्र समागमे,
स्व स्व प्रदेशवृत्तञ्च प्रास्तुवन् सर्वं एवहि ।३।

पत्रकार संघ विषये

द्विर्षद्वंभवतात तावत् सुवद्धमनया दिशा,
पर्यालोचन्त सर्वेऽपि महासंघं कृतं पुरा ।४।

विग्रहे चान्तरंगस्य स्त्रियश्चापि निवेशिताः
सर्वमन्यद् यथा पूर्वमतिष्ठत् संघविग्रहे ।५।

पंचीकर्त्तुम् हि संघस्य प्रक्रिया साधिताऽभवत्,
संविधानं कृतं चैव तत्रादृश्यत्त वत्सरे ।६।

अन्तरंगजनाः किंच त्रिवारं सम्मिलन्त्वथ,
चतुष्षु मास्सु यत्रापि यदाऽपि निश्चितं भवेत् ।७।

इतीत्थं घटितं तत्र चोपन्यस्तं समासतः,
वृत्तं प्रकाशितं चैव प्रहेष्यामि भवत्कृते ।८।

— सत्यदेव वर्मा
सम्पादक – हितसाधिका, हर्याणा



# सम्पादकीयम्

## नववर्षप्रवेशः

मान्याः ! दिव्यज्योतिषः पाठक-लेखक-संरक्षकमहानुभावाः ? भवतां सेवायां परमविनीतभावेन पत्रस्य सप्तत्रिंशत्तमवर्षस्यायमाद्योऽङ्कः उपायनी क्रियते । गतदशकानि नियमितरूपेण प्रकाशनेनानेन यया सफलतया, येन गौरवेण च पूरितानि तच्छ्रेयो भाजः सन्ति भवन्तः सर्वे । आचार्यवर्यैः—यो हि आर्थिकसहयोगः प्रतिमासं प्रतिवर्षं प्रतिदिनं वा कृतस्तत् पत्रस्याधार एवास्ति । मयाऽपि समस्तजीवनं प्रायेण स्वकीयजीवनस्य सप्तत्रिंशत् स्वर्णिमवर्षाणि पत्राय सविनयं समर्पितानि ।

एतस्य सर्वस्य पृष्ठे एका आशासीत् एकं चिन्तनमासीत् आसीच्चैकस्य नवसंस्कृत संसारस्य कल्पना यत्र संस्कृतसम्बन्धिप्रचारप्रसारकार्याणि स्वच्छन्दानि स्युः, कस्यचिदग्रे च तत्सञ्चालनाय हस्तप्रसारणस्यावश्यकता न स्यात् । परन्तु गतसप्तत्रिंशत् वर्षाणामनुभवः स्पष्टयति यत् संस्कृतज्ञाः—अद्यापि सर्वेभ्यः पृष्ठवर्तिनः सन्ति, लोकास्तु न केवलं पृथिव्यां धावनिकायाम् सततमग्रेसराः सन्ति परन्तु महासागरेऽनन्तनीलाकाशेऽपि च तेषां गतिरोधो नास्ति । एतद्विरुद्ध संस्कृतोपजीविनां दशा प्रायेण हास्यास्पदा । त एवास्यां धावनिकायां सर्वेभ्योऽपि पृष्ठवर्तिनः सन्ति ।

मुस्लिमप्रशासनकालः स्यादथवा आँग्लानामत्र शासनं स्यात् । सर्वदा संस्कृतज्ञाः पृष्ठवर्तित्वमेव विचारमादाय संस्कृतप्रचारप्रसारक-

मेणि बाधारूपेण स्वयमेवोपस्थिता येनास्याः सुरवाण्या दुर्दशेयं जाता याऽद्यास्माकं समक्षमस्ति । सेयं देवभाषा न कदाप्यस्मान्– क्षमादान करिष्यतीति, साम्प्रतञ्च– भग्ने स्वीये स्वप्ने ब्रवीमि स्पष्टम् सर्वेषां पुरतश्च लिखामि ।

सर्वे जानन्ति पठिता अपठिता यत्—पत्राणि देशे कस्या अपि भाषायाः कस्यापि विचारस्य, कस्या अपि संस्कृतेः प्रसारकाणि भवन्ति साम्प्रतिके युगे । परन्तु संस्कृतज्ञाः कदापि तन्न चिन्तयन्ति । पञ्च, षट्–सप्तसहस्रवेतनभोगिनः संस्कृत प्राध्यापकाः, सहस्रत्रय-मासिकवेतनभोगिनः संस्कृताध्यापकाः संस्कृतस्य एकमपि पत्रं न पठन्ति क्रीत्वा । अत्र समस्तभारते शतोत्तरा अपि अपवादरूपाः काठिन्येन मिलिष्यन्ति । अस्माभिः प्रतिवर्षं सहस्रशस्तादृशाः महानु-भावाः पत्रैः प्रार्थ्यन्ते । उत्तरदानाय पत्रं साकमेव संयोज्यते परन्तु तदुत्तरपत्रमपि लोपमेति । एतल्लेखनस्यापि 'कष्टं न कुर्वन्ति संस्कृत-हितेच्छुकाः, संस्कृतेनोपलब्धवृत्तयः यद्वयं सदस्यताग्रहणेऽसमर्थाः कियानुपेक्षाभावोऽस्माकं संस्कृतज्ञेषु कियती च कर्तव्यशून्यता ? अतो निःसन्देहं सुरभारती स्ववर्चस्वेनैवाद्यापि भारते विभाति ।

अस्माभिर्न कदापि संस्कृतपत्रमर्थं प्राप्तये आजीविकायै वा निष्कासितम् पत्रकाशनस्य लक्ष्यस्तु अयमेवासीत् अस्ति च यत् संस्कृतभाषा एका सजीवभाषा वर्तते यस्यां सर्वमपि कार्यजातं कर्तुं पार्यते । यस्याः शब्दराशितः न केवलं भारतीया भाषाः जीवन्ति अपितु विश्वभाषाः प्राणान् धारयन्ति, षट्त्रिंशत् वर्षपर्यन्तं एकलैः धनमपि दत्तम्, शारीरिकी निःशुल्कसेवाऽपि प्रदत्ता तदपि सर्वस्यापि कार्यस्य काचित् सीमा भवति गतमासीयाङ्के मया सर्वेऽपि पाठकाः लेखकाः अस्माकं पथप्रदर्शनाय सम्बोधिता आसन् परन्तु तैकेनापि काचिदपि स्वीया प्रतिक्रिया व्यक्तीकृता । किमस्माकं समाजोऽयं संस्कृतज्ञानां मृतप्रायो वर्तते किमिदमेव तु कारणं नास्ति यदियं अमरभारती मृतभाषेति उच्यते कैश्चिदाधुनिकैः सम्भवत इदमेव कारणं भवेदिति मया संस्कृतजगति बहु वर्षाणि निष्कामभावेन कृतायाः सेवायाः पश्चात् ज्ञातम् ।

केचन संस्कृतविद्वांसस्तु गतमासीय सम्पादकीय पठित्वा (यदि पठितं स्यात् — यतोहि जानेऽहमनेकान् संस्कृत पण्डितान् — ये किल गुरुवर्याणां पत्रमिदं क्रेयमिति कृत्वा क्रीणन्ति परन्तु न पठन्ति पंक्तिमपि एकाम् केचन तु तद्-बन्धनमपि न मोचयन्ति तथैव च मार्जित वस्तु प्रक्षेपणपेटिकायां प्रक्षिपन्ति। प्रसन्नाः स्युर्यदिदं दिव्यज्योतिः पत्रं शीघ्रमेव समाप्तिमेष्यति — ईर्ष्यावशात्। षड्रिपुतः संरक्षणविषये वयमन्यान् — उपदिशामः स्वयञ्च तेषां बन्धनेषु तथा बद्धाः स्म यथा न अन्ये समाजस्य जनाः। अस्तु नाम तत्। मया यन्निवेद्यमासीत् तन्निवेदितम्। पुनरपि जागरूक सेवापरायण सुसंस्कार सम्पन्न-श्रद्धाविश्वास धारकान् सहयोगिन पाठकान् लेखकान् - विशेषत-श्चानेकसंस्थामुख्यान् ये समस्तभारते प्रकीर्णा सन्ति पूर्ववत्-अधिकाधिक-सहयोगप्रदानाय प्रार्थये। मन्ये सहृदयाः सुहृदोऽत्र विचार्य पत्रस्य साहाय्यं द्विगुणोत्साहेन करिष्यन्ति।

यतोहि सर्वत्र आर्थिक सङ्कटमस्ति अतः नव वर्षतः वा. मू. ५० रु० क्रियन्ते। मन्ये सहयोगिनस्तदिद मपि विषपानमवश्यं करिष्यन्ति। अस्माभिस्तु षट्त्रिंशत — वर्षेषु विषमेव पीतं पुनरपि द्विगुणोत्साहेन तत्पानाय सन्नद्धाः स्म। केवलं राजराजेश्वर्याः जगदम्बिकायाः कृपा सर्वदाऽस्मासु तिष्ठेत् — इति सविनयं प्रार्थयन् — भवतां सर्वेषां कल्याणं कामयन् दीपमहोत्सवस्य च शुभकामनाः सादरं सविनयं सस्नेहञ्चोपायनी कुर्वन् विरमामि।

— केशव शर्मा



मुद्रकः प्रकाशक :—

भारतीमुद्रणालय भारती विहार, मशोबरा - शिमला १७१००७ (हि. प्र.)

स्वामी:- श्रीमती आचार्य रत्नकुमारी शर्मा,

दूरभाष : [78459 8-200]

अक्तूबर १९९२ कार्तिक २०४९ — वर्षम् — ३७ अङ्कः १

वार्षिक मूल्यम् ५० रु०

R. N. 3384/57 ल- 33/एस. एम. / 10/91

# संस्थान के प्रकाशन

१. फलादेश कल्पतरु: (मूल संस्कृत में)
हिन्दी अंग्रेजी टीका सहित ४० वर्ष के अनुसन्धान और अनुभव पर आधारित जातकफल कहने का अनुपम ग्रन्थ ... मू. ७०-००

२. संस्कृत कोशवाङ्मयम् (संस्कृत में)
संस्कृतकोशसाहित्यपर अनुसन्धानपूर्ण विवेचन ... मू. १७५-००

३. झञ्झा (संस्कृत में)
शेक्सपीयर के द टेम्पेस्ट नाटक का सचित्र रूपान्तर ... मू. ५०-००

४. हिमाचलप्रदेशे संस्कृतस्य प्रसारो विकासश्च (संस्कृत में)
हिमाचल में संस्कृत के प्रसार विकास की विस्तृत कहानी ... मू. ५०-००

५. वैजयन्ती (हिन्दी काव्य)
नवीन प्राचीन विचारधाराओं का गीतिमय समन्वय ... मू. १५-००

६. सूनृता (संस्कृत काव्य)
आधुनिक गीतों में गुम्फित अनुपम उपहार ... मू. २५-००

७. शक्तिसौरभ (हिन्दी में)
संस्कृत लेखिकाओं का इतिहास ... ... मू. १५-००

८. विचारामृत (हिन्दी में)
आचार्य जी के विभिन्न विषयों पर जीवनोपयोगी लेख दो भाग मू. १५-००

९. पथ्यापथ्यविनिर्णय
सं. हिं. टीका सहित आयुर्वेद का दुर्लभ ग्रन्थ ... मू. २०-००
(डाकव्यय सर्वत्र पृथक्)

१०. सरिता
(अभिनव सं. कथानिकाएं) ... मू. ५० ००

११. हिमानी
(संस्कृत काव्य हिन्दी अनुवाद सहित) ... मू. १००-००

सम्पर्क सूत्र :-
सचिव,
**संस्कृत शोध संस्थान**
भारती विहार मशोबरा
शिमला (हि. प्र.)

# दिव्यज्योतिः

संस्कृतस्य सचित्रमासिकम्



सर्वस्वं देशसेवायै येन दत्तं हुतात्मना
भारतस्य समृद्धिश्च प्रयासैस्तस्य सम्भवा ।१।
यस्य कृपाप्रसादेन प्रदेशोऽयं हिमाचलः
सञ्जातश्च सुसम्पन्नः सोऽयं वीरजवाहरः ।२।



शिमला नवम्बर, १९९२

वर्षम् ३७ अङ्कः १

# दिव्यज्योतिः

संस्थापितम् १९५६
प्रधानसम्पादकः—
आचार्य केशव शर्मा



संस्थापकाः तथा
आद्यसम्पादकाः
आचार्यश्रीदिवाकरदत्त
शर्माणः,
राष्ट्रपतिसम्मानिताः

(पत्रमिदं हि०क० स० भा० अकादमी प्रदत्तानुदानसाहाय्यम् । पत्रिकागत-मुद्रणदोषाणां सम्पादकीयनीति-विषये च अकादमीदायित्वं नास्ति )


**हिमाचल प्रदेश—पंजाब - हरियाणा-जम्मूकश्मीर · मध्य प्रदेश—राजस्थान—महाराष्ट्र उत्तरप्रदेश शासन-स्वीकृतं केन्द्रशासनपुरस्कृतं सचित्रं संस्कृतमासिकम् ।**

## पत्रस्य उद्देश्यानि तथा नियमाः

सरलसरससुबोध-साधनैः सर्वस्मिन् संसारे संस्कृतस्य प्रसारः, साहित्यान्तर्गतानां सकलकलानां समन्वेषणं, संसारस्य हितसम्पादनम्, एवं लौकिक - अलौकिकस्वातन्त्र्यस्य प्राप्तिः ।

"दिव्यज्योतिः" प्रतिमासं पञ्चदशतारिकायाम् (आङ्ग्लमानेन) प्रकाशितं भवति

पत्रस्य वार्षिकमूल्यं ५० रु० अर्धवार्षिकं २५ रु० एकस्याङ्कस्यच रु० ४/५० भवति ।

वर्षारम्भः अक्तूबरमासतः भवति ग्राहकः कस्मादपि मासाद् भवितुं शक्नोति । ग्राहकैः, "सम्पादक, दिव्यज्योतिः, भारती विहार, मशोवरा, शिमला-१७१०० इति संकेते धनादेशेन वा. शु. प्रेषणीयम् ।

## विषयानुक्रमः

डा० मण्डन मिश्र
कुलपति

श्री लाल बहादुर शास्त्री
राष्ट्रिय संस्कृत विद्यापीठ
(मानित विश्वविद्यालय) दिल्ली

अ० शा० पत्र सं० वीसीं/सवि/92-93/3056
14-10-1992

प्रेयांस: श्रीशर्ममहोदया:

सविनयं प्रणतिपुरस्सरं भूयांसि वर्धापनानि विज्ञापयामि ।

"दिव्यज्योति:" इति संज्ञकं संस्कृतमासिकपत्रं षट्त्रिंशद्वर्षेभ्य: सुरभारतीसेवापरं वर्तते तथा च साम्प्रतं सप्तत्रिंशत्तमवर्षप्रवेशसमयेऽस्य संस्कृतपत्रस्य नववर्षविशेषांकं प्रकाशयितुं निर्धारितमिति विज्ञाय भृशं प्रसीदामि । अनेन संस्कृत मासिकपत्रेण विश्वस्मिन्नपि भारतवर्षे संस्कृतप्रसारविषये महद्योगदानं विहितं तत् संस्कृतपत्रकारसमाज-समक्षम् आदर्शो विद्यते । वस्तुत: संस्कृतपत्रकाराणाँ कर्तव्येषु संस्कृतं प्रति लोकाभिरुचिसंवर्धनं सविशेषं महत्वं भजते । एतस्य कर्तव्यस्य पूर्तये "दिव्यज्योति:" सततं सचेष्टमस्ति तथा च भविष्यति कालेऽपि "दिव्यज्योति:" संस्कृतमासिकपत्रस्वोद्देश्यप्राप्तये सततं प्रवर्ततेति कामये । अस्य पत्रस्य सप्तत्रिंशद्वर्षप्रवेशाङ्क: संस्कृतसाहित्यस्याभिवृद्धौ किमपि विशिष्टं गौरवमाधास्यतीति निश्चितं विभावयामि ।

विशेषत: पुण्यतमेऽस्मिन् प्रसङ्गेऽस्य संस्थापक-संपादकेभ्यो यश-स्विभ्य: तपस्विप्रवरेभ्य: राष्ट्रपति-सम्मानितेभ्य: आचार्य श्री दिवाकर-दत्तशर्ममहोदयेभ्य: श्रद्धासम्मानकृतज्ञताप्रसूनाञ्जलिं समर्पयामि— येषां सततसाधनाया एव पुष्पितं फलितं च "दिव्यज्योति:" स्वरूपमिदम् ।

विदुषामाश्रव:
(डा० मण्डनमिश्र:)

सेवायाम्
आचार्य डा० केशवशर्माण:
प्रधानसम्पादका:, दिव्यज्योति: शिमला
(हिमाचल-प्रदेश)



डा० अभिराजराजेन्द्रमिश्र, संस्कृतविभागाध्यक्ष,
हि. प्र. विश्वविद्यालय सुमेरुहिल, शिमला १७१००५

दिव्यज्योतिः, प्रकाशनावधेः षट् त्रिंशत् हायनानि पूरयित्वेदानीं प्रविशति सप्तत्रिंशत्तमे वर्षे इति ज्ञात्वा महान्तं प्रमोदभरमाविर्भमि । हैमाचलीं सुरभारतीसेवां संस्कृतवर्चस्वं च साधु प्रकाशयन्ती संस्कृतरसिकेभ्यश्च आकश्मीरेभ्यः सागरं यावत् स्वीयां माधुरीं वितरन्ती पत्रिकेयं नितरां वृद्धिमीयादिति कामयते जनोऽयम् ।"

वैदुषी यत्र व्याकीर्णा श्री दिवाकरशर्मणाम् ।
दिव्यज्योतिः कथं तत्र विकासं न समश्नुते ॥

—

श्री एम एल. आर्य, संस्कृतविभागाध्यक्ष.
डी. ए. वी. कालेज कांगड़ा-हि. प्र. १७६००१

दिव्यज्योतिः संस्कृत मासिकं ३७ तमे वर्षे पदार्पणं करोतीति समधिकहर्षस्यायं विषयः ।

—

डा० भगवान् मिश्र संस्कृत विद्यापीठ
टोंगना पल्ली, कर्णाटक

"......दिव्यज्योतिषः संस्कृतमासिकस्य नाम भारतस्य सर्वप्रदेशेषु मया श्रुतम् । सर्वत्र प्रशंसा भवति दिव्यज्योतिः मासिकस्य । वर्धापनानि

—

डा० कृष्णलाल शर्मा,
६७ जवाहर पार्क, सहारनपुर (उ० प्र०)

'इतनी लम्बी अवधि के लिए संस्कृत पत्र प्रकाशित करने के लिए बहुत बधाई स्वीकार करें । राष्ट्रसेवा के इस कार्य की सर्वदा सफलता चाहते हैं ।

गताङ्कादग्रे

# क्षमापुण्यचरितम्

श्रीमती लीलादयाल, बम्बई



अथ महद्विश्वयुद्ध-समये १९३८ तमाब्दाद् चिन्ता - दुःखसंपूर्णं तस्या जीवनं सञ्जातम् । स्वसुतायै साधुतमवरलाभाय चिन्ताग्रस्तासीत् । श्रीदेव्याः प्रसादेनैव बहुकालानन्तरं अनुपमो जामाता हरीश्वर-दयालुः संमिलितः । तत एकैकशो निजसहोदरा दिवं गताः । अम्बिका भद्रा राजदुर्गे, ततोऽनुजो बर्मादेशे, विजयपण्डितः स्कोटलन्डभूमौ च जयवन्तपण्डितः १९४१ अब्दे स्वाग्रजो वामनरावपण्डितश्च । ततो वामनरावस्यैकलोऽतिप्रियसुतः पञ्चदशवर्षीयः सूर्यकान्तश्च । १९४३ तमाब्दे दयितजननी उषादेवी च, नित्यविश्लेष्ये मातासुते क्षमालीले विवाहितलीलायाः प्रस्थानानन्तरं क्षमया भृशमसह्यतानुभूता । आप्रभातात् सायं पर्यन्तमुभे सहिते, सहपठने, आपणगमने, टेनिसक्रीडायां वा । अनेकदा पदानि विरच्य, सा लीलां श्रावयति स्म । विदूरादपि प्रतिदिनं पत्राणि परस्परमलिखतः । एकएव पुत्रो मन्मथो विना पित्रोरनुमतिं महम्मदीयकुमारीं परिणयत् । स्वपितृगृहं विहाय, सपरिवारोऽन्यत्र न्यवसत् । तयोः कलहप्रिययो विप्रलापेन क्षमा खिन्नाऽभूत् । वयस्को राघवेन्द्ररावोऽपि दुर्मनस्कोऽभवत् । अतीतेषु वर्षेषु, दौहित्रयो दिलीप-रणजितयोर्जन्मानन्तरं परमसन्तुष्टौ पितामहौ क्षमाराघवेन्द्रौ प्रत्यहं डिम्भिकौ दृष्टवन्तौ ।

१९४८ तमाब्दे स्वर्गंगते महात्मनि, पुण्यजीवनाख्यानोत्तरभाग-निबन्धः क्षमया संपूरितः किन्तु निजदेशीयाधिकारिणां सुरवाणीनिरपेक्षया जुगुप्सिता खिन्नतरा न तममुद्रयत् । १९६० खिस्ताब्दे लीलया चित्ताकर्षणमिदं "स्वराज्यविजयम् नाम महाकाव्यमप्रकाशयत् । २४ अध्यायानां १०४२ सुललितपद्यैः कवयित्री १९४८—४९ अब्देषु देशस्य

गुर्वर्थप्रवृत्तसंभवान् सूक्ष्मं वर्णयति यथा:— देशखण्डनम्, सेवाग्रामवृत्त-वर्णनम्, सत्याग्रहोपदेश:, विश्वयुद्धसमाप्ति:, शान्तिसन्देश:, वेवलोपन्यास:, शिमलासम्मेलनम्, वन्दीमोक्ष:, हिन्दसैनिकवन्धमोचनम्, गान्धिवङ्गाधिप-संलाप:, आन्ध्रस्मारकस्थापनम्, आन्ध्रस्तवनम्, छात्रसंदेश:, हरिजनशिक्षावेश्मोद्घाटनम्, नाविककार्यनिग्रह: मदुरा-यात्रा, पल्लीग्रामसंमेलनम्, रामनाममहिमावर्णनम्, हरिजनसहवासानु-मोदनम् गान्धिनिमन्त्रणम्, मन्त्रिसंमन्त्रणम् मन्त्रिसन्धानवैकल्यम्, रामराज्यवर्णनम्, नवविधानवर्णनम्, मसूरीयात्रावर्णनम् मन्त्रिनियो-जनम्, आकस्मिकोद्घात:, कलकत्ताविप्लव:, इत्यादि लेखने बहु परिश्रमोऽकारि दुर्दैवेन न पृथुलतमनिधे: संस्कृतस्य निर्मूल्यमाहात्म्यं न परामृश्यन्ति राज्यनेतार:। एव स्वकीयस्य देशस्यातुल्यात्मिकतां चिन्त-यन्ती, छन्दोऽलङ्कारशास्त्रपारगा क्षमा महाराष्ट्रस्य प्रियसिद्धानां तुकाराम—रामदास- ज्ञानेश्वराणां चरिता न व्यरचयत्।

'तुकारामचरितम्" तस्या: श्रेष्ठतमा कृतिरस्ति अपूर्वमहा-काव्यमेतत् १९५० ख्रिस्ताब्दे महाकाव्यस्पर्धायां आँन्ध्रसंस्कृतमण्डलेन प्रथमं विस्तारितम्। इन्द्रवज्रा उपेन्द्रवज्रा उपजाति- शिखरिणी- अनुवंशस्थ:—वसन्ततिलका—हरिणी- मन्दाक्रान्ता - शार्दूलविक्रीडितम्‌-ष्टुपछन्दोभि: संपूर्णेयं रचना नितान्तहृदयङ्गमास्ति। नवसर्गेषु क्षमा अतिदीननीचस्य पूतजीवनमाख्याति यथा मूलपुरुषप्रशंसनम्:, जन्मादि-संकीर्तनम्:, तद्वाणिज्यविनाश:, शकुन्तसन्तर्पणम्, दिनचर्यावर्णनम्, हरिगणेशभोजनम्, नष्टप्रत्यागम:, शिवाजीसमागमनम्, प्रसन्नवैकुण्ठश्च- अतिमनोरम: शिखरिणी प्रथम श्लोकोऽयम्।

महाराष्ट्रेष प्रागजनि शरदां यस्त्रिशतकात्,
तुरीयो वर्णानामपि तदितरै: पूजितगुण:।
तपस्वी निस्स्वोपि क्षितिपतिशिरोभ्यर्चितपद—
स्तुकारामस्सोऽयं जयति शृणुतैतस्य चरितम्॥

अथ काष्टमण्डपे भारतदूतावासस्योद्याने काव्यमेतत् पठ्यमानां लीलां श्रुत्वा कश्चिन्नेपालीयपण्डितवरो विस्मितोऽभूत्। विदूरात् तामधिगम्य, नि:शब्दं तत्पाठं होरार्धमश्रृणोत। ततस्तेन संप्रार्थितं यदन्यैरपि नेपालीयद्विजविद्वद्भि: श्रावणीयं महाकाव्यमिदमिति। १९५६

तमेऽब्दे लीलया "तुकारामचरितम्" नाटकीकृतम् । केचित्काष्ठमण्डपस्था भारतीयास्तन्नाटयितुं तया सम्प्रार्थिताः । तेषु मध्ये श्री सीताराम-भण्डारकरमहोदयस्तस्य धर्मपत्नी शान्तादेवी श्रेष्ठतमे पात्रे असौ सूत्रधारोत्तमः, नेपथ्याच्च तस्यानुपमा मधुरस्वरा गीतिरूपेण पद्यगायनञ्चाद्भु तं नूनमस्मरणीयमासीत । सर्वेऽभ्यागता विस्मयान्विताः पर्यतुष्यन् । ततः परं प्रतिमासत्रयं क्षमाविरचितकथाः नाटकीकृत्वा, लीलया समभिनीताः । १९६०—६४ पर्यन्तं सराज्यकुला महाधिराजानः सदैव प्रतिकार्यक्रमं नियमेन समलङ्कुर्वन् । एवं नेपालीयविद्वांसश्च ३० संस्कृतकार्यक्रमान् द्रष्टुं भारतीयदूतावासे समुपस्थिताः अथ स्वभावप्रणयिनी क्षमा स्वप्रियजननी द्रष्टुमभीक्ष्णं राजदुर्गं गच्छति स्म । एकदा १९३९ तमवर्षे गोष्ठात् स्वपितुरमूल्य रचनातालपत्रहस्त-लेख-पत्रादिनिधिस्तया संप्राप्तः केनापि मूर्खेण तत्र तत् निक्षिप्तम् । प्रतिमात्रनिचयोऽयं बहिः सुष्टु परिशोध्य, मुम्बापुरं चानीतः । ग्रन्थपत्राणि चर्मादिना छादयित्वा, तया सुरक्षितानि । केचिद्धस्तलेखाः मुख्यराज्यपुस्तकालयाय समर्पितास्तया ।

अपि च १९५२ खिस्ताब्दे समर्थमुने र्जीवनकथां १३ सर्गेषु ६७१ सुरम्यश्लोकैः (ग्रन्थोऽय यावज्जीवमर्पितमप्रकाशितमासीत )

सा ऽकथयत् । रामदासचरितं प्रायः उपजातिछन्दोविरचितमपि, गणवृत्तमन्यत् काव्येऽस्मिन् रूपलावण्येन नियुक्तवती ।

आस्कन्दो यवनैर्व्यधीयत यदा वर्षत्रिशत्याः पुरा
धर्मग्लानिरभूत्तदाऽ खिलमहाराष्ट्रावनीमण्डले ।
तत्काले समवातरत्क्षितितले संरक्षितुं पीड़ितान्,
श्रीमान् श्रीपवनात्मजः सहनुमान् सर्वोऽपि यं वन्दते ।

एतेन प्रथमश्लो केन कवयित्री स्वमहाकाव्यं सम्यगारब्धवती । अन्तिमपद्येन च देशस्यस्थितिं वर्णयति यथा ।

निस्त्रिंशबुद्धिबलतो भुविराज्यधर्मं, संस्थापनेन महितो शिवरामदासौ ।
वैकुण्ठलोकमवगुण्ठमुपागतौ तावानन्दभागभिननन्द भृशं मुकुन्दः ।।

अनुपमा खलु शार्दूलविक्रीडिता संपूर्णश्लोकान्विता "मीरालहरी" १९४५ विरचिता, या राजस्थानं वृन्दावनञ्च सुस्पष्टं वर्णयति ।

आद्यन्तं स्थितानि पदानि अलङ्कारै विभूषितानि यथा

यस्याः सौधसुवर्णगोपुरमणिर्धम्मिलचूड़ामणिः ।
सामोदामल पुष्पकीर्णसुपथाः सौभाग्यमुक्तास्रजः ।
कासारोऽब्जपरागवारिविमलः सच्चित्रहेमांशुकं,
सा कुरवीति पुरा बभूव नगरी, लावण्यभूर्मालवे ।।
(शार्दूलविक्रीड़ितम्)

इष्टं सर्वत्रापि सावयवं रूपकमलङ्कारः ।

अपि च । निःशेषैः शुभलक्षणैः श्रितवपुः सुक्षत्रियेन्द्रोद्भवा,
बाल्यादेव निदर्शिताद्भुतरसा श्रीकृष्णनामामृते ।
मीराख्या निजजन्मना पुरमिदं चक्रे परं पावनम्
शैलेन्द्रं गिरिजेव मैथिलिकुलं सीतेव पूतात्मना ।।

यथा पार्वती हिमालयं पवित्रेणात्मना पावनं चकार, यथा सीता मिथिलाभूपतेः

कुलं पावनं चकार, तथा मीरा स्वजन्मना पुरमिदं पावनं चक्रे ।
इति उपमालङ्कारः तृतीये श्लोके तु संदेहालङ्कारो विद्यते ।

बालेन्दुः किमयं विभाति न दिवा, तत्कान्तिरेतादृशी ?
किं वा कैरविणी परं निशि हि सा जागर्ति संहासिनी ।
मूर्तिः किं कनकद्रवोपखचिता ? तस्याः कुतो विभ्रमा ?
इत्येनामवलोक्य कौतुकवशश्चक्रे विकल्पाञ्जनः ।।

अथ संलापमपि शार्दूलविक्रीडितच्छन्दोद्वारा सा मुदा वर्णयति यथा ।

वत्से ! तात! परित्यज भ्रममियं, को नु भ्रमस्ते मतो ?
व्यासङ्गस्तव हेयवस्तुनि, कथं हेयं हरेरर्चनम् ?
मूर्तिप्रीतिरनन्तदुःखजननी हर्षप्रदा सा तु मे ।
हृष्येस्त्वं गृहिणीपदे, कथमदः पत्युः प्रसादेन ते ।।

अपरश्च संख्यालङ्कारः ।
सानन्दं स्वपुरीं पुन प्रविशति श्रीसंगबन्धुब्रजे,
कन्यारत्ननरेन्द्रसूनुसहिते वद्धोत्सवाडम्बरे ।

गायन्ति प्रकिरन्ति लाजकुसुमं कुर्वन्ति चारात्रिकं,
सूताः सौधगताङ्गनाः प्रतिगृहं सौभाग्यवत्यः स्त्रियः।। ३७

कासारे कमलावलिः कलयति म्लानत्वमाकस्मिकं,
हंसास्तस्य तटे निवृत्तगतयस्तिष्ठन्ति दूरे ह्रिया।

मीनाः संकुचितेक्षणाश्च विमुखा मज्जन्ति नीचैर्जले,
जायन्ते परुषस्वराः परभृताश्चैत्रेऽपि मीरान्तिके। ३८

इह सर्वत्रापि अप्रस्तुतप्रशंसालङ्कारः।

अपि च पदार्थहेतुकं काव्यलिङ्गमलङ्कारः।
बाल्यादेव गताहमम्बसततं श्रीकृष्णमेव ध्रुवं,
तस्यैवाङ्घ्रिसरोजयुग्मनिहितं नित्यं मदीयं शिरः।
नान्यदैवतमस्ति मे भुवि परानन्दप्रदं चेतसो,
यावज्जीवमहं तमेव परया भक्त्या भजे मोहरम्। ४३

१९६०, १९६१ अब्दे "मीरा चरितम्" सुष्टुतममभिनीतं नेपालस्थे भारतीयराजदूतावासे। दूतावासस्य परमशोभने महद्युद्याने तत्प्रसारणमतिशयरमणीयमभूत्। अथ स्वभावप्रणयिनी क्षमा स्वप्रियजननीं द्रष्टुमभीक्ष्णं राजदुर्गं गच्छति स्म। एकदा १९३८ तमाब्दे गोष्ठात् पितुरमूल्यरचना—वालपत्रहस्तलेख्यपत्रादिनिधिस्तया संप्राप्ताः। केनापि मूर्खेण तत्र निक्षिप्ता। अतिमात्रनिचयं बहिः सुष्ठु परिशोध्य, सामुम्बापुरमनयत् ग्रन्थपत्राणि चर्मादिना छादयित्वा, समारक्षयत्। कानिचिद्धस्तलेख्यानि मुख्यपुस्तकालया तया समर्पितानि।

सदैव किमपि लेखनं सुरवाण्यां वाङ्गलभाषायां स क्षमा निरतासीत्। ततः पुराङ्गलवाण्यां रचिताः लघुकथाः सर्वा अपि गद्यरूपेण देववाण्यां लिखिताः। अथ कलहप्रियौ स्वपुत्रस्नुषौ गृहमागत्य, नित्यमाक्रोशवन्तौ। प्रियपित्रापि राघवेन्द्रेण सह उच्चैर्विवादयतः स्म। अकल्पनीया खलु यद्विक्षोभेऽस्मिन् कथं नाम सा लिखति स्म। १९३० तमाब्दे स्नुषा गेती अतिखिन्ना भूत्वा, १९५१ आत्मघातस्तया विहितः स्वप्राणाः स्वयमुपहृता सर्वेऽपि रावकुलजाः क्षमाराघवेन्द्रलीलाहरीश्वराश्च दुरासदेन शोकमहार्णवेन समभिप्लुताः। ततः पितृगृहे सडिम्भोः वस्तुं पितृभ्यां बहु प्रार्थितोऽपि, मन्मथो निराकरोत्।

तथापि दयितपौत्रौ दिलीप—रणजितौ प्रतिदिनं गृहमायातौ सायंश्च मन्मथस्य निवासमुपस्थितौ क्षमाराघवेन्द्रौ । उभावपि बालकौ क्षमा सरलपाठं पाठयति स्म । तेषु दिवसेषु १९४८—५२ तमाब्देषु हरीश्वर-दयालुः सिक्किम-भूटान—त्रिविष्टपदेशेषु भारतीयराष्ट्रस्य दूतो भूत्वा, गान्तोकनगरे च तस्य मुख्यनिवासोऽभूत् एकदा प्रवासप्रिया क्षमा गान्तोकनगरीं गत्वा एकमासञ्च तत्र स्थिता । प्रभाते दीर्घभ्रमणं पद्भ्यां गच्छन्ती, हिमालयस्य शीतवात- खगमधुरनिनादित-पुष्पादि-वैपुल्येन सा मुमुदेतराम् । अपराह्णे चोद्यानस्थे टेनिसक्रीडाङ्गणे टेनिसक्रीडामक्रीडयत् । चिकित्सकस्य धर्मपत्नी श्रीमती लक्ष्मीदेवी शेहरसिंहमहोदय सुरवाणीप्रिया क्षमया नवीनरचितपद्यानि श्रवणाय प्रत्यहमायाति स्म । देशखण्डनात् पूर्वं लवपुर्यां (लवपुरे) शास्त्रिपरीक्षां सम्यगुत्तीर्य लुधियानानगरे विद्यालये छात्रान् संस्कृतभाषामपाठयत् । विभिन्नागतानां मेलनं, तैः संस्कृत संलापेन क्षमा संपर्यतुष्टत् विशे-षतः सिक्किमदेशस्य नृपस्तस्यातिरमणीये कन्ये च, विवाहिता कुकुलरा-जकुमारी, तस्यानुजा कुलाराजकुमारी च । ये नित्यमद्भुतकार्मिकवस्त्रेण सुप्रतापेन वेष्टिताः । राज्यगृहे प्रासादे भोजनमपि क्षमा भृश मस्वादत् । भोजनान्ते सर्वेऽपि सिक्किमीये नृत्ये भागं गृहीतवन्तः ।

ततः प्रवासविरक्तस्य सुप्रियराघवेन्द्रस्य जन्मदिनात्पूर्वं क्षमा मुम्बापुरीं प्रतिन्यवर्तत । अचिरादसौ रुग्णोऽभूत्, तस्य पार्श्वे नित्यं क्षमा समुपाविशत्, तूष्णीं सततपद्यविगुण्ठयमाना । मासद्वयमसौ शयने स्थितः । ततः परं दुर्बलोऽभूत्, क्षमा चिन्तापरायणा च । लीलाहरीश्वरावपि बहुधा गान्तोकनगरात् मुम्बापुरीमागतौ । पुनः पौन्येन पितुर्गृहे निवासाय संप्रार्थि-तोऽपि, मन्मथो निराकरोत् । तथापि लेखनं न कदापि क्षमा तत्याज । १९५२ तमाब्दे सुरम्यराज्ञिक्षेत्रे स्थितवत्यां तस्यां, "श्री ज्ञानेश्वर चरितम्" विरचनमारब्धवती सा । अष्टसर्गेषु ४०३ उत्कृष्टपद्यसंपूर्णा ज्ञानदेवस्य हृदय-ङ्गमा जीवनकथा तस्यान्तिमा रचनाऽभूत् । १५-४-५४ तमदिने अन्तिमं तया विरचितं, १५-४-५४ दिने च सा स्वर्गं गता बत एतत्काव्यं, यथा "स्वरा-ज्यविजयः" "ग्रामज्योतिः" कथामुक्तावली च कर्तुः मृत्युत्तरकरूपेण लीलया प्रकाशितम् । योगीन्द्रस्य भाववृत्तं क्षमा सूक्ष्मं वर्णयति । तत्पाणिग्रहणम्. पितृप्राणार्पणं, शुद्धिपत्रप्राप्तिनिचयः, महिषवेदघोषणं, महिषमन्त्रोच्चारणम्:, ग्रन्थनिर्माणं, चाङ्गदेवपराजयः, समाधिप्रवेशश्च । अथ काव्यमेतत् प्राय उप-

जातिच्छन्दसा प्रणीतं, सर्गाणामन्तिमश्लोकः अपरच्छन्देदोभि विगुण्ठतः । द्वौ प्रथमौ श्लोकौ शार्दूलविक्रीडितेन विरचितौ यथा ।

यः षड् वर्षशतानि भूरि महितो, विद्वद्भिरज्ञैस्तथा
साक्षाद्विष्णुरिवन्वतीर्ण इह यो ज्ञानेश्वरो ज्ञानिराट् ।
धृष्णोम्यस्यल्पमतिस्तदीयचरितं गातुं विमोहादहं,
संस्प्रष्टुं डयनोद्यतेव चटका तारापथे भास्करम् ॥ १

नातिक्रान्तकुमारभाव इह यो वेदाङ्गपारंगतो
लोकेभ्योऽविकलां च भक्तिपदवीं निर्दिष्टवान् योऽमलाम् ।
यत्काव्यामृतनिर्झरेण मुदितो विद्यातृषार्तो जनः
प्रवृत्तास्मि महात्मनः कृतिततीः स्यातुं सुबद्धादरा: ॥ २

अन्तिमश्लोकः यथा ।

ब्रह्मसंनिधिमुपेयुषो मुनेर्वत्सरे गतवति स्थिरान्तरो ।
भ्रातरौ च भगिनी त्रिविष्टपं पुण्यराशिपरिपाकतो ययुः ३२ ॥

प्राणप्रियराघवेन्द्रः मनुजेन्द्रः शनैः शनैः दुर्बलोऽभूत् । प्रतिदिनं तं परमप्रीताय श्रीमद्वाल्मीकीकृतरामायणमुच्चैः सा वरारोहाऽपठत् । मुख्य-पुस्तकालयादपि नवीनपुस्तकान्यानयत् । तथापि खिन्नमना एव स्थितोऽसौ कुलवैभवप्रकाशकः । परमप्रीतस्य दीनमुखाम्बुजं वीक्ष्य, दुःखाकुलिता क्षमाऽभूत् । १४-११-२३ तमपुण्यतमदिने परोपकारनरधर्माः समासन्नेऽसावकं-वासरे परमदुःखार्ता पतिता शोकसागरे सा विद्यालङ्कारशोभिनी ।

दिवारात्रं शोकेनाभिपीडिता विललापकुलेंद्रिया क्षमा । स्नेहपर्याकुलेक्षरं सुमधुरैः शब्दैः स्वमित्रबन्धुभिरभि प्रसादितापि न जगाम शान्तम् सुरस्-रोत्तमा । ६-१-५४ तमदिने मन्मथस्य चतुर्थतलस्थं निवासं महता श्रमेण पद्यामारोहत् । पितुर्गेहं सबालकं वसितुं तं नियोजयितुकामा सा तत्र गतवती । रात्रौ खिन्नहृदाभियोगेन निपतिता, सपद्येव च रुग्णालयं मन्मथेन नीता यत्र मासयुग्मं शयने स्थिता । देहलीतो लीला त्वरितं त्वरयामास तत्पार्श्वे च स्थिता । तत्रापि शयने तया पद्यानि प्रणीतानि, कविताद्वयञ्च विरचितम् । एका प्रसिद्धबंगालीयलेखकस्य दानुम्भीयो नामकृतजकेन्द्रा, अन्या "चन्द्रोषरागः" श्री सुभाष चन्द्रबोसमधिकृत्य किन्तु न प्रकाशिते ।

## जकोन्दा

जकोन्दां गवाक्षे सुदृश्यास्य पद्भ्यां, विलोक्यांगणादम्बचुम्ब मां माम् ।
कराभ्यां गृहाणेति सा बालकन्या, मुहुः प्रार्थयामास वृत्तानभिज्ञा ॥ १

अद्य: सन्निधो बालिकामुद्भुजां ताम्, अभूवक्षमा चुम्बितुं मन्दभागा ।
गलद्बाष्पदृग्भ्यां पिबन्ती तु वत्सां, कथंचिद्विविक्तं व्यधादात्मचेतः । २

श्रूयते खलु दनन्झियो नाम प्रसिद्धतमा इतालीदेशजः कविः । तेन बहूनि नाटकानि रसालङ्कारपरिप्लुतानि प्रणीतानि किल दृश्यन्ते । तेषु जकोन्दा नाम पञ्चाङ्कं हृदयमावर्जयतितराम् । तत्र चरमाङ्कस्य सामग्रीमुपजीव्य रस — भाव — रीतिगुणालङ्कारध्वनिभेदात्कतिचिदुदाहृतं मया श्लोकानामियं पञ्चदेशी समुपनिबद्धा विदुषां मुदे भूयात् ।

## चन्द्रोपरागः

पद्य युगलमेतत् चन्द्रोपरागवर्णनव्याजेन श्रीमतः सुभाष चन्द्बोस-महाशयस्य सर्वशोचनीयमाकस्मिकवक्षेनं प्रस्तौति । अर्थश्लेषालङ्कारस्योदाहृतः ।

स्वजन्मभूमेरूपचायनाय, श्रिया विराजभ्युदयं प्रपन्नः ।
कलामृतै र्लोकमनन्दयद्यः, पराम्बरं नैव निषेवमाणः ॥ १

तमग्रसिष्ट प्रतिपक्षराहुः सुभाषचंद्रं बत भाग्यदोषात् ।
तथापि लोकोत्तरतेजभासो, पुरा चकास्त्येव सुमण्डले स्वे ॥ २

ततः रणालयात् स्वगृहं प्रतिनिवर्त्य, तया श्रीज्ञानेश्वरचरितस्य विरचनरताऽभूत् प्रीतिपरमका क्षमा । तदनिषद्यकुवलयं विरच्य, सुमयनकमले समामिलत् कमलेक्षणा पङ्कपत्राक्षी ।

---

# पर्यावरण गायनम्

— डा० लेखराम शर्मा

★

आयाहि माधव ! वसुधाँ प्रपाहि ।
दत्वा सुबुद्धि कुमार्ग गतानाम् ।
कष्टं परं वर्धते सज्जनानाम् ।
दुर्जनास्तु नूनं मनसा मोदन्ते ॥
आयाहि माधव ... ... ॥

पश्येह भगवन् परितो मदीयम् ।
क्व नास्ति नीचं गृहमासुरीयम् ॥
आयाहि माधव ...... ॥

भूमौ न पश्यति विज्ञानमन्धः ।
प्रदूषयन्ननु पंचतत्त्वम् ॥
आयाहि माधव...... ॥

विदेशाः हि केचन गगनं भिन्दन्ति ।
भूमौ च केचन जलं दूषयन्ति ॥
आयाहि माधव...... ॥

अरण्यान् विनाश्य नग्ना धरेयम् ।
पश्याट्टहासं निर्लज्जितानाम् ॥
आयाहि माधव ...... ॥

— प्राध्यापक, राजकीय संस्कृत महाविद्यालय,
सोलनम् (हि० प्र०)

# भारते आधुनिक कोश निर्माण यात्रा

(१७७७—१९००)

—

– सूनृता शर्मा गौतम
एम. ए. द्वय (सं. हिं.)



ख्रीष्टाब्दस्य एकोनविंशति शतकस्य प्रारम्भादेव आंग्ल-- हिन्दी -- उर्दू — संस्कृत -- शब्दावलिमाधारीकृत्य द्वि-त्रि-बहुभाषा कोश—प्रकाशनमारब्धम् । आंग्लाधिकारिभिस्तथा आंग्ल विद्वद्‌भिरस्मिन् क्षेत्रे विपुलकार्यं कृतम् । आरंभिककार्यं सामान्य संकलन रूपेण कृतमभूत् । अस्मिन् कर्मणि आंग्ल—उर्दू—हिन्दी — संस्कृतभाषीयाः समानार्थक शब्दाः संकलिताः । एतेषामर्थपूर्वकं एकत्रस्थापनं कृतमभूत् । सामग्रीसंकलने उपलब्ध—प्राचीन ग्रन्थानां, प्रकाशनानां, जनसम्पर्कस्य पण्डितानाँ मौलवीनाञ्च साहाय्यं गृहीतम् क्षेत्रीयप्रशासन कर्मकराणामप्यत्र पर्याप्तयोगदानमभूत् । येषां कोशानामग्रे-उल्लेखो भविष्यति ते कलकत्तायां दिल्याम्बा पुस्तकालयेषु उपलब्धाः सन्ति । येऽनुपलब्धाः वर्तन्ते तेषामुल्लेखोऽस्ति—उपलब्धकोशभूमिकासु सामान्य—द्विभाषि-कोशानामत्र परिचयमात्रं दीयते । सर्वेक्षणेऽस्मिन् एतेषामुल्लेखो दीयते यतोहि—अत्र परिभाषा संकलनं, शब्दार्थश्च एतत्सर्वं बीज-रूपेण विद्यमानमस्ति । एते सामान्यतया दिग्दर्शकाः प्रचलित शब्दावल्याश्च पुरस्कर्तारः सन्ति । यस्मिन्-कोशे विशिष्टपरिभाषिक शब्दावलिसंकलनं मिलति तस्य "संकलनम्" शीर्षकान्तर्गतं विशिष्ट टीकया सह संस्थापनमकारि । तत्पश्चात—मूलपारिभाषिक-शब्द-रचनासम्बन्धिकोशानां वर्णनमतिसंक्षेपेण 'पर्यायरचना, शीर्ष-कान्तर्गतं कृतमस्ति । एतत्कार्यभूमिकासु व्यक्तानां विचाराणामपि

विशिष्टमहत्वमस्ति । यतोहि एभिर्ज्ञायते यत्कथं शब्दावलि निर्माण-सिद्धान्तानां तत्सम्बन्धिधारणानाँ विकासोऽभूत् — तथा च यानि साधनानि - अद्य मान्यताप्राप्तानि सन्ति तेषां पूर्वपीठिका कास्ति ।

अष्टादशशतकादरम्य १७६० खीष्टाब्दे मद्रासनगरे मुद्रितः 'इण्डियाहाउस लायब्रेरी' अत्रोपलब्धस्य कोशस्यैकस्य नामज्ञानं जायते । अस्य नाम "डिक्शनरी आव् इंगलिश एण्ड हिन्दुस्तानी" अस्ति । कोशस्यास्य सम्पादकः डा० हेरिस वर्तते ; जान शेक्सपीयरः स्वीयव्याकरणभूमिकायामस्योल्लेखं चकार । जान गिलक्रिस्टः १७८७ खीष्टाब्दे स्वीयं अंग्रेजी हिन्दुस्तानी' कोशं कलकत्तातः प्राकाशयत् एतस्य द्वितीयसंस्करणं एडिनबरातः १६२० खीष्टाब्दे निकासितश्च । डा० गिलक्रिस्टस्य कार्यात् फोर्ब्सः स्वीये कोशकार्ये पर्याप्त सहायमवाप्तवान् । फोर्ब्सः - भूमिकायां लिलेख यत् -- गिलक्रिस्टकाले हिन्दी पूर्णविकासवती नासीत् । अतः अधिकांश शब्देषु ऊकारस्य विपरीत प्रयोगस्तत्र दृश्यते । ह्रस्वस्थाने दीर्घस्य दीर्घस्थाने च ह्रस्वउकारस्य प्रयोगोऽभूत् । एतस्य यदि-उपेक्षा क्रियेत तु गिलक्रिस्टस्य कार्यं क्रमश्चोभावपि प्रशंसामाप्तौ तदानीम् । १८३४ खीष्टाब्दे जानशेक्सपीयरः 'हिन्दुस्तानी भाषाका व्याकरण नामक पुस्तकं लन्दनात् प्राकाशयत् । एतस्य समर्पणम्-ईस्ट इण्डिया कम्पनी व्यवस्थापकेभ्यः कृतमभूत् । प्रकाशनेऽस्मिन् २२०७ पृष्ठानि: सन्ति । अस्य भूमिकायां केचनान्येऽपि कोशाः नामतः संकेतिताः । एकस्योल्लेखस्तु उपरि कृत एव । द्वितीयकोशो ऽस्ति हिन्दी—आंग्ल कोशः ।" इमं जोजफ टेलरः स्वकार्यसंचालनाय संकलितवान् । फोर्ट विलियम महाविद्यालयस्य विदुषः 'मार्रबियो (नैटिब्स) इत्यस्य साहायेन डब्ल्यू हन्टर एम. डी. संशोध्य मुद्रणाय सज्जी कृतवान् । १८०८ खीष्टाब्दे कोशोऽयं कलकत्तायां प्रकाशितो ऽभूत् ।

टेलरस्य हन्टरस्य च कोशे हिन्दीशब्दैः सह संस्कृताधार शब्दा अपि प्रदत्ताः सन्ति । यथोदाहरणम् :—

| हिन्दी | संस्कृत | अंग्रेजी |
| --- | --- | --- |
| Pharna | स्फुरण | to fly (as a flag in the air) |

| हिन्दी | संस्कृत | अंग्रेजी |
|---|---|---|
| | | flutter, |
| Takshal | (टकशाला) | a mint. |
| Nivedan | (निवेदन) | An address, A Petition, representation. |

अस्मिन्-कोशे संस्कृत शब्दाः देवनागर्यां सन्ति । १८७० खीष्टाब्देऽस्य संशोधितसंस्करणं लन्दनात् प्रकाशितम् । अत्र तत्कालीन भाषा पाण्डुलिपीनां, प्रकाशितग्रन्थानाञ्च साहाय्यं गृहीतमभूत् । अस्मिन् कोशे केचन शब्दाः — अर्थाश्च असाधारणाः सन्ति । यथा:—

| | |
|---|---|
| अहमेघः | Vanity, cgo arrogance, Pride to |
| चिन्हः | advertise |
| दर्शन | interview. |

माण्यः ए. टी. एडमः भारतीय पाठशालासु प्रयोगाय १८३८ खीष्टाब्दे "इंग्लिश हिन्दी कोशं" प्रकाशितवान् । कलकत्ताया "स्कूल बुक एण्ड वर्नाक्यूलर लिटरेचर सोसायटी" नामिका संस्था १८७० खीष्टाब्दे छात्राणामुपयोगाय आंग्लहिन्दीकोशं कृतवती । यद्यपि कोशोऽयं साधारणः तथाप्यत्र यत्र तत्र प्रभूताः पारिभाषिकशब्दाः संकलिताः । यथा:—

| | |
|---|---|
| Abjure | शपथ खाना |
| Apperentice | चेला |
| Poster sister | दूध बहिन आदि । |

अस्मिन् कोशे २५८ पृष्ठानिः सन्ति । प्रतीयते यदस्य निर्माणेऽनुभवयुक्ताः विद्वांसः साहायमकार्षुः ।

## संकलनम् :—

कोशानां शब्दावलिनिर्माणस्य सुगमा शास्त्रीया च पद्धतिरेषा यत्—क्षेत्रेषु गत्वा लोकैः सह च मिलित्वा शब्दानां संग्रहः कृतः स्यात् । साहित्यादपि शब्दाः- एकत्रीकृताः स्युः, पश्चाच्च तेषां पारिभाषिकदृष्ट्या परीक्षणं क्रियेत । आरंभकाले आंग्लैरपि इदमेव कृतम् । तैः पण्डिताः, मौलविनश्च प्रथममेव शब्दनिर्माणे नैव नियुक्ताः । परन्तु प्रचलितशब्दानां प्रथमं संकलनं कृतम्, ततः आंग्ल शब्दैः

साकं तथा च अभिव्यक्त्या सह तेषां मेलनं विहितम् । १८३९ खीष्टाब्दे "सदर बोर्ड" "रेवेन्यू ग्लासरीज्" नामक शब्दावली प्रकाशितवान् । अस्मिन्-भूमि आयसम्बन्धि-शब्दा आसन् । पश्चात् - तत्कालीन प्रशासनेन १८४२ खीष्टाब्दीये दिसम्बर मासस्य १४ दिवसे प्रशासकीयादेशानुसारं प्राध्यापक एच. एच. विल्सनस्य निरीक्षकत्वे भारतीय-शब्दावलिसंकलनस्यादेशो निष्कासितः । अस्या एव शब्दावल्याः पूरकप्रकाशनरूपेण बंगालस्य लोकसेवाधिकारिणा एच. एम. इलियटेन १८४५ खीष्टाब्दे-"भारतीय शब्दावलिः" (दि ग्लासरी आफ इण्डियन टर्म्स) प्रकाशिता । अस्याः मुद्रणं आगरायाः सिकन्दरा जार्फन मुद्रणालये जातम् । अस्यां ४७७ पृष्ठानि सन्ति ।

एवमेव मथुराप्रसाद मिश्रेण सम्पादित कोशः— "ट्राइलिंगुअल डिक्शनरी—बीईंग 'ए कां प्रिहेंसिव लेक्सिकन इन इंगलिश उर्दू ऐण्ड हिन्दी'—यद्यपि सामान्यकोशो वर्तते परन्तु-अस्य भूमिका तत्कालीन शब्दावलि - सम्बन्धितमतप्रकाशनं करोति । अस्मिन् १२४६ पृष्ठानि सन्ति । अस्य प्रकाशनं १८६५ खीष्टाब्दे जातम् प्रख्यातकोशकाराणां विषयेऽस्य कोशकारस्य कथनमस्ति -- "यदेते शब्दव्युत्पादनं ग्रीक-लैटिनगौथिकभाषाधारं कृत्वा कुर्वन्ति तेषाँमते इदमेवान्तिम द्वारमस्ति तेषां कृते । परन्तु भाषाविज्ञानस्य नवीनानुसन्धानेन एवंविधविशालक्षेत्रोद्घाटनं कृतमस्ति यत्र तेषां प्रवेशोऽपि न जातः । सर्वासामार्यभाषाणां ज्येष्ठा भगिनी संस्कृतम् - इति सिद्धमस्ति । अतो यावत्-संस्कृतस्योपेक्षा करिष्यते तावत् शब्द - व्युत्पादनं नूनमेव भ्रमपूर्णं स्थास्यति । एवं किलाधुनिककोशनिर्मातृणां कृते एषु प्राचीनकोशेषु प्रभूता सामग्रीं आसीत् परन्तु - अस्याः प्रायेण उपेक्षा एव कृता इति नवीन कोशाध्ययनेन प्रतीयते ।

## पर्याय रचना

आंग्लभाषायाः पर्यायरचना दिल्यामेव प्रारब्धा । एतस्योल्लेखः श्री पोपट शाहस्य वैज्ञानिक शब्दसंग्रहे प्राप्तोऽभूत् पुरातन देहली-कालेजात् - प्राप्तसाग्र्यां १८३४ खीष्टाब्दे कार्यमिदं प्रारब्धमिति ज्ञायते । कार्यमिदं त्रिभाषा पर्यायनिर्माणार्थं प्रारब्धमासीत् परन्तु धनाभावेन केवलं उर्दू पर्यन्तमेव सीमितमभूत् इदं कार्यं चिराय कार्यकरणे समर्थम् जातम् ।

अस्यामेव शृंखलायां द्वितीयः प्रयासः अलीगढ़ विश्वविद्यालये तत्रत्यया "साईंटिफिक सोसायटी" संस्थया प्रारब्धः । तत्पश्चात् "अंजुमन - ए - तरक्की - ए - उर्दू, इति संस्थया कार्यमिदं चालितम् । यतोहि सर्वेषामेषां प्रयासः उर्दूमिश्रितभाषायाः समस्ते भारते सञ्चालनाय इदमावश्यक मासीत्तेषां मते । उस्मानियाविश्वविद्यालयेनापि कार्यमिदं अग्रेनीतम् । १८६३ खीष्टाब्दे मेरठस्य 'सिटी-मिशन पाठशालायाः गणिताध्यापकेन पं० गौरीदत्तेन मुख्याध्यापकस्य डब्ल्यू० एस० एर्नडिंगमहोदयस्य सहयोगेन गणितस्य हिन्दी शब्दावली संकलिता । अस्य संकलनस्य नाम "सांकेतिककोष" इत्यस्ति ।

१८७१ खीष्टाब्दे बंगप्रशासनेन समितिरेका नियुक्ता । अस्याः समित्याः कार्यमासीत् - 'कलकत्ता मेडिकल कालेजे' पाठनार्थं भारतीय भाषासु—उपयुक्तपुस्तक निर्माणम् । १८८८ खीष्टाब्दे प्रा० गज्जरोऽपि वैज्ञानिकशब्दावलि निर्माणकार्यमारब्धवान् । कार्यमिदं एकोनविंशति खीष्टाब्दपर्यन्तं प्राचलत् एतदर्थं बड़ोदानरेशः पञ्चाशत् - सहस्रमित रुप्यकाणि ददौ । परन्तु कठिनमिदं काय सर्वाङ्गसुन्दरकोशनिर्माण करणे समर्थं न जातम् । तथापि कियत्कठिनं कोशनिर्माणकार्यमिति-अध्ययनेनानेन स्पष्टं भवति । सहैव इदमपि सत्यं यद्विंशशतके भारतीय भाषाकोशनिर्माणे यत्साफल्यं जातं तन्मूलमिदमेवासीत् । संस्कृतस्य च भारतीयभाषाकोशनिर्माणे महत्वपूर्णा भूमिका सिद्धा भवति ।

— अनुसन्धानसहायक
हिमाचल कला, संस्कृति एवं भाषा
अकादमी—शिमला

---



# ब्रह्मविषये शंका समाधानञ्च

डा० लेखराम शर्मा



**शिष्यः–** भो आचार्य ! लोके एके वदन्ति यत् अस्ति खलु ब्रह्म अस्याः विचित्रसृष्टेर्निर्माता अन्ये च कथयन्ति यत् ब्रह्म कपोलकल्पितम् अन्धविश्वासमात्रमिति । अत एव अस्ति खलु महती शंका मे मनसि यत् किमस्ति ब्रह्म न वेति ।

**आचार्यः–** अस्ति खलु ब्रह्म । अत्र कापि शंका नैव कार्या ।

**शिष्य :–** अस्ति चेत् कथं न दृश्यते ?

**आचार्य :–** किं भवता निजप्रपितामहस्य (परदादा का) पितामहः (दादा) दृष्टः !

**शिष्य :—** नैव ।

**आचार्यः–** भवता स नैव दृष्टः तर्हि स नासीत् इति नैव स्वीकर्तुं शक्येत । यतोहि तस्य विषये भवता परम्परातः श्रुतम् उत्तरोत्तर उत्पत्त्या क्रमेण च ज्ञातम् । एवमेव ब्रह्मणः विषयेऽपि शास्त्राणि प्रमाणानि सन्ति यत् अस्ति किल सृष्ट्युत्पत्ति - स्थिति - संहार-कारणं नियन्तृशक्तिश्च ब्रह्मइति ।

**यथा:–** "यतोवा इमानि भूतानि जायन्ते येन जातानि जीवन्ति । यत्प्रयन्त्यभिसंविशन्ति । तद्विजिज्ञासस्व । तद् ब्रह्मेति ।"

(तै० उ० ३—१)

अपरञ्च लोके सन्ति वाय्वादीनि बहूनि एतादृशानि वस्तूनि यानि सूक्ष्मत्वात् सति अस्तित्वेऽपि नैव द्रष्टुं शक्यन्ते । अतः ब्रह्मणः अस्तित्व विषये शंका नैव कर्तव्या ।

शिष्यः- किं स्वरूपं खलु तत् ?

आचार्य : चेतन स्वरूपम् । यथा- 'चैतन्यमेव त्वस्यात्मनः स्वरूपमिति ।" ब्रह्मसूत्र शांकरभाष्य ४-४-६

शिष्य :- चेतनस्वरूपं चेत् तत् तर्हि सम्पूर्णमपि जगत् चेतनं स्यात् । यतोहि चेतनत्वात् उत्पन्न वस्तु चेतनमेव भवितव्यम् परं जगत तु जड़-चेतनोभयात्मकमस्ति ।

आचार्य :- चेतनत्वात चेतनमेव उत्पद्यते इति नैव नियमः । यतोहि चेतनपुरुषात् अचेतनाः केशाः लोमानि च उत्पद्यन्ते ।

शिष्यः- भवता कथं ज्ञातम् यत् ब्रह्म चेतनमेव इति ।

आचार्यः- शास्त्रतः तर्केण च । शास्त्रेषु लिखितं यत् —

चेतनश्चेतनानाम्' (क-उ० २- -१३) तथा प्रज्ञानं ब्रह्म (ऐ. उ. ३-५-३) तर्केण च एवं ज्ञायते यत् —चेतनत्वेऽपगते तदेव सुसुन्दरमपि वपुः भयकारं भवति ।

अपि च नैव चलितुं वक्तुं श्रोतुं द्रष्टुं च समर्थो भवति । अतः स्पष्टमस्ति यत् तस्मिन्नेव दर्शनवाचन चलनादयः सर्वाः शक्तयः सन्ति । चैतन्यं च ब्रह्मणः स्वरूपम् । अतः चेतनम् ब्रह्मइति निश्चयम् ।

शिष्यः- ननु भवता उक्तं यत् ब्रह्म जगतः सृष्टेः (रचना का) कारणमस्ति इति अस्मिन् विषये मे मनसि एका शंका अस्ति यत् एकाकी ब्रह्म कथं जगत् सृजेत । यतोहि लोके वयं पश्यामः यत् कुम्भकारश्चेत घटं करोति । तत्र कुम्भकारातिरिक्तं मृत्तिका, दण्डः, चक्रादि अन्यानि वस्तूनि अपि अपेक्षितानि भवन्ति । परं शास्त्रानुसारं चेत सृष्ट्यादौ ब्रह्मणः एव सत्ता स्वीक्रियेत स एव च एकाकी सृष्टेः कारणमिति मन्येत तर्हि औचित्ययुक्ता खलु शंका यत् सामग्रीं विना ब्रह्म जगत् कथं स्रक्ष्यति इति ।

आचार्य :- किं भवता ऊर्णनाभिः (मकड़ी) दृष्टा ?

शिष्य :- आम् । दृष्टा खलु मया ।

आचार्य :- सा यथा स्वजालनिर्माणार्थं न कुतोऽपि किञ्चिदपि सहाय्यं गृह्णाति तथा च स्वस्मिन् एव संहरते । एवमेव ब्रह्म न किञ्चित् कारणान्तरमपेक्षते सृष्टिनिर्माणार्थम् । अतः एव "सर्वम् खल्विदं ब्रह्मेति" (छा० उ० ३-४-१)

शिष्य :- यदि इदं सर्वं ब्रह्ममेव तर्हि भोक्ताभोग्यभावसम्बन्धः जगति नैव भविष्यति । अर्थात् भोक्ता देवदत्तः भोग्यं ओदनमिति अथवा अहम् त्वमिति भेददृष्टिः च स्यात् । भवति च अहं त्वमिति ज्ञानम् । न च कश्चिदपि अपरं ब्रह्मत्वेन व्यवहरति ।

आचार्य :- भोक्ता—भोग्यभावसम्बन्धः लौकिको व्यवहारः समुद्रतरङ्ग न्यायेन उपन्नो भवति । अर्थात् यथा जलतरङ्गाः समुद्रादि भिन्नाः नैव भवन्ति तथापि समुद्रस्य तरंगः इति व्यवहारो दृश्यते एव । एवमेव सर्वस्यापि वस्तु जातस्य ब्रह्म स्वरूपत्वेऽपि अहं त्वम् इत्यादि व्यवहारो भवत्येव ।

शिष्य :- ननु शास्त्रेषु उक्तं यत् अव्ययं ब्रह्म यथा
"अशब्दमस्पर्शमरूपमव्ययम्" (क० उ० १-३-१५)

पुनश्च वर्णितम् सृष्टिकारणं ब्रह्मेति सृष्टिकारणं चेत ब्रह्म तर्हि स परिणामी भविष्यति तर्हि कथमुक्तमव्ययम् इति ।

आचार्य :- शिष्य प्रवर ! ब्रह्म कश्चिद् नूतनां सृष्टिं नैव सृजति अपितु केवलं अव्यक्तरूपेण आत्मनि विद्यमानामेव व्यनक्ति । सृष्टिस्तु ब्रह्मणि सार्वकालिकी वर्तत एव । यथा मृत्तिकायां मृत्तपात्राणि कुम्भ-करकादीनि विद्यमानानि एव भवन्ति । व्यक्तिकरणे च ब्रह्मणि परिणामो तथैव न सम्पद्यते यथा संकोचितहस्तपादः देवदत्तः चेत् हस्तपादौ प्रसारयति तर्हि नैव तत्र कश्चित् परिणामो भवति ।

शिष्य :- शास्त्रेषु पठयते यत् आनन्दस्वरूपोऽयं ब्रह्मेति ।
यथा 'आनन्दं ब्रह्म' (बृ० उ० ३-९-२८)

आनन्द स्वरूपश्चेत् ब्रह्म तर्हि सर्वेऽपि ब्रह्मोत्पन्नाः प्राणिनः आनन्दयुक्ताः स्युः न कोऽपि जनः दुःखी स्यात् ।

सन्ति च प्राणिनः सुखिनः एके दुःखिनश्च अपरे इतिकथमेतत् ?

आचार्य :- एतत् सर्वमपि प्राणीनां कर्मानुसारमेव भवति । यः यादृशं कर्म करोति लभते हि सः तादृशं फलम् । भवति च सुखी दुःखीति उक्तमपि "प्रवर्तकं ब्रह्म प्राणिकर्मापेक्षया ।"

शिष्य :- कर्माणि तु पश्चात् प्रवृत्तानि । अहं पृच्छामि यत् प्रथमं यदा सृष्टिरचना कृता तदा कः आसीत् आधारः एकस्य मानवयोने अपरस्य च पशुत्वयोने इति ?

आचार्य :- प्राथमिकी सृष्टिः तु अतीव स्वल्पा केवलं आनन्दरूपा च आसीत् । तदैव आसीत् सम्भवतः सत्ययुगम् इति । आधुनिकी सृष्टिः तु बीजाङ्कुरवत् कर्मानुसारं प्रवर्तते इति ।

शिष्य :- अद्य खलु अपगत संशयोऽस्मि संवृत्तः परम् अवशिष्टः खलु एकः प्रश्नः ।

आचार्य :- कीदृशः सः प्रश्नः ?

शिष्य :- ब्रह्म ज्ञानस्य किंफलमिति ।

आचार्य :- प्रियशिष्य ! ब्रह्मज्ञानस्य फलविषये संक्षेपेण एतदेव वक्तु शक्यते यत् भिद्यते हृदय ग्रन्थिश्छिद्यन्ते सर्वसंशयाः । क्षीयन्ते चास्य कर्माणि तस्मिन् दृष्टे परावरे ।

(मुण्डकोपनिषत् — २-२-८)

अतः सत्यमुक्तम् आचार्यशङ्करेण यत् — "अस्तीत्येव ब्रह्म प्रतिपत्तव्यम्"
(तै० उ० शा० भा० २-६-१)

प्राध्यापक

राजकीय महाविद्यालय सरकाघाट
हि. प्र. १७५०२४

गतमासतोऽनुवृत्तम्—

# सोलनशतकम्

केशवराम शर्मा, दर्शनाचार्य, एम. ए. एम. फिल.
(प्राप्तस्वर्णपदकद्वय:)



गेहे गेहे पविहरिकथायज्ञपूजाप्रणाली
शुद्धस्वान्त: प्रकटनपटुर्मन्दहासस्तथास्ये ।
चेतोमोद प्रदमतितरां प्रीणनं चातिथीना—
मत्रागन्तुं वसितुमखिलान् सज्जनान् लोभयन्ति ।४१।

घर घर में पवित्र हरिकथा, यज्ञ तथा पूजा की प्रणाली; लोगों के मुखों में शुद्ध अन्त: करण की अभिव्यक्ति करने वाली मुस्कराहट, हृदय को अत्यन्त प्रमुदित करने वाली अतिथियों की आवभगत (आदि विशेषताएं) यहां आने के लिए सज्जनों को लुभाती हैं।

देवस्तोत्र स्वरमधुरिमा दिक्षु तन्वन् प्रसादं
शुद्धश्रद्धासहितमतिथे: पादसंक्षालनं च ।
देवद्वाराण्यवनतशिर: स्पर्शचिन्हान्वितानि
धर्मप्राणामिह हिमगिरे: संस्कृतिं द्योतयन्ति ।४२।

चारों दिशाओं को आनन्दमय बनाने वाली देवस्तोत्रों के स्वरों की मधुरिमा, शुद्ध श्रद्धापूर्वक अतिथिजन का चरण प्रक्षालन, आराधकों के प्रणाम द्वारा मस्तकों से घर्षित देवद्वार—आदि बातें यहां की धर्म-प्राण संस्कृति की परिचायक हैं ।

चित्ते हर्ष: स्मितसितसुधा शोभनास्ये सदैव
सच्चारित्र्यं परहितविधौ चेष्टितं देहयष्टौ ।

नेत्रे प्रीतिर्गतिरतिमतौ वाचि माधुर्यकोशः
सृष्टा दिव्या मनुजरचनानैपुणी दर्शितेह ४३।

लोगों के चित्त में सदा हर्ष, सुन्दर मुखों में मुस्कराहट की धवल सुधा, सच्चरित्रता, देह में सदा परहित की चेष्टा, नेत्रों में प्रीति, बुद्धि में गति, वाणी में माधुर्यकोश सदा भरा रहता है। वस्तुतः विधाता ने यहाँ अपनी दिव्य मनुजरचना की निपुणता दिखाई है।

वृक्षे वृक्षे सुमफलभृते कल्पवृक्षस्छविश्च
वासे वासे सरसमधुरस्तोत्रगीतस्वराश्च
ग्रामे ग्रामे प्रियहितकरा धेनवः कामदोहा
शूलिन्येषा ह्यमरनगरीसन्निकाशा विभातिः ।४४।

वृक्ष वृक्ष फूलों फलों से भरे हैं जो कल्पवृक्ष की छवि दिखाते हैं। प्रत्येक निवास में सरस और मधुर स्तोत्रों व गीतों के स्वर गूंजते हैं। गांव गांव में प्रीति एवं हित वितरण करने वाली कामधेनु के समान गाएं हैं। इस तरह यह शूलिनी की नगरी देवनगरी के तुल्य ही शोभा देती है।

सारल्यं किं सरलतरवः क्षान्तिमुच्चाद्रयः किम्
अक्षोभ्यत्वं किमु मुनिगणा मन्दहास्यं प्रपाताः ।
उद्यानानि प्रियहितकृतिं मौनमुच्चैर्वनान्ता
ग्राम्यांल्लोकान् किमु चिरमिहाशिक्षयन् आत्मतुल्यान् ।४५।

यहां के प्रकृतितुल्य लोगों को देख कर ऐसा लगता है कि:— इन्होंने यह सरलता सरलद्रुमों से, शान्ति ऊंचे पर्वतों से, क्षुब्ध न होना तपस्वियों से, मन्द मधुर हास्य झरनों से, प्रियता व हितकारिता उद्यानों से, मौन ऊंचे वन भागों से तो न सीखा होगा ?

सस्यक्षेत्रे कठिनबहुलक्षान्तिजस्वेदधाराः
सिञ्चन्त्येषां ननु कृषिकृतां राष्ट्रसम्पत्तिवल्लीम् ।
सौख्यं नित्यं सृजति नितरां वर्ष्मकाश्यं जनाना-
मेषां देशोन्नतिकरमहो योगदानं विचित्रम् ।४६।

फसलों से भरे खेतों में कठिन कार्य से भारी थकान से बहने वाली इन की पसीने की धाराएं राष्ट्रसम्पत्ति की बेल को सींचती हैं। इन के

शरीरों की कृशता औरों की समृद्धि और सुख को पैदा करती है। वास्तव में देश की उन्नति के लिए इनका अद्भुत योगदान है।

निद्राक्रोडप्रियसुखमिमे पूरयन्ति श्रमाङ्के
कान्तामञ्जुस्मितमधुरिमाणं च सस्याङ्कुरेषु ।
वस्त्रौत्सुक्यं मृदुदितरजः पुञ्जलेपेऽनुयमं
को विस्मर्तुं प्रभवति महत्त्यागमेषां कृतज्ञः ।४७।

इन कृषकों का भी कितना कठिन जीवन है ये निद्रा की गोदी का प्रिय सुख परिश्रम के पहलू में पूरा करते हैं। प्रियतमा की मीठी मुस्कराहट की मधुरिमा की लालसा फसल के अकुरों को देख देख कर पूरी करते हैं। वस्त्रधारण की उत्सुकता मिट्टी के धूलि कणों के लेप में पूरा करते हैं। कौन कृतज्ञ मनस्वी इन का भारी त्याग भुला सकता है।

पृष्ठे चर्मक्लमकरमिमे ह्यप्रमाणं च भारं
वोढ्वा विक्रीय सुखदमहो यानमन्यान् सृजन्ति ।
प्रत्यावृत्ता निजगृहमथो वेदनादूनदेहाः
कन्थाशय्या शरणवपुषो शेरते खेदभग्नाः ४८।

ये अपनी पीठ पर चमड़ी को पीड़ित करने वाले शक्ति से अधिक भार को उठाकर नगर में जाकर फसल बेच कर औरों के लिए सुखदायी वाहन पैदा करते है। और सायं पीड़ा से दुःखी देह वाले अपने घर लौट कर खेद से टूटे हुए फटे पुराने वस्त्रों की शय्या में शरीर को ढक कर किसी तरह सो जाते हैं।

येषां भूरिश्रमबलसमुत्पन्नधान्यैर्वणिग्जा
लक्षाधीशा रुचिरभवनस्वामिनः सन्ति जाताः ।
ग्रामीणानां सुकृशवपुषां शीर्णगेहान्यवेक्ष्य
निश्चीयन्ते ननु नृपनये दोषपूर्णा व्यवस्थाः ।४९।

जिनके भारी श्रम बल से उत्पन्न धान्य से व्यापारी लोग लक्षाधीश और भव्य भवनों के स्वामी बन कर मौज लेते हैं, उन्हीं कृशकाय ग्रामीणों के टूटे फूटे घरों को देख कर निश्चय होता है कि हमारी नीति में कोई दोषपूर्ण व्यवस्था विद्यमान है।

गेहे पाठस्मरण समये प्रेष्यते धेनुपृष्ठे
क्रीडाकाले विविधगृहकार्येषु संयोज्यते च ।
रात्रौ निद्राश्लथनयनवान् प्रेष्यते क्षेत्रकार्ये
ग्राम्यो बालो हतविधिहतो हन्त चेतो निहन्ति ।५०।

गांव का दुर्दैव का मारा बालक तो हाय ! मन को खिन्न कर देता है। पाठ करने के समय पशुओं के पीछे भेज दिया जाता है खेलने के समय बहुत से घर के कामों में जोड़ दिया जाता है तथा रात को नींद से मुंदी ढीली आंखों वाला बेचारा खेतों में काम करने के लिए भेज दिया जाता है।

— क्रमशः

संस्कृत विभागाध्यक्ष राजकीय स्नातकोत्तर
महाविद्यालय, सोलन (हि. प्र.)



## निवेदन

जिन्हें किसी भी मास की २५ तिथि तक अंक प्राप्त न हो उन्हें कार्यालय को सूचित करना चाहिए जिससे अंक पुनः भेजा जा सके। विलम्ब से सूचना मिलने पर अंक अप्राप्य हो जाते हैं।

— व्यवस्थापक

# स्वाध्यायोऽध्येतव्यः

डा० कला आचार्य

क. जे. सोमैया भारतीय संस्कृतिपीठम्
सोमैया विद्याविहार कंपस, विद्याविहार,
मुंबई—४०००००७७.



प्रवेशात् अनन्तरम् गुरुकुले निरन्तरम् एवं शिष्येण स्वाध्यायः अध्येतव्यः। स्वाध्यायः तु विद्यार्थिनः एव आसीत् उत्तरदायित्वम्। वर्तमानकाले विपण्याम् स्थाने स्थाने धनराशिपरिपूर्णानि ज्ञानकेन्द्राणि दृश्यन्ते अथवा धनलुब्धाः अध्यापकाः स्वयम् एव शिष्यगृहं गत्वा कुशिष्यम् अपि ज्ञानामृतम् पाययन्ति तादृशी दुष्टाः रूढिः प्राचीनकाले भारतवर्षे न दृश्यते यतः स्वाध्यायशीलाः एव आसन् शिष्याः ।

ब्रह्मयज्ञेन स्वाध्यायप्रवचनयोः निर्देशः भवति शतपथब्राह्मणे उक्तम्, यः अहरहः अधीते सः यशः कीर्तिम् नैके च अभ्युदयान् ।

गौतमधर्मसूत्रेषु देवपितृमनुष्ययज्ञाः स्वाध्यायश्च बलिकर्म' इति अस्मिन् सूत्रे स्वाध्यायस्य विशेषः निर्देशः तद्गौरवम् आवहति ।

अमुना ब्रह्मयज्ञसंज्ञया स्वाध्यायस्य समावेशः पञ्चमहायज्ञेषु क्रियते । याज्ञवल्क्यः महामखानाम् उपदेशे स्वाध्यायसंज्ञया एव स्वाध्यायम् निर्दिशति ।

स्वाध्यायस्य प्रशंसा नैकैः ऋषिभिः नैकैः वचनैः कृत्वा । अधीतस्य वेदस्य अभ्यासेन गुरुः प्रसन्नः भवति इति आपस्तम्बीय धर्मसूत्रेषु उक्तम् । यः सामवेदाध्येता सः अस्माकं महान् सम्मतः इति देवाः उक्तवन्तः । विष्णुपुराणे ग्रथितम् यत् स्वाध्यायसंयमसंयुक्तः पुरुषः पुरुषोत्तमः ।

महाभारते उपदिष्टम्, "स्वाध्याये तपसि दमे च नित्ययुक्तः क्षेमार्थी कुशलः सदा यतस्व ।"

यथा आधुनिके काले अध्ययने को हेतुः इति विद्यापीठीये अभ्यासक्रमे स्पष्टं निर्दिश्यते तथैव स्वाध्यायस्य हेतुः स्पष्टतया निर्दिष्टः । स्वाध्यायेन आत्मनः दर्शनम् भवति इति याज्ञवल्क्यः । स्वाध्यायेन ऋषीणाम् अर्चनम् कर्तव्यम् इति तत्वम् मनुना अपि शब्देषु बद्धम् । स्वाध्यायेन ऋषिऋणात् मुक्तिः इति अस्मिन् विषये सर्वषाम् स्मृति-ग्रन्थकर्तृणाम् सहमतिः

अभ्यासक्रमे यथा अभ्यासविषयाः निर्दिष्टाः सन्ति तथैव स्वाध्यायविषयाः निर्धारिताः । अथर्ववेदे ऋचः, सामानि, यजूंषि, इतिहासः, पुराणं, गाथाः नाराशंसीः च इति एते अध्ययनविषयाः निर्दिष्टाः । शतपथब्राह्मणे विद्याः वाकोवाक्यम् च अपि अध्ययनकृते निर्दिष्टम् । विद्यासंज्ञया अत्र न्यायमीमांसादयः वाकोवाक्यम् संज्ञया च उक्ति-प्रत्युक्तिप्रकरणम् अध्येतव्यत्वेन उपलक्षितम् । मुण्डके उपनिषदि 'द्वे विद्ये वेदितव्ये...... परा च वापरा च । इति निर्देशः ।

मनुना उच्यते, वेदस्य तथैव उपनिषदाम् अध्ययनम् करणीयम् । उपनिषदाम् कृते रहस्यसंज्ञा युज्यते मनुना । याज्ञवल्क्यः वक्ति, प्रतिदिनम् ऋचः, यजूंषि सामानि, अथर्ववेदः, वाकोवाक्यम् पुराणम्, इतिहासः, विद्या वा यथाशक्तिः पठितव्याः ।

अथ कथम् एतत् अध्ययनं करणीयम् ? का अस्ति पद्धतिः ? तत्र 'तपः' शब्दः अस्मिन् सन्दर्भे ऋषिभिः वारंवारम् उपयुज्यते । भृगुः ब्रह्मज्ञानाय नैकवारम् अतप्यत. आपस्तम्बीये धर्मसूत्रे तपः शब्दस्य व्याख्या कृता तत्र उच्यते, "नियमेषु तपः शब्दः ।" कठोरनियमैः अध्ययनं करणीयम् : नियमानाम् अतिक्रमे विद्याकर्म नष्टम् भवति ।

अस्माभिः सर्वैः अध्यापकैः अस्मिन् विषये आत्मपरीक्षणं कर्तव्यम् यत् महाविद्यालयेषु नियमाः सन्ति वा ? सन्ति चेत छात्रैः तेषाम् पालनं क्रियते वा ? यदि न क्रियते तर्हि वयं दोषार्हाः भवामः वा न वा ? अस्तु

के वा आसन् इमे नियमाः ये अध्ययनकाले ब्रह्मचारिणा आचरणीयाः ?

— —



# अखिलभारतीयसंस्कृतपत्रकारमहासंघसदस्याः

## १९९२

अध्यक्षः पं० बसन्त अनन्त गाडगील-संपादकः शारदा-पुणें

उपाध्यक्षाः प्रो० राधेश्यामधर द्विवेदी सं गाण्डीवम् वाराणासी।

प्रो० केशव शर्मा दिव्यज्योति, मासिकम् शिमला।

पं० चन्द्रदीपशुक्लः—सं. सम्मेलनम् पटना।

पं० रामकृष्ण आचार्यः सं० गेर्वाणी चित्तुर।

पं० वासुदेवकृष्ण चतुर्वेदी – सं. व्रजगन्धा मथुरा।

डा० रमाकान्तमिश्रः अर्वाचीन संस्कृतम्-दिल्ली।

सचिवः डा० रामगोपालमिश्रः सं० सागरिका-दिल्ली।

कोषाध्यक्षः पं० प्रभाकर रामरत शास्त्री-संस्कृतामृतम्-दिल्ली।

संयुक्तसचिवौ-पं० अशोकन पुरनाट्टुकर-भारत-मुद्रा- केरल।

पं० गुलामदस्तगीर सं. विश्वभाषावाराणसी।

संघटनमंत्री- पं० सदानन्द दीक्षितः सं. लोकसुश्रीः पुरी

जनसम्पर्कमंत्री पं० रामदयालुशास्त्री सं. अनादिवाक् दिल्ली।

विधि संविधानमंत्री पं० राजसाकेती-सं. युगगतिः गोरखपुर।

कार्यसदस्याः—पं० गिरिराजशर्मा– सं० भारतीजयपुरम्।

पं० श्यामदेवपाराशर-विश्वसंस्कृतम् होशियारपुर।

पं० आर्यनरेन्द्रः लोकसंस्कृतम्—पांडिचेरी।

पं० सत्यदेववर्मा—सं. हितसाधिका हरियाणा।

पं० हरिगोपालशास्त्री-सं. भारतोदय ज्वालापुर।

पं० नन्दकिशोरपत्राकिने—सं भवितव्यम्-नागपुर।

श्री प्रकाशमित्र शास्त्री—सं. पारिजातम्—कानपुर।

डा० मनोरमातिवारी—सागरिका कानपुर।

डा० मिथिलेशकुमारी—संस्कृत संजीवनम् पटना।

सम्मान्यसदस्याः डा० हरिप्रसादशर्मा - सं० हैमवतीदाङ् नेपाल।

---

बोचासणवासी—

# श्रीअक्षरपुरुषोत्तमसंस्थायाः

# संस्कृतप्रवृत्तयः

— रामरूप मिश्रः

१९८८ तम ईशवीयाब्दे श्री मुम्बादेवी आदर्श संस्कृतमहाविद्यालये प्राचार्यत्वेन गृहीतकार्यमासम् । एतस्मादवसरादेव श्रीस्वामिनारायणमन्दिरस्य (संस्थान्तर्गतमुम्बापुरी मन्दिरस्य) साधुच्छात्रैः सह मम सम्पर्कोऽभूत् । श्रीस्वामिनारायणमन्दिरेऽक्षरपुरुषोत्तमसंस्कृत — पाठशालाऽस्ति, तस्या विद्यार्थिनः परीक्षां दातुमुत्सुकाः भारतीयविद्याभवनस्य तदीयमुम्बादेवी-आदर्शसंस्कृतमहाविद्यालयस्य केन्द्रे परीक्षां ददति । अतः पठनपाठनोत्तरं परिचयोऽवर्धत । श्री भाईशंकरपुरोहिताः भूतपूर्वप्राचार्याः मन्दिरस्य प्राणभूतेभ्यो वितीर्णकरुणाप्रसादेभ्यो निःसीमसाधुभावेभ्यः पूज्यचरणेभ्यः श्रीप्रमुखस्वामिमहाराजेभ्यो मदीयं परिचयं दत्तवन्तः । अयञ्जनोऽपि साधुच्छात्रेभ्यः स्वामिनारायणसम्प्रदायविषयकं ज्ञानं लब्धवान् ।

अध्यापनचर्यामेवाध्यात्मसम्बन्धिनीमेकां चर्चां विदधाभिः— साधुच्छात्रैरहमेकस्मिन् दिने उक्तः "भवन्मुखे काचन चिन्ताऽस्तीति प्रतीयते यदि चेत् तर्हि श्रीप्रमुखस्वामिमहाराजाः निवेदनीयाः" इति । अहमपि स्वकष्टं निवेदितवान् । प्रमुखस्वामिमहाराजा उक्तवन्तः 'शीघ्रमेव स आगमिष्यतीति । मासाऽभ्यन्तर एव मत्पुत्रः चतुर्भ्यो वर्षेभ्यः प्राक् गृहाद् निर्गतः स पुनरागतः । इदानीं मज्जन्मभूमौ गृहनिर्माणं करोति ।

यद्यपि सम्प्रदायेऽस्मिन् अधिकाः प्रवृत्तयः प्रवर्तन्ते । तेषु संस्कृताध्यापनमपि वर्तते । अस्याः संस्थायाः देशे विदेशे च बहूनि केन्द्राणि सन्ति भारतीयसांस्कृतिकमहोत्सवा अपि विशालरीत्या क्रियन्ते । तेषु महोत्सवेषु संस्कृतभाषाया सगणकपद्धत्याऽपि वैशिष्ट्यं प्रदर्श्यते । इङ्गलण्डदेशस्य राजधान्यां लन्दनमहानगरे श्रीस्वामिनारायणविद्यालयः, महाविद्यालयः उच्चस्तरीयमहाविद्यालयश्चलति । तत्रापि संस्कृतभाषा आशैशवमनिवार्यरूपेण पाठ्यते ।

मुम्बापुर्यां मत्तो व्याकरणशास्त्रं पठन्तश्छात्राः ग्रन्थकृतो हृदयं सत्वरमेव विजानन्ति मूलग्रन्थस्याभिप्रायं टीकाकृत् यथा प्रकाशयति तथैव साधुच्छात्रा अपि स्वीयान् अभिप्रायान् प्रकटयन्ति । ते कथयन्ति यत् गुरूणां (प्रमुखस्वामिनाम्) एतादृशी विज्ञापनाऽस्ति यद् ग्रन्थस्य सम्यक्तत्त्वं बोधनीयमिति ।



प्रधानाध्यापकः—
आदर्श श्री मुम्बादेवी संस्कृत महाविद्यालयः

# म्पादकीयम्

## संस्कृतप्रसारकर्मणि कथं शैथिल्यम् ?

हिमाचलप्रदेशे संस्कृतप्रसारप्रचारदृशा प्रायेण महत्वपूर्णकार्यक्रमाः-
भवन्ति स्म प्रतिवर्षम् । परन्तु गतवर्षेभ्यस्तत्र किमपि शैथिल्यं प्रायेणानुभूयते ।
संस्कृत शोधसंस्थानमपि स्वकार्यालय एव प्रतिवर्षं केवलं साधारण समरोह-
मेवेदानीं करोति । नोचेत् प्रतिवर्षं अ० भा० समारोहाः संस्कृतस्य भवन्ति
स्म । अर्धव्ययस्य व्यवस्था प्रशासनेन क्रियते स्म अर्धव्ययश्च शोधसंस्थानेन
संस्थापकद्वारा दत्तधनेन क्रियते स्म । प्रशासनानुदानं गतवर्षत्रयेभ्यः समा-
प्तमेवास्ति । तस्मात् विशालसमारोहायोजनमतीव कठिनमस्ति जातम् ।
अनेन संस्कृतप्रसारकर्मणि महान् बाधो जायते ।

संस्कृताध्यापक परिषदपि स्वकार्यक्रमेण - अध्यापकेषु जागृतिमुत्पादयति
स्म । तत्कार्यमपि अवरुद्ध प्रायमिव प्रतीयते । युवकेषु तु उत्साहो भवति ।
संस्कृताध्यापकाः :- आर्थिकदृष्ट्या अपि सम्पन्ना एव सन्ति । ते स्वहिताय
एव चेत् - वार्षिकवेतनस्यांशमेकमपि व्ययी कर्तुं सन्नद्धा भवेयुस्तु तेन
प्रादेशिकः कश्चिदपि प्रभावो जायते । संस्कृतज्ञानां निद्रा दूरी भवति ।
अतो न स्वापकालोऽयं मान्याः, जागरणं विधाय संस्कृतस्य संस्कृतेश्च
रक्षार्थं भवद्भिः स्वकीयाः प्रयासा न त्याज्याः । एवमेव दशा वर्तते संस्कृत-
विद्यालयानामपि । तेषामध्यापका अपि पारस्परिकसहयोगहीनाः- अवसी-
दन्ति । ऐक्यभावेन भवद्भिः सर्वैः संस्कृत - संस्कृतिरक्षायै न तु केवलं
स्वार्थाय एव- स्वप्रयासा साधनीया त्याज्या वा । इयं तु सुरवाणी अमृता
वर्तते परन्तु । अस्माकं किं कर्तव्यविमूढानामदूरदर्शिनां सयोगेनेयमपि
मृतभाषा लोकैरुद्घोष्यते

जागरणकाल एष । आगम्यतां सुरगिरः प्रसाराय बद्धपरिकराः भवन्तु
भवन्तः ।

- केशव शर्मा

मुद्रकः प्रकाशक :—
भारतीमुद्रणालय भारती विहार, मशोबरा - शिमला १७१००७ (हि. प्र.)
स्वामीः- श्रीमती आचार्य रत्नकुमारी शर्मा,

दूरभाष : [78459 / 8-200]

नवम्बर १९९२ मार्गशीर्ष २०४९ — वर्षम् - ३७ अङ्कः २

वार्षिक मूल्यम् ५० रु०

R. N. 6384/57 ल – 33/एस. एम. / 10/91



यया स्वकीयदेहोऽपि देशसेवाकृते स्वयम्
अर्पितो निर्भयत्वेन धन्या सा इन्दिरा सदा ।१।
तयाऽयं भारतो देशस्तथैव च हिमाचलः
सेवितौ सततं लक्ष्म्याः स्वप्राणान्तं सनिश्चयम् ।२।



संस्कृतस्य सचित्रमासिकम्

# दिव्यज्योतिः





...कराचार्य संस्कृत चित्रपटस्य एकं चित्रम् ।



शिमला दिसम्बर, १९९२

अङ्कः ३

# दिव्यज्योतिः



संस्थापितम् १९५६
प्रधानसम्पादकः—
आचार्य केशव शर्मा

संस्थापकाः तथा
आद्यसम्पादकाः
आचार्यश्रीदिवाकरदत्त
शर्माणः,
राष्ट्रपतिसम्मानिताः

(पत्रमिदं हि०क० सं० भा० अकादमी प्रदत्तानुदानसाहाय्यम् । पत्रिकाग
मुद्रणदोषाणां सम्पादकीयनीति-विषये च अकादमीदायित्व नास्ति)

हिमाचल प्रदेश—पंजाब-हरियाणा-जम्मूकश्मीर - मध्य प्रदेश-
राजस्थान—महाराष्ट्र उत्तरप्रदेश शासन-स्वीकृत केन्द्रशासनपु
स्कृतं सचित्रं संस्कृतमासिकम् ।


## पत्रस्य उद्देश्यानि तथा नियमाः

सरलसरससुबोध-साधनैः सर्वस्मिन् संसारे संस्कृतस्य प्रसार
साहित्यान्तर्गतानां सकलकलानां समन्वेषणं, संसारस्य हितसम्पादनम्, ए
लौकिक - अलौकिकस्वातन्त्र्यस्य प्राप्तिः ।

"दिव्यज्योतिः" प्रतिमासं पञ्चदशतारिकायाम् (आङ्गलमानेन) प्रकाशि
भवति ।

पत्रस्य वार्षिकमूल्यं ५० रु० अर्धवार्षिक २५ रु० एकस्याङ्कस्यच रु० ४/५
भवति ।

वर्षारम्भः अक्तूबरमासतः भवति ग्राहकः कस्मादपि मासाद् भवितुं शक्नोति
ग्राहकैः, "सम्पादक, दिव्यज्योतिः, भारती विहार, मशोबरा, शिमला-१७१०
इति संकेते धनादेशेन वा. शु. प्रेषणीयम् ।

# विषयानुक्रमः

# "काव्यशास्त्रविषयक–पाश्चात्य–दृष्टिः"

— डा० प्रेमलाल गौतम



भारतीय—काव्य शास्त्रवत् पाश्चात्यकाव्यशास्त्रमपि विशदं व्यापकं तथा गहनतरं विद्यते । पाश्चात्यकाव्यशास्त्रस्य आदिस्रोतः वर्तते यवनाचार्यः प्लेटो । पञ्चशताब्द्याः पूर्वार्द्धे एथेन्सस्य प्रसिद्धस्थाने जन्माधिगत्य अयं महान् वेत्ता यूनानस्य दार्शनिकेषु मूर्धन्यं स्थानं भजते । यद्यपि अयं मूलतः दार्शनिकः स्मृतिकारश्चासीत् तथापि काव्यशास्त्रे अस्य योगदानममूल्यमस्ति । साहित्यमीमांसा यद्यपि अस्य अनुषङ्गिकः विषयः आसीत् तथापि काव्यक्षेत्रे अस्य मान्यता मौलिकतां धारयति । अस्य गहनविचारशृंखला जीवनजगति च समानरूपेण प्रतीयते ।

प्लेटो पूर्वं काव्यस्य लक्ष्यं द्विविधमासीत् । आनन्दस्य प्राप्तिः तथा च शिक्षा । इदमपि स्वीकृतमासीत् यत् काव्य-रचना दैविकप्रेरणया एव भवति । तस्य कालस्य इयमुक्ति सत्यापिताऽऽसीत् यत् "Poets are born not made". 1 अमरकविः होमरः स्व रचनासु इदं समर्थितवान् यत् काव्यस्य लक्षणमानन्दस्य प्राप्ति एवास्ति । अस्यानन्दस्य उत्पत्ति कविः कलात्मकभ्रमेण "Illussion of Art" करोति । हेसिओडः 'Hesiod' काव्यस्य लक्ष्यं शिक्षा एव दैवीसन्देशस्य प्रसारमेव स्वीकरोति । मानवीयसभ्यता अपि काव्यलक्षणमुद्दश्यं च भवतः ।

---

1. 'भारतीय तथा पाश्चात्य काव्य शास्त्र का संक्षिप्त विवेचन' लेखक डा. सत्यदेव चौधरी डा० शान्ति स्वरूप गुप्त प. स 224

प्लेटो प्रतिभा—सम्पन्न: दार्शनिक: आसीत् । राजनीतिरपि अस्य प्रियविषय: आसीत् । तस्य कालं यावत् कवि उपदेशकरूपेण मार्गदर्शकरूपेण च एव स्वीक्रियते स्म । कविम्प्रति यूनानस्य समाजे अन्धश्रद्धाया: 'भावनाऽऽसीत् । प्लेटो इमाँ भावनां भर्त्सितवान् । इयं भर्त्सना एव प्लेटोसिद्धान्तस्य आधारशिला अस्ति ।

स: सत्यस्योपासक: तथा तर्कस्य पक्षपाती आसीत तस्य सत्यं शिवत्वस्य भावनायां तथा आदर्शवादस्य दृष्टिकोणे स्थिरतामासीत् । सत्यस्य प्राप्ति: समाजस्योद्धरणम् मानवस्य मुख्यकर्त्तव्य भवति । प्लेटो महाभागस्य कथनानुसारं काव्यं कला एव अस्ति । कलाया: विशेषता भवति अनुकरणम् अर्थात् अनुकरणमेव कला अस्ति । कलाकार: वस्तूनाम् निर्माण न कृत्वा तस्यानुकरण करोति । त्रिविधा कला इत्युच्यते । उपयोगस्य कला, निर्माणस्य कला तथा च अनुकरणस्य । प्लेटो काव्यं कलाया: प्रस्तुति: 'Representation of Art इति स्वीकरोति । कवि: सत्यस्यानुकरणस्य अनुकर्ता भवति । स: न तु विषयस्य सम्यक् ज्ञाता भवति न तु तस्य उपादयता जानाति । तस्य अनुसारेण काव्यं सत्यस्य निकष वर्तते व्यक्ते: जीवनाय बलप्रदायकं सत्यमस्ति । प्लेटो सत्यस्य कारकं ईश्वरमेव मन्यते, इयं सृष्टि: तस्य सत्यस्य अनुकृतिरस्ति । कवि: अस्या एव अनुकृते: अनुकरणं करोति । अत: काव्य मूलसत्यात् त्रिगुणित दूरमस्ति । इयमेव धारणा सृष्टे: सम्बन्धे अस्ति । सृष्टे: निर्माणस्य Idea अथवा Form पूर्वमुद्भासितमभवत् । इयं सृष्टि: तस्यैव मूलरूपस्य अनुकृतिरस्ति । सत्यस्य स्पष्टार्थं प्लेटो पर्यङ्कस्य (Bed) उदाहरणं ददाति । तन्मतानुसारेण ईश्वर: एकस्यैव पर्यंकस्य रचनां करोति । शेषाणि पर्यङ्काणि मूलपर्यङ्कस्य अनुकृति रूपाणि सन्ति व्यक्तसंसारस्य सौन्दर्यं कस्यचिदादर्शस्य वस्तुगता अभिव्यक्ति अस्ति । कवि: सत्यस्य अनुकृतरूपस्य अनुभावन कृत्वा यत किञ्चिदपि प्रस्तौति, तत्सव तस्यैवानुकृतरूपस्य अनुकरणमस्ति । काव्यसत्यविषयकस्य सिद्धान्तस्य पुष्ट्यर्थं प्लेटो युगीयकाव्यरचनानां प्रश्रय स्वीकृतवान् । तेनेद सिद्धं कृत यत् तत्कालीनकाव्यरचनानां विषय; व्यवहारिक जगत: अनुरूपो न भूत्वा अवाञ्छनीयानां तत्वानां वर्णनं करोति । उदाहरणत: दु:खदायामवस्थायां नायकस्य (Hero) रोदनं

व्यवहारत: अवाञ्छनीयं वर्तते। यतोहि सहिष्णुता मानवस्य धर्मः अस्ति। प्लेटो महाभागस्य कथनानुसारेण कविता अज्ञानजन्या भवति। यतः कविः अनुकरणस्य ज्ञाता अपि न भवति मूलविषयस्य अपि सः ज्ञाता न भवति। कविवर्णनं तु सत्यस्य आभास मात्र भवति। कवेः अज्ञानजन्यमनुकरणं भ्रामकं तथा अनुपयुक्तमेव भवति। तस्य मतानुसारेण कविता विवेकरहिता अपि भवति। कविः केवलं मानवस्य वासनामेव उत्तेजयति। अनेन कविरपि यशसः प्राप्तिं करोति, पाठकसमूहोऽपि हर्षं प्राप्नोति। वासनानां जागृतिः क्षुद्रा प्रवृत्तिः अस्ति। अनेन विवेकस्य नाशः आत्मसंयमस्य च हानिः दृश्यते। सः ऐन्द्रियस्य-आनन्दस्य अपेक्षया बौद्धिकमानन्दं हितकरं स्वीकरोति साहित्यनिरूपणे अपि सः आदर्शदृष्टेः निरूपणमिच्छति। तन्मतानुसारेण विवेकयुक्ता तथा बुद्धिसापेक्षा कविता एव उत्कृष्टा तथा आदर्शयुक्ता चास्ति। आदर्शकाव्ये प्लेटो सरलता—सरलता, उद्देश्यस्यश्चैकता, अन्विति चलयात्मकताश्चोरीकरोति। धार्मिकशिक्षया नैतिकशिक्षया युक्ता कविता एव श्रेष्ठा अस्ति। सत्य शीलं तथा शक्तिवर्णनमेव कविधर्मः अस्ति। प्लेटो महोदयः भावुकतर्ता हेयरूपेण स्वीकरोति। तन्मतानुसारेण कवीगुणत्रयमपेक्षितमस्ति —

१. दैवीशक्तिः "Natural gift"

२. आवश्यकनियमानां ज्ञानं,

३. अभ्यासश्च त्रिविधं काव्यं भवति। अस्य मतानुसारेण काव्यं-
अनुकरणात्मकम्।
२ प्रकथनात्मकम्। ३. मिश्रम्।

प्लेटो कलात्मकरचनार्थम् ऐन्द्रिय—ऐक्यं आवश्यकरूपेण स्वीकरोतिः काव्यप्रयोजने कविः शिवत्वस्य भावनायाः समर्थकः अस्ति। काव्यस्य प्रयोजनं मुख्यरूपेण मानवमात्रस्य उत्थानं भवति।

— राजकीय संस्कृत कालेज सोलन
(हि. प्र.)

★



## श्रीस्वामिनारायणीयं

# संस्कृतसाहित्यम्

साधु: भक्तिप्रियदास: कोठारी स्वामी
वेदांताचार्य Ph. d



संस्कृतं शोभते रत्नं, संस्कृत: शोभते मणि: ।
मनुष्य: संस्कृतो मान्य:, साहित्यं संस्कृतं तथा ।
यावद्गंगा च गोदा च, यावद् विन्ध्यहिमालयौ ।
यावद् भारतवर्षं स्यात् तावदेव हि संस्कृतम् ।

भारतीयानां सर्वासां भाषाणां जननी देवगिरेति निश्चप्रचम्। संस्कृतभाषा प्राचीनतमा। यद्यपि प्राचीनवैदिकभाषा इदानीं वैविध्यं पृथक्त्वञ्च दृश्यते किन्तु, जैमिनिमतानुसारेण लौकिकं- वैदिकञ्चो-भयमपि समानतया मान्यम् ।

संस्कृतं यावत्प्राचीनं तावद् अर्वाचीनमपि । साम्प्रतमपि संस्कृत-भाषा सर्वत्र सम्मान्या। सर्वेषां भारतीयानां मुखात् प्रतिशतं ५० शब्दा: संस्कृत भाषाया एव नि:सरन्ति । वैदेशिक धर्मावलम्बिभि रपि 'ख्रिस्त-पुराणम्' अल्लोपनिषद् इत्यादिकं संस्कृते निर्मितमेतदेव संस्कृतभाषाया आधुनिके काल आवश्यकतां सूचयति ।

भारतस्य स्वातन्त्र्यानन्तरम् विज्ञानक्षेत्रे राजकीयक्षेत्रे वा आङ्गल-भाषात: हिंदुस्तानी भाषायां निश्चिता: शब्दा: संस्कृत भाषाया एव-

यथा:

कोम्प्युटर - संगणक यंत्र
एज्युकेशन डिपार्टमैन्ट—शिक्षा विभाग:
सेक्रेटरी - सचिव:
इत्यादय: ।

संक्षेपेणेदमेव वक्तव्यं यत् प्राचीनकालाद् अद्यावधि—भाषाविकासकाले संस्कृतमावश्यकमेव ।

एतदेव विचाररीतिं स्वामिनारायण सम्प्रदायो नातिक्रामति । यद्यप्यस्मिन् सम्प्रदाये बी. ए. एन्जिनीयर, डाक्टर... इत्यादिपदवीधारिणः इङ्गलण्ड-अमेरिका प्रभृतिदेशादपि समागताः साधवः सन्ति । तेषां विचारः आधुनिकस्तथापि संस्कृतानुरागः संस्कृतमहिमानं द्रढयति ।

## शिक्षापत्री

भगवान् स्वामिनारायणः द्विशतवर्षेभ्यः प्राक्स्वशिष्यसमाजे गुर्जरभाषायामेव प्रवचनादिकं चकार अत एव सम्प्रदायस्य मुख्यस्तात्विको ग्रन्थः वचनामृतम् गुर्जरभाषायामेव मान्यः पूज्यश्च वर्तते । तथापि स्वयं संस्कृतानुरागी तत्रप्रमाणं यत् 'स्ववृद्धशिष्यं मुक्तानन्दं ५६ तमे वर्षेऽपि संस्कृताध्ययने प्रोत्साहितवान् ।

स्वेन बाल्यकाले स्वगुरोः सकाशे वेदादिकमधीतम् अत स्वेनैव शिक्षापत्री नामकः आधारग्रन्थः संस्कृते विरचितः ।

लिखामि सहजानन्दस्वामी सर्वान्निजाश्रितान् ।<br>
नानादेशस्थितान् शिक्षापत्रीं वृत्तालयस्थितः ॥

यस्यां शिक्षापत्र्यां २१२ परिमिताः श्लोकाः सन्ति । लघ्वाकारा अपि समस्तशास्त्रदुग्धाब्धिमध्योद्धृतम् अनुत्तममृतमिव सारभूता अस्यां व्यावहारिकी पारमार्थिकी च नीतिः प्रदर्शिता । वैष्णवराज श्री वल्लभाचार्यपद्धतिमनुसृत्य व्रतोत्सवाः रामानुजाचार्यपद्धतिं स्वीकृत्य तत्त्वज्ञानञ्च प्रदर्शितम् । सर्वासां देवतानां सम्मानसूचकं पद्यम् ।

दृष्ट्वा शिवालयादीनि देवागाराणि वर्त्मनि ।<br>
प्रणम्य तानि तद्देवदर्शनं कार्यमादरात् ।२३।

अस्या उपरि अर्थदीपिका नाम्नी टीकाऽपि शतानन्दमुनिना लिखिता । यस्याञ्च टीकायां श्रुति-स्मृतिसंदर्भानां सहस्रशः प्रदानम् तार्किकरीत्या विवरणं प्रमादगाम्भीर्यम् सारल्यञ्च विद्वज्जनानां प्रमो-

दस्थलम् । काशिकहिन्दूविश्वविद्यालयस्य संस्कृतपरीक्षायां रामानुज-वेदान्ते आचार्य परीक्षायां वर्तते ।

## शतानन्दमुनिः

स्वामिनारायणसम्प्रदाये संस्कृतसाहित्यरचयितृषु चूडायितं कविताकामिनीप्रियङ्चतन्नाम । ऐतेन बहवो ग्रन्था विरचिताः किन्तु सर्वेष्वपि ग्रन्थेषु मुख्यो ग्रन्थ :—

## सत्सङ्गिजीवनम्

अस्य पञ्चसु प्रकरणेषु श्रीस्वामिनारायणभगवतो जीवनम् व्रतोत्सवरूपञ्च वेद-उपनिषद् गीता – भागवत - विष्णुसहस्रनामयाज्ञ-वल्क्यस्मृतिः विदुरनीति-मान्य ग्रन्थानां संक्षेपेण संकलनम् नियमधर्माश्च निरूपिताः ।

प्रथमप्रकरणे ६० अध्यायाः द्वितीये ५२ अध्यायाः तृतीये ६४, चतुर्थे ७३ पञ्चमे च ७० अध्यायाः सन्ति श्रीमद् भागवतशैलीमनुसृत्य लिखितोऽयं ग्रन्थः 'स्वामिनारायण पुराण' सदृश एव ग्रन्थसारल्यमधो-लिखितेन श्लोकेन ज्ञायते स्वमातरम् साधुमहिमानमुपदिशति—

'दृष्टाः' स्पृष्टा नताः कृतपरिचरणाः भोजिताः पूजिता वा
सद्यः पुंसामघौघं बहुजनिजनितं घ्नन्ति ये वै-समूलम् ।
प्रोक्ताः कृष्णेन ये वा निजहृदयसमा यत्पदे तीर्थजातं
तेषां मातः ! प्रसङ्गात् किमिह ननु सतां दुर्लभं स्यान्मुमुक्षोः ।

गुजराती भाषायामनुवादेन महायं ग्रन्थः बहुधा वृत्तालयात् प्रकाश्यं नीतः । शुकानन्दमुनिकृता हेतुसंज्ञिका विहारिलालमहाराज कृता 'भावबोधिनी' पंडितवर्यकृष्णमाचार्यकृता 'भावप्रदीपिका' च ग्रन्थस्य माहात्म्यं विभ्राते ।

## हरिवाक्यसुधासिन्धुः

सागरसदृशोऽयं ग्रन्थः । भगवत्स्वामिनारायणेन गुर्जरभाषायां वचनामृतानि प्रोक्तानि तस्यैवानुवादोऽयम् २६२ तरङ्गात्मके ग्रन्थे-ऽस्मिन् तत्त्वमीमांसा नीतिमीमांसा ज्ञानमीमांसा च सङ्गृहीता । अनुवादकेन श्री रघुवीराचार्येण भगवतां सर्वावतारित्वं निर्दिश्य स्वेष्ट-

देवभक्तिः व्यक्तीकृता । तत्त्वमीमांसायां जीव - इश्वर - माया - ब्रह्म परब्रह्म पञ्च नित्यतत्त्वानां निरूपणम्, तत्रापि च ब्रह्मणो धामरूपेण सेवकरूपेण मोक्षप्रदातृत्वेन नैकब्रह्माण्डस्थितिरक्षकत्वेन च वर्णनम् दार्शनिकानां संशोधनविषयः ।

'तत्र ब्रह्मात्मना कृष्णसेवा मुक्तिश्च गम्यताम्' इति मुक्तिविचारोऽपि नवीनः ।

## अचिन्त्यानन्द ब्रह्मचारी

एतेन महाकविना ३३ सहस्रश्लोकात्मकः हरिलीलाकल्पतरुनामकः महाग्रन्थः विरचितः । अस्मिन् महाग्रन्थे साहित्यस्य उत्तमाः कृतयः सन्ति । अस्योपरि मणिशंकरउपाध्यायनामकेन विदुषा वाचस्पतिपदव्यर्थं शोधप्रबन्धः रचितः । स कथयति:— "अयं ग्रन्थः साहित्यानुरागिणां महान् साहित्य ग्रन्थः, वैयाकरणानामपि मान्यः, दार्शनिकानां दर्शनग्रन्थः श्रद्धालूनां श्रद्धामयः मोक्षेच्छूनां प्रदश्चास्ति ।

अचिन्त्यानन्दब्रह्मचारिणा पञ्चाधिका अन्ये ग्रन्था निर्मितास्तेषु कुमारसम्भव महाकाव्यानुकारि हरिसम्भवमहाकाव्यम् विवेकशतकञ्च मुख्यौ । हरिसंभवमहाकाव्यस्योपरि सुरतनगरात् शोधप्रबन्धः प्रकाशितः ।

अन्यानि स्तोत्राणि बहूनि रचितानि ।

## पण्डितः नित्यानन्दमुनिः

हरिदिग्विजय नामकं ग्रन्थं विरचयामास दशोल्लासात्मकः ग्रन्थः भगवत्स्वामिनारायणसन्निधावेव विरचितः । अस्मिन् भगवता विद्वद्भिः विशिष्टः शास्त्रार्थः वर्णितः ।

स लिखति:—

हरिदिग्विजयाख्योऽयं स्वामिनारायणाज्ञया ।
तदन्तिके स्थितिं कृत्वा कृतो दुर्गपुरे मया ।।

शाण्डिल्यभक्तिसूत्रेषु भाष्यमपि मुनिना विरचितम् यस्योपरि महानिबन्धः योगिमहाराजानां प्रियशिष्येण भगवत्प्रियस्वामिना विलिख्य वाचस्पति—उपाधिः प्राप्ता ।

गोपालानन्द स्वामिना

बादरायणप्रसिद्धप्रस्थानत्रयीं गृहीत्वा भाष्य विरचय्य स्वामिनारायण सम्प्रदायस्य वेदान्त दार्शनिकेषु प्रसिद्धिः कृता ।

तत्रापि उपनिषद् भाष्यं गीताभाष्यञ्चातिसरलम् रामानुजसम्प्रदायस्य संशोधनकेन्द्रात् 'मेलुकोटे' (कर्णाटक) स्थानात् प्रकाशितम् । वृत्तालयादपि सानुवादं प्रकाशितम् । मुक्तानंदमुनिना ब्रह्मसूत्रभाष्यं विरचितम् । तस्योपरि गोपालानन्देन 'ब्रह्मसूत्रार्थप्रदीपः टीका लिखिता । एतेषां महानुभावानाँ स्वधामगमनानन्तरमपि संस्कृतविरचनं प्रकाशनञ्चाविरतं सम्प्रदाये प्रचलितम् । नैकैः विद्वद्भिः ग्रन्था: विरचिताः । तेषु बलरामदासः रघुवीराचार्यः भगवत्प्रसादाचार्यः योगानन्दमुनिः दीनानाथभट्टादीनां ग्रन्थाः मुख्याः ।

सार्धशतवर्षपरिमिते काले विशालं साहित्यं निर्मितम् यच्च प्रायः संस्कृतम् अस्ति ।

गते काले पण्डित श्री कृष्णावल्लभाचार्या अपि अस्मिन् सम्प्रदाये जाता । यैः स्वामिनारायण दर्शनम् न्याय सिद्धान्तमुक्तावलया: किरणाक्तिः, योगसूत्रोपरि स्वामिनारायणभाष्यम् सांख्यकारिकाया उपरि किरणावली हरिवाक्यसुधासिन्धोः सत्संगभाष्यम् इत्यादयो बहवो ग्रन्थाः निर्मिताः । ये च प्रायः चौखम्बा संस्कृतप्रकाशनतः प्रकाशिताः । १२६००० श्लोकात्मिका लक्ष्मी नारायणसंहिता श्रेतायनव्यास नाम्ना स्वनैव विरचिता । या च संहिता पञ्चरात्र ग्रन्थान् अनुकरोति ।

ब्रह्मस्वरूपयोगिराजाः (येषां जन्मशती महोत्सवः प्रचलति) संस्कृत भाषाऽनभिज्ञा अपि पराविद्याचणा आसन् तैः संस्कृताध्ययनार्थम् साधवो प्रेरिताः २१ शास्त्रिणः २१ आचार्याः २१ पुराणविदश्च स्युरिति भृश कथयामासुः । एतेषामाराया नैके साधवः शास्त्रनिष्णाताः सञ्जाताः । चतुर्भिः साधुभिः संस्कृत भाषायामेव महान्तश्शोध प्रबन्धाः विरचिताः ।

इदानीं प्रमुखस्वामि महाराजानां सन्निधौ साधवछात्राः पठन्ति न्यायव्याकरण वेदान्तादीनां दुरूह ग्रन्थान् ।

——

# प्रकृतिपुरोहितः कालिदासः

— आचार्य सुरेश:



महाकवि: कालिदास: संस्कृतसाहित्ये प्रकृते: अनुपमचित्रकार: अस्ति । तस्य साहित्ये हिमालयस्य, मानसरोवरस्य, नदीनां, निर्झराणाम्, पर्वतानाम्, कन्दराणाम् वनानाञ्च, सूर्योदयस्य सूर्यास्तस्य च प्रकृते: विभिन्नरूपाणां वर्णनमस्ति । कालिदासस्य ऋतुसंहारं मेघदूतञ्च प्रकृतिवर्णनस्य अनुपम उदाहरणौ स्त: । विक्रमोर्वशीये प्रकृत्या सह मानवस्य हार्दिकभावनानाम् सामञ्जस्यमस्ति ।

अस्य अभिज्ञान शाकुन्तलम् तु प्रकृते: क्रीडास्थली वर्तते । नाटकस्यारम्भे वय भगवत: शकरस्य प्रकृतिगतानाम् विभिन्नरूपाणां दर्शनम् कूर्म: । दर्शनीयोऽयं श्लोक :—

"या सृष्टि: स्रष्टुराद्या वहति विधिहुतं या हविर्या च होत्री
ये द्वे कालं विधत्त: श्रुतिविषयगुणा: या स्थिता व्याप्य विश्वम् ।
यामाहु: सर्वबीजं प्रकृतिरिति यया प्राणिन: प्राणवन्त:
प्रत्यक्षाभि: प्रपन्नस्तनुभिरवतु वस्ताभिरष्टाभिरीश: ।।

कालिदासस्य विचारेषु प्रकृतिः मानवजीवनेन सम्मिलिताऽस्ति शकुन्तलायाः रूपस्य तुलना कीदृक् बुद्धिचातुर्येण कृताऽस्ति । यथा—

अधर: किसलयराग: कोमलविटपानुकारिणौ बाहू ।
कुसुममिव लोभनीयम् यौवनमङ्गेषु सन्नद्धम् ।।

प्रकृतिपुरोहितेन कालिदासेन चित्रिता: प्रकृतिरपि शकुन्तलाया विरहजन्यदु:खेन पत्रपातव्यपदेशेन अश्रूणि विमुञ्चति । कीदृशी निसर्गोज्ज्वला कालिदासस्येयं भारती । यथा—

"उद्गीर्णदर्भकवला मृगी परित्यक्तनर्तना मयूरी ।
अपसृतपाण्डुपत्रा मुञ्चति अश्रुणीव लता ॥

शाकुन्तलस्य चतुर्थोऽङ्कस्तु शाकुन्तल नाटकस्य आत्माऽस्ति । अङ्केऽस्मिन् शिष्यद्वारा प्रातःकालस्य वर्णनम् अस्य सूचकमस्ति यत् शकुन्तलाया जीवने निकटभविष्ये महती विपत्तिः आगमिष्यति इदमपि कालिदासेन प्रकृत्या माध्यमेन सूचितम्:—

"यात्येकतोऽस्तशिखरं पतिरोषधीनां
आविष्कृतोऽरुणपुरः सर एकतोऽर्कः
तेजो द्वयस्य युगपद्व्यसनोदयाभ्याम्
लोको नियम्यत इवात्म दिशान्तरेषु ॥

तपोवने शकुन्तलाया वन्यप्राणीनां लतापादपैः सह कीदृशः बन्धु सदृशः सम्बन्धः दर्शनीयो यथा :—

पातुं न प्रथमं व्यवस्यति जल युष्मास्वपीतेषु या
नादत्ते प्रियमण्डनापि भवतां स्नेहेन या पल्लवम्
आद्यः वः कुसुम प्रवृत्तिसमये यस्या भवत्युत्सवः
सेयं याति शकुन्तला पतिगृहं सर्वैरनुज्ञायताम् ॥

अतः शक्यते कथयितुं यत् कालिदाससदृशः प्रकृतिवर्णनकर्ता न भूतो न भविष्यति । जर्मनकविः गेटे महोदयोऽपि अस्य नाटकस्य प्रशंसायामाह यत् "ऐश्वर्यं यदि वाञ्छसि प्रियसखे शाकुन्तलं सेव्यताम् ।"

प्रवक्ता— एस० डी० कालेज,
सबाठु—(हि. प्र.)



# निरीक्षकाणां सम्मेलनावसरे

एच, ए शाण्डिल्य
उल्हास नगर, बम्बई



पुण्याभिधान नगरं विशालं मुम्बानिकुञ्ज कथयन्ति लोकाः ।
तत्राऽस्ति पीठो ननु वृक्षरूपः प्रमाणपत्राणि फलानि तस्य १।

विष्णुर्यथा विश्वमिदं बिभर्ति पीठः पवारेण धृतस्तथैव ।
भारं समुद्वाह्य महाप्रयासैस्तस्याप्रबन्धं विदधाति सोऽपि ।२।

योऽध्यक्षरूपस्तु पवार नामा प्रख्यात कीर्तिः प्रथितोऽस्ति लोके ।
तस्यैव बुद्धि प्रतिभां विलोक्य प्रासूयमाना रसिका भवन्ति ३।

तस्मै सुवृक्षाय च देशपाण्डे 'जलं ददाति स्वकरेण नित्यम् ।
प्रावर्णनीयो महिमास्ति तस्य विराजते सोऽपि विनम्रमूर्तिः ।४।

शाखाप्रशाखापरिपूर्णपीठो धत्ते विकासं तरुवत्सुरम्यम् ।
हिन्दी विभागोऽस्य सुपुष्पयुक्तस्तनोति गंधं सकले प्रदेशे ।५।

शोभा विचित्रा निशि तारकाणां परञ्च चन्द्रेण विनान्धकारः ।
हिंदी विभागे बहवः सुयोग्या विना न भान्ति कुलकर्णिना ते ।६।

निरीक्षकाग्र्यः कुलकर्णि नामा करोति कार्यं वरया सुबुद्ध्या ।
सहायकाः पञ्चजना तदीया विराजते राज्यपदे सधीरः ७।

पञ्चान्सुतोल्य प्रतिमानयन्त्रे ददाति शीघ्रं स च बालकेभ्यः ।
धर्मावतारो निपुणः स्वकार्ये मूर्त्या विभातीव युधिष्ठिरस्य ।८।

'भोपट्करो' भीम इवात्र शूरः
प्राध्यापकोऽयं सुविचारशीलः ।।
सुतीव्रबुद्ध्या च परिश्रमेण
हिंदीप्रचारे कटिबद्ध प्रास्ते ।९।

बी. ए. उपाधि 'भ्रमर' प्रभावाल्लब्धोमयाऽतः स गुरुर्मदीयः ।
हिंद्याः सुगन्धं वितनोति देशे वीरोऽर्जुनोऽयं निजकर्मदक्षः ।१०।

दाण्डेकरोतीव विशालबुद्धिमार्गप्रदाता मम सोऽस्ति धीमान् ।
ज्ञानप्रदीपो वितरन् प्रकाशं तमोविनाशी नकुलोऽस्ति नूनम् ।११।

यथार्थनामा ननु 'शाह' शूरो गांभीर्ययोगाद्द्विगुणो विभाति ।
हिंद्याः स सेवां सुतरां वितन्वन् सौम्यस्वभावः सहदेव एषः ।१२।

जानाति देवी कुलकर्णिनाम्नी साहित्यविद्यां सकलां प्रशस्याम् ।
सुलब्धकीर्तिर्विदुषी विभाति कुन्तीव सा पीठविवर्धिनी च ।१३।

यत्रास्ति राज्यं न तु पाण्डवानां कृष्णायते यत्र च देशपाण्डे ।
पीठे हि दोषो भविता न तेन भाग्यैर्विचित्रै ननु सङ्गमोऽयम् ।१४।

आचार्यपीठे यजने पवारो निरीक्षकाश्च द्विजकार्यलग्नाः ।
हविष्प्रदाश्छात्रगणाः फले तु केचित्सहासा अपरे सबाष्पाः ।१५।

वयं द्विजवरा सर्वे पीठवृक्षसमाश्रिताः
धनरूपं फलं प्राप्य गच्छामः स्वनिकेतनम् ।१६।

जीवेद्वर्षसहस्राणि कीर्तिं विदेत शाश्वतीम्
पीठोऽयं कल्पशाखीव कामान्नो पूरयन् सदा ।१७।

## दिव्यज्योतिषः शुल्कमविलम्बं प्रेषयित्वा सहयोगो विधेयः ।

सम्पादकः

# मा कर्तव्यः दुर्व्यवहारः

श्याम लाल शर्मा



नगरे-नगरे, ग्रामे-ग्रामे सदने-सदने जन-जनवदने ।
वसतु चिरं कल्याणी वाणी । सदा-सर्वदा खलु कल्याणी ।
मेधावी पुरुषार्थी भवतु । कल-कल, छल-छल, वहतु संस्कृतम् ।
धृत्वा शासकीयमधिकारम् । मा कर्तव्यः दुर्व्यवहारः ।१।

संस्कृतभाषा ललिता भाषा निर्मलवेषा विगलितदोषा ।
सत्यशीलसौंदर्यसमीरा । ज्ञानस्याहुः मनीषी धीरा ।
सर्वा भाषा जननी भाषा । कपटक्रोधदहनार्हा भाषा ।
धृत्वा शासकीयमधिकारम् । मा कर्तव्यः दुर्व्यवहारः ।२।

उग्रो नहि संस्कृतसंसारः । ज्ञानदयासहितोऽस्याः सारः ।
नेतारो यूयं यदि आर्याः । संस्कृतभाषा वै सुरभाषा ।
द्वादश कक्षां यावत् अस्याः । अध्ययनमनिवार्यं कार्यम् ।
धृत्वा शासकीयमधिकारम् । मा कर्तव्यः दुर्व्यवहारः ।३।

संस्कृतभाषा भूतलभाषा । नाशयति सा दोषसमूहम् ।
श्यामित भाषा नहि करणीया । श्यामत्वेन सदोषा सा स्यात् ।
संस्कृतभाषायाः अपमानम् । भारतस्य वै तत् दुर्भाग्यम् ।
धृत्वा शासकीयमधिकारम् मा कर्तव्यः दुर्व्यवहारः ।४।

— मुख्याध्यापक पाठशाला गुमणा
जिला शिमला हि. प्र.

# उत्तर-प्रदेश संस्कृत अकादमी

## संस्कृत भवनम्, नया हैदराबाद, लखनऊ-२२६००७

उत्तर प्रदेश संस्कृत अकादमी की पुरस्कार योजना के अन्तर्गत निम्नलिखित पुरस्कारों हेतु कैलेण्डर वर्ष १९९० एवं ९१ में प्रकाशित संस्कृत की मौलिक तथा उत्कृष्ट रचनाएं लेखकों एवं प्रकाशकों से ३१ दिसम्बर १९९२ तक आमन्त्रित की जाती हैं। सभी पुरस्कार दोनों वर्षों हेतु पृथक् - पृथक् प्रदान किये जाएंगे।

१. विशेष पुरस्कार (बारह) (६+६) प्रत्येक ५,००० (पाँच हजार) रु० का, संस्कृत भाषा में विरचित विशिष्ठ रचनात्मक अथवा समीक्षात्मक कृतियों के लिए। इस वर्ष में एक पुरस्कार पालि तथा प्राकृत में रचित ग्रन्थों के लिए आरक्षित है, किन्तु इन भाषाओं में पुरस्कार हेतु उपयुक्त ग्रन्थ उपलब्ध न होने पर उसे संस्कृत के ग्रन्थ के लिए दिया जा सकेगा।

२. विविध पुरस्कार (चालीस) (२०+२०) प्रत्येक २,००० (दो हजार) रुपए संस्कृत में रचनात्मक कृतियों एवं संस्कृत—हिन्दी में रचित समीक्षात्मक कृतियों के लिए।

नामित पुरस्कार का पात्रता क्षेत्र समस्त भारतवर्ष होगा। शेष पुरस्कार उत्तर प्रदेश के निवासियों के लिए सुरक्षित हैं। पात्रता हेतु लेखक को उत्तर प्रदेश का मूल-निवासी होना चाहिए अथवा वह उत्तर प्रदेश में कम से कम पिछले पांच वर्षों से निवास कर रहा हो। प्रदेश में निवास करने का प्रमाणपत्र देना होगा। लेखक-प्रकाशक को अपनी पुस्तक की आठ प्रतियां अकादमी को भेजनी होगी, जो वापस नहीं की जाएगी। हिन्दी—अंग्रेजी में प्रकाशित शोध-ग्रन्थों पर पुरस्कार हेतु विचार नहीं किया जायेगा। संस्कृत से हिन्दी में अनूदित रचनाएं प्राचीन महत्वपूर्ण ग्रन्थों का समीक्षात्मक सम्पा-

दम एवं उनकी नवीन व्याख्याएं पुरस्कार के लिए अर्ह होंगी, किन्तु संस्कृत में लिखित पुस्तकों को वरीयता दी जायेगी। पाठ्य पुस्तकों पर पुरस्कार हेतु विचार नहीं किया जाएगा। विशेष परिस्थितियों में संस्कृत में लिखे गये उच्चकोटि के शोध ग्रन्थों पर विचार किया जा सकता है।

प्रत्येक पुरस्कार पर आवेदक द्वारा निम्नलिखित सूचनाएं अंकित करना अपेक्षित है। जिन लेखकों को उनके ग्रन्थों पर लगातार तीन वर्ष पुरस्कार मिल चुका है, वे इस वर्ष पुरस्कार के पात्र नहीं होंगे, अतः वे अपने ग्रन्थ न भेजें आवेदन पत्र के साथ निम्नलिखित घोषणा पत्र भरकर भेजना अनिवार्य होगा।

## घोषणा पत्र

१. पुस्तक का विषय।

२. लेखक का नाम।

३. संस्था का नाम, यदि कोई हो, जिसमें लेखक कार्यरत हैं।

४ लेखक का प्रमाण पत्र (निम्नलिखित रूप में)

(क) मैं प्रमाणित करता हूं कि मेरी उपर्युक्त रचना मौलिक-अनूदित० नवीन — व्याख्या प्रमाणित अनुवाद के साथ प्रथम बार वर्ष १९९० अथवा ९१ में प्रकाशित हुई हैं।

(ख) यह रचना शोध ग्रन्थ है-नहीं है।

(ग) मैं जन्म से उत्तर प्रदेश का निवासी हूँ गत पांच वर्षों से उत्तर प्रदेश में रह रहा हूं।

लेखक के हस्ताक्षर

## वेद पण्डित पुरस्कार योजनान्तर्गत निर्धारित प्रपत्र

१. पूरा नाम और पता
२. स्थायी निवास
३. जन्म तिथि एवं जन्म स्थान
४, वेद के किस शाखा के विद्वान् हैं?

५. गुरु का नाम

६. वेद अध्ययन का पूर्ण विवरण—

७. अध्यापन का अनुभव विवरण सहित ।

८. प्रकाशन-रचनाएं (यदि कोई हो)

९. वर्तमान व्यवसाय

१०. शासन या किसी प्रतिष्ठान संस्थान-परिषद् द्वारा प्राप्त सम्मान-पुरस्कार का विवरण ।

११. इस योजना के अन्तर्गत यदि इससे पूर्व सम्मानित हुए हो तो उसका पूर्ण विवरण (वर्ष का स्पष्ट उल्लेख किया जाय)

१२. अन्य विशेष सूचना यदि कोई हो ।

## निर्देश

(क) उपर्युक्त संख्या १ से १२ तक से सम्बन्धित प्रमाण पत्र एवं संस्तुतियां संलग्न करें ।

(ख) क्षेत्रीय संस्कृत निरीक्षक की संस्तुति अथवा क्षेत्र के किन्हीं अन्य दो प्रतिष्ठित संस्कृत विद्वानों की संस्तुतियां जो आवेदक से व्यक्तिगत रूप से परिचित हो ।

(ग) आवेदक वेद पण्डित, वेद पाठ में प्रशिक्षित अपने ४ छात्रों के नाम पते का भी विवरण संलग्न करें ।

आवेदक के हस्ताक्षर

आवेदन—पत्र पूर्ण रूप से भरकर अधोहस्ताक्षरी को ३१ दिसम्बर १९९२ तक अवश्य उपलब्ध करा देना चाहिए । अपूर्ण तथा विलम्ब से प्राप्त आवेदन पत्रों पर विचार नहीं किया जायेगा ।

## विशेष सूचना

उत्तर प्रदेश संस्कृत अकादमी, लखनऊ ने संस्कृत की पाण्डुलिपियाँ संग्रह करने का निश्चय किया है । जिस व्यक्ति अथवा संस्था के पास संस्कृत की महत्वपूर्ण पाण्डुलिपियां हों वह उन्हें निःशुल्क अथवा मूल्य पर संस्कृत अकादमी को देने के लिए अधोहस्ताक्षरी से पूर्ण विवरण सहित पत्र द्वारा अथवा व्यक्तिगत रूप से सम्पर्क करें ।

(मधुकर द्विवेदी)
निर्देशक

# उत्तर-प्रदेश संस्कृत अकादमी

## संस्कृत भवनम्, नया हैदराबाद, लखनऊ-२२६००७

## एक लाख रुपए का "विश्व भारती" संस्कृत पुरस्कार

उत्तर प्रदेश संस्कृत अकादमी के द्वारा वर्ष १९९० एवं १९९१ से संबंधित उपर्युक्त अन्तर्राष्ट्रीय पुरस्कार संस्कृत के अखिल भारतीय एवं अन्तर्राष्ट्रीय ख्याति प्राप्त मूर्धन्य विद्वान् को उनके व्यक्तित्व कृतित्व तथा संस्कृत भाषा में मुख्यत: पिछले पांच वर्ष की अवधि में लिखित रचनाओं को आधार मानकर दिया जायेगा।

इसके लिए मूर्धन्य संस्कृत विद्वान् स्वयं अथवा उनके ग्रन्थ प्रकाशक अथवा उनके व्यक्तित्व एवं कृतित्व से परिचित कोई भी अन्य व्यक्ति, उनके जीवनवृत्त (पासपोर्ट साइज के दो फोटो), उनकी संस्कृत वाङ्मय की सेवा से संबंधित पूर्ण ववरण और पुरस्कार वर्ष से पूर्व के पांच वर्षों की अवधि में उनके द्वारा रचित ग्रन्थों की ८ (आठ) प्रतियां अधोहस्ताक्षरी को ३१ जनवरी १९९३ तक कार्यालय में कृपया उपलब्ध करा दें।

## विशिष्ट पुरस्कार

उत्तर-प्रदेश संस्कृत अकादमी पचीस हजार रुपए के वर्ष १९९० एवं वर्ष १९९१ के छः (३+३) विशिष्ट पुरस्कारों हेतु आवेदन पत्र आमन्त्रित करती है। इसके लिए आवश्यक है कि सबन्धित विद्वान् की संस्कृत जगत में संस्कृत के प्रचार–प्रसार एवं विकास कार्य हेतु निरन्तर विशिष्ठ सेवा की न्यूनतम अवधि पचीस वर्ष हो तथा उसने ग्रन्थों के प्रसार द्वारा संस्कृत वाङ्मय में महत्वपूर्ण योगदान किया हो। विद्वान् की आयु ६० वर्ष या उससे अधिक होनी चाहिए। विशेष परिस्थितियों में आयु के प्रतिबंध को शिथिल किया जा सकता है। एसे अर्ह संस्कृत विद्वान् यदि चाहें तो अपने व्यक्तित्व का विवरण स्वयं अथवा किसी अन्य परिचित विद्वान् द्वारा अपने हाल के पासपोर्ट आकार के फोटो सहित ३१ दिसम्बर १९९२ तक भेज सकते हैं। अकादमी को स्वयं भी ऐसे विशिष्ट विद्वानों की पात्रता पर विचार करने का अधिकार है।

# नामित पुरस्कार

उत्तर-प्रदेश संस्कृत अकादमी की पुरस्कार योजना के अन्तगत निम्न-लिखित नामित पुरस्कारों हेतु लेखकों एवं प्रकाशकों से कलेण्डर १९९० एवं १९९१ में प्रकाशित संस्कृत की मौलिक तथा उत्कृष्ट रचनाएँ आमंत्रित की जाती है—

पुरस्कारों की संख्या छः (३—३) धनराशि: प्रत्येक १०,००० रु० का

(क) कालिदास पुरस्कार- दो (१-१) १९९० एवम् ९१ की सर्वोत्कृष्ट संस्कृत काव्य रचना के लिए।

(ख) बाणभट्ट पुरस्कार— दो (१-१) १९९० एवम् ९१ की सर्वोत्कृष्ट संस्कृत गद्य-रचना के लिए।

(ग) शंकर पुरस्कार दो (१-१ १९९०) एवम् ९१ की सर्वोत्कृष्ट संस्कृत दार्शनिक रचना के लिए।

लेखक-प्रकाशक को नामित पुरस्कार हेतु पुस्तक की आठ प्रतियाँ अकादमी को भेजनी होंगी, जो वापिस नहीं की जाएगी। प्रेषित पुस्तकों के भीतर लेखक के नाम के सहित उनका पूरा पता तथा पुस्तक प्रकाशन वर्ष भी अंकित करना आवश्यक हैं।



# निवेदन

जिन्हें किसी भी मास की २५ तिथि तक अंक प्राप्त न हो उन्हें कार्यालय को सूचित करना चाहिए जिससे अंक पुनः भेजा जा सके। विलम्ब से सूचना मिलने पर अंक अप्राप्य हो जाते हैं।

— व्यवस्थापक





## प्रो. देवदत्त भट्टि महाभागो वर्धेततराम्

हर्षप्रकर्षविषयोऽय यत् संस्कृतसाहित्ये प्रयोगशीलशैल्या: प्रवर्त्तक: पञ्जाबप्रदेशे मालेर कोटलास्थ — राजकीयस्नातकोत्तरमहाविद्यालये उपाचार्यपदमलङ्कुर्वाणः प्रो॰ देवदत्त भट्टि महाभाग: पञ्जाबप्रशासनेन 'संस्कृत-साहित्यकार -शिरोमणि" पुरस्कारेण पुरस्कृत: सम्मानितश्च।

चाकचक्यचमत्कृतोऽयं सम्मानसमारोह: पटियालानगरे १-११-९२) दिनांके नवपञ्जाबदिवसे भाषाविभागकार्यालयस्य नूतने प्राङ्गणेऽभवत्।

पञ्जाबप्रदेशस्य शिक्षामन्त्रिणोऽध्यक्षत्वे सम्पन्नेऽस्मिन् भव्ये समारोहे पञ्जाबप्रदेशस्य मुख्यमन्त्री श्री बेअन्तसिंह महाभाग: पुरस्कारमेनं प्रो॰ भट्टि महोदयाय समार्पयत्। पुरस्कारे ऽस्मिन् एक विंशति सहस्ररूप्यकाणि, स्वर्णपदकम् प्रशस्तिताम्रपत्रम्, अङ्गवस्त्रं च भवन्ति।

अस्मिन् अवसरे एका स्मारिकाऽपि व्यमुच्यत, यस्यां प्रो॰ देवदत्तभट्टि महाभागस्येति वृत्तं सचित्रं प्रकाशितमस्ति।

महोत्सवे समुपस्थितैर्विद्वद्भिरन्ते प्रो॰ भट्टि:ससाधुवादं भूरि प्राशस्यत।

---

### प्रतियोगिताभि विद्यालयेषु संस्कृतस्य आकर्षकवातावरणमुदेति

दिल्ली २६-११-९२ टैगोरोद्यानस्य राजकीय कन्या उच्चत माध्यमिक विद्यालये दिल्ली प्रशासनस्य शिक्षानिदेशालयस्य पश्चिमीयमण्डलस्य विभिन्न-संस्कृतप्रतियोगितानामुद्घाटनं कृतम्। उद्घाटक: आसीत् पश्चिमीयोप-मण्डलस्योपशिक्षानिदेशक: श्री यशपालपुरंग:। स आह—आभि: प्रतियो-गिताभि :— या: दिल्ली संस्कृतअकादम्या: समायोज्यन्ते पाठशालासु छात्रछात्राणामधिका रुचिर्वर्धमाना दृश्यते सहैव च अत्यन्तमाकर्षकवातावरण-मपि समुदीयमानमस्ति। आसां प्रतियोगितानां प्रसारण मण्डलान्तरेष्वपि करिष्यते येन सहस्रशश्छात्रा: लाभान्विता: भवन्ति।

# संस्थान के प्रकाशन

१. फलादेश कल्पतरुः (मूल संस्कृत में)
हिन्दी अंग्रेजी टीका सहित ४० वर्ष के अनुसन्धान और अनुभव पर आधारित जातकफल कहने का अनुपम ग्रन्थ ... मू. ७०-००

२. संस्कृत कोशवाङ्मयम् (संस्कृत में)
संस्कृतकोशसाहित्यपर अनुसन्धानपूर्ण विवेचन ... मू. १७५-००

३. झञ्झा (संस्कृत में)
शेक्सपीयर के द टैम्पेस्ट नाटक का सचित्र रूपान्तर . मू. ५०-००

४. हिमाचलप्रदेशे संस्कृतस्य प्रसारो विकासश्च (संस्कृत में)
हिमाचल में संस्कृत के प्रसार विकास की विस्तृत कहानी ... मू. ५०-००

५. वैजयन्ती (हिन्दी काव्य)
नवीन प्राचीन विचारधाराओं का गीतिमय समन्वय — मू. १५-००

६. सूनृता (संस्कृत काव्य)
आधुनिक गीतों में गुम्फित अनुपम उपहार ... मू. २५-००

७. शक्तिसौरभ (हिन्दी में)
संस्कृत लेखिकाओं का इतिहास ... ... मू. १५-००

८. विचारामृत (हिन्दी में)
आचार्य जी के विभिन्न विषयों पर जीवनोपयोगी लेख दो भाग मू. १५-००

९. पथ्यापथ्यविनिर्णय
सं. हिं. टीका सहित आयुर्वेद का दुर्लभ ग्रन्थ .. मू. २०-००
( डाकव्यय सर्वत्र पृथक् )

१०. सरिता
(अभिनव सं. कथानिकाएं) — ... मू. ५०-००

११, हिमानी
(संस्कृत काव्य हिन्दी अनुवाद सहित) — मू. १००-००

सम्पर्क सूत्र :—

सचिव,

**संस्कृत शोध संस्थान**

भारती विहार मशोबरा

शिमला १७१००७ )हि. प्र.)

# सम्पादकीयम्

## दिल्लीसंस्कृतअकादमी वर्धतेतराम्

दिल्लीप्रशासनस्य संस्कृतअकादमी संस्कृतप्रचारप्रसारदृष्ट्या यन्महत्वपूर्णंकार्ये संलग्नाऽस्ति तत्प्रशंसा चाटुकारिता नास्ति परन्तु तदस्ति महत्वपूर्णंतथ्यम्। प्रशासनेन यत्किमपि कार्यं क्रियते तत्प्रायेण शैथिल्यमवाप्नोति। तथ्यमिदं को नाम न जानाति --अनुभवति वा। परन्तु अकादमीयं सततं कार्यशीला वर्तते। संस्कृतस्योपयोगिविषयाः सामयिकविषयाश्च विदुषां जनसाधारणानां मञ्चेषु सततं प्रचारमधिगच्छन्ति – अन्यत: छात्रेषु –ये भविष्यस्य कर्णधाराः सन्ति— संस्कृतं प्रसृतं स्यादेतदर्थमपि— अहर्निशं सा यतमाना द्रष्टुं शक्यते। संस्कृतलेखकानां प्रोत्साहने, संस्कृतपत्रकाराणामुत्थाने अकादम्याः स्तुत्य प्रयासाः क्रियन्ते। एवं किल सर्वक्षेत्रेषु सा वर्धमाना दृश्यते एतस्येव चास्ति परमावश्यकताऽद्य।

अन्य राज्येष्वपि संस्कृत अकादम्यः सन्ति। ताः कथं न किल दिल्ली प्रशासनसंस्कृतअकादमीअनुकरणं कुर्वन्ति ? ताश्चेत्तथा वर्तेयुस्तु तेषु २ प्रदेशेषु—यत्र संस्कृतअकादम्यः सन्ति – संस्कृतप्रसारो भूयान् स्यात्–संस्कृत समाजश्च जागृतः भवेत्।

इतरप्रदेशेष्वपि साहित्यअकादम्यस्तु सन्ति एव ताः अपि नाममात्र संस्कृतसेवाया कारणानि भवन्ति। तासामधिकारिणोऽपि मया दिल्लीं संस्कृतअकादमीवत् संस्कृतप्रचारे सहयोगदानाय प्रार्थ्यन्ते। संस्कृत अकादेमीनां—अधिकारिषु तु अस्माकमपि अधिकारो वर्तते। ते किल संस्कृतप्रचार काठिन्यमवलोक्य तत्र साहाय्यं कुर्वन्तु येन संस्कृतं प्रासजनं यावत् प्रसृतं स्यात् समाजश्च संस्कृतेन सम्बद्धो भवेत्। मन्ये विद्वांसोऽत्र विचारयिष्यन्ति सहैव प्रार्थ्यते दिल्लीस्थाः संस्कृतविद्वांसः। तेऽपि पारस्परिकभेदभावं विस्मृत्य अकादम्याः प्रोत्साहन चेत्करिष्यन्ति स्थाने २ प्रतियोगिताः सम्मेलनानि तेन भविष्यन्ति एव च संस्कृतभाषा जनप्रिया जनभाषा भवितुं शक्ष्यति।

आशासे यन्मदीयास्तुच्छविचाराः विदुषामधिकारिणां नेतृप्रमुखानाञ्च कर्णकुहरेषु गत्वा कमपि प्रोत्साककार्यं करिष्यन्ति।

**अन्यच्च नववर्षः**

आंग्लवर्षस्तु नूतनोऽयं भवेत्सुखकरः सदा।
भवदभ्यः हे सुहृत—श्रेष्ठाः कामयेऽहं पदे पदे।

केशव शर्मा

R. N. 6384/57 ल – 33/एस. एप. / 10/91

भ्रातरो मनुजाः सर्वे
स्वदेशो भुवनत्रयम्



सर्वधर्मसमभावस्य प्रेरकः
महात्मा गांधी



# दिव्यज्योतिः

संस्कृतस्य सचित्रमासिकम्





शिमलायाः शुभे स्थाने
नगरशृंग (रिज्ज) संस्थिते ।
हिमान्याः परितुष्टास्ते
एते पर्यटनोत्सुकाः ॥



शिमला जनवरी, १९६३

वर्षम् ७

अङ्कः ४

# दिव्यज्योति:

संस्थापितम् १९५६
प्रधानसम्पादक:—
आचार्य केशव शर्मा



संस्थापका: तथा
आद्यसम्पादका:
आचार्यश्रीदिवाकरदत्त
शर्माण:,
राष्ट्रपतिसम्मानिता:

(पत्रमिदं हि०क० सं० भा० अकादमी प्रदत्तानुदानसाहाय्यम् । पत्रिकागत-मुद्रणदोषाणां सम्पादकीयनीति-विषये च अकादमीदायित्वं नास्ति )

हिमाचल प्रदेश– पंजाब - हरियाणा-जम्मूकश्मीर - मध्य प्रदेश-राजस्थान–महाराष्ट्र उत्तरप्रदेश शासन-स्वीकृतं केन्द्रशासनपुरस्कृतं सचित्रं संस्कृतमासिकम् ।


## पत्रस्य उद्देश्यानि तथा नियमा:

सरलसरससुबोध-साधनै: सर्वस्मिन् संसारे संस्कृतस्य प्रसार:, साहित्यान्तर्गतानां सकलकलानां समन्वेषणं, संसारस्य हितसम्पादनम्, एव लौकिक - अलौकिकस्वातन्त्र्यस्य प्राप्ति: ।

"दिव्यज्योति:" प्रतिमासं पञ्चदशतारिकायाश्च (आङ्ग्लमानेन) प्रकाशित भवति

पत्रस्य वार्षिकमूल्यं ५० रु० अर्धवार्षिकं २५ रु० एकस्याङ्कस्यच रु० ४/५० भवति ।

वर्षारम्भ: अक्तूबरमासत: भवति ग्राहक: कस्मादपि मासाद् भवितुं शक्नोति ग्राहकै:, "सम्पादक, दिव्यज्योति:, भारती विहार, मशोवरा, शिमला-१७१० इति संकेते धनादेशेन वा. शु. प्रेषणीयम् ।

## विषयानुक्रम:

भास्करांशुशक्तिचालितम् –

# स्थलजलनभश्चारि विमानं 'त्रिपुरम्'

डा० प्रकाशमित्र शास्त्री,
एम० ए० पी० एच० डी०



यन्त्रप्रधानेऽस्मिन् युगेऽन्तरिक्षयानानाम् अस्त्यद्भुतं निजं वैशिष्ट्यं महत्वं वा सम्प्रति न केवलं देशाद्देशान्तरं द्वीपाद्द्वीपान्तरं वा जिगमिषवो मानवा: एव व्योमयानानि प्रयुञ्जते, अपि तु लोकाल्लोकान्तरं गन्तुकामानामन्तरिक्षयात्रिणामपि मन: कामनां सम्पूरयन्ति अन्तरिक्षे सञ्चरमाणानि विमानानि व्योमयानानि वा भूरिश: दरीदृश्यन्ते साम्प्रतिका: जना: दर्शं सर्वमेतदाश्चर्याभिभूता: सन्त:-विज्ञानप्रभावस्य परमां समृद्धिं मन्यमाना: नूनं युगोऽयमन्तरिक्षविज्ञानयुग: इति समुद्घोषयन्ति ।

किन्तु नेयं लोकलोकान्तरभ्रमणवृत्ति: अन्तरिक्ष-यान-विषयिकी समृद्धिर्वा सर्वथा नूतना । श्रूयते हि संस्कृतसाहित्ये बहुत्र, यदासीत् पुष्पकं नाम महदद्भुतम् आकाशयानम् । भगवान् राम: यदाहृत्य राबणाल्लंकात: आयोध्यामाजगाम । यदर्थमस्ति प्रसिद्धिर्यत्तद्धि पुरा परमशिल्पिना विश्वकर्मणा प्रपितामहाय ब्रह्मणे निर्मितमासीत्, पश्चात् तदेव कुबेर आससाद यतश्च तज्जगद्विद्रावणो रावणो निनाय । कृतयुगे च सम्राड् दुष्यन्तोऽपि देवराजस्य महेन्द्रस्य दैत्यै: सह सम्भूते संगरे साहाय्यं विधातुम् इन्द्रलोकं जगाम व्योमपथाऽन्तरिक्षयानसाहाय्येन एव । इत्थमेवाऽन्येऽप्यनेके प्रलेखा: साहित्यग्रन्थेषु दृश्यन्ते, किंवदन्तयश्च बहुधा श्रूयन्ते, यदधिकृत्य च सुतरां स्वीक्रियते मनीषिभि: पुरा युगे विमानयानानामन्तरिक्षचारिणां सत्ता" इति ।

अथ हीत्थम्भूतस्यैव त्रेतायुगीनस्यकस्याऽपरस्य परमविचित्रस्याऽऽकाशयानस्य विषयेऽत्र किञ्चिल्लिख्यते यद्धि 'त्रिपुरनाम्ना' पुरा प्रसिद्धिमगमत्।

आसीत् पुरा भरद्वाजो नाम महर्षिः। यश्च वेदतत्वार्थवित्, अत्यद्भुतानां हि यन्त्राणामाविष्कर्ता व्योम यानविज्ञानविधिप्रणेता खगोलविज्ञानाचार्यो बभूव। एतेन हि महर्षिणा वेदाम्बुधिं निर्मथ्य 'यन्त्रसर्वस्वं' नाम ग्रन्थरत्नं लोकपथमानायि। यस्मिंश्च ग्रन्थे वैमानिके प्रकरणे जातिभेदात् त्रिविधानां मान्त्रिक-तान्त्रिक-कृतकनामभिः प्रसिद्धानां षडुत्तरैकशत (१०६) विधविमानानां वर्णनञ्च तेनाऽकारि। तत्र प्रथमस्य मांत्रिकस्य पुष्पकाद्याः (२५) पंचविंशतिभेदाः, तान्त्रिकस्य (५६) षट्पञ्चाशत्, यान्त्रिकाऽपरनामधेयस्य कृतकस्य च (२५) पंचविंशतिप्रभेदाः भवन्ति एवं सम्पिण्डितेन (१०६) षडुत्तरैकशतप्रभेदाः विमानाः तदानीं प्रचलिता आसन्।

अत्र हि मान्त्रिकविमानेषु पुष्पकविमानवत् त्रिपुरविमानोऽपि परिगण्यते अन्तरिक्षयानमिदं त्रिपुरं त्रिखण्डात्मकमासीत्-प्रत्येकञ्च तत् खण्डम् आवरणं वा 'पुर' इति नाम्नाऽभिधीयते। तस्मादेवाऽस्य नाम 'त्रिपुरविमानम्' इति प्रथितम्।

पुरत्रयेण संयुक्तं विमानं त्रिपुरं विदुः।
भास्करांशुसमुद्भूतशक्त्या संचोदितं भवेद्॥

एतद् अन्तरिक्षयानं सूर्यांशुसमुद्भूतशक्त्या सम्प्रेरितं सद् गतिमद् भवति स्म। गतिसामर्थ्यञ्चैतस्य, उदन्वदाकाशमहीधरेषु सामान्यतया प्रवर्तमानमासीत् यथा चेदं सागरे गतिमत्, तथा चाऽऽकाशे, तथैव च पर्वतेषूच्चावचप्रदेशेषु स्थलभागेष्वपि प्रगतिमद् आसीत्। अस्याऽधः खण्डे भवन्ति संयोजितानि तादृशानि यन्त्राणि, यथैतत् पृथिव्यां समे विषमे तले सञ्चरितुमनायासेन समर्थं भवति स्म। एवमेव द्वितीये चावरणे (मध्यमे खण्डे) संयोजितैर्यन्त्रैः अगाधेऽपारेऽर्णवे तद् भवति स्म। तथैव हि तृतीयाऽऽवरणात्मके ऊर्ध्व-खण्डे संयुक्तैः यन्त्रविशेषैः गगनमार्गे माययति स्म स्वमार्गमेतदन्तरिक्षयानमिति।

यथाऽह नारायणो महर्षि :—

पृथिव्यप्स्वन्तरिक्षेषु स्वाङ्गभेदात् स्वभावतः ।
यः समर्थो भवेद् गन्तु तमाहुस्त्रिपुरं बुधाः ॥

इत्थं प्रतिभाति यद् भवति स्म यस्य संरचना, त्रिखण्डात्मकेन केनचिन्म-हता प्रसादविशेषेण तुल्या। वर्णिता चाऽपि महर्षिणा भारद्वाजेनास्य निर्मितिसरणिरेतादृशी एव यथा– अधःखण्डं यावद् विस्तृतं भवेत् ततः स्वरूपएवोनविस्तारो भवेन्मध्यस्थस्य भागस्य, तद्वदेवोपरिस्थितो भागः ततोऽपि स्वल्पतरविस्तारान् भवेदिति ।

अस्मिन्नन्तरिक्षयाने अन्यव्योमयानवत् पीठ-नालस्तम्भ कीलकोष्म्यका-दीनि यन्त्राणि तु सामान्येन भवन्त्येव, किन्तु वैशिष्ट्येन परिगणितानि तानि संयन्त्राणि, यानि हि यन्तृणां (यात्रिणां) वाऽन्तरिक्षे नानाविधकष्टनिवारणे सक्षमाणि वर्षातपवातप्रभावोपसंहरणाय संयोजितानि, अथ च यानि हि भास्करांशुभ्यः शक्तिमधिगृह्य यानं परिचालयितुं हि संकल्पितानि। तत्राऽपि च विद्युद्यंत्रस्य गणपयंत्रस्य वा कार्यन्तु महदद्भुतं भवति- यद्धि विपलमात्रेणैव कालेन 'अंशुपदर्पण' क्रियया भास्करांशुभ्यः महतीं तापशक्तिं संगृह्य विद्युदागारस्थयन्त्राणां दर्पणानां वा साहाय्येन तां विद्रूपेण विद्युत्परिणमय्य सहस्रगुणीकृत्य यानसंचालनममपमिक्षय्यां शक्तिं समुत्पादयति, या च शक्तिः तन्त्रीयूथसहकारेण सर्वत्र याने प्रसृता सती सर्वं कार्यजातं सम्पादयति ।

अंशुपादर्शावरणं तेषामुपरि कल्पयेत् ।
तत्सूर्यकिरणान्तरस्थशक्तिं स्वस्मिन् स्वभावतः ॥
चतुरशीतिलिकप्रमाणवेगं स्वशक्तितः ।
एकचच्छोटिकावच्छिन्नकालेनाकृष्य तान् पिबेत् ॥
पश्चादावरणादर्शस्थितशक्तिं स्वतेजसा ।
पूर्वोक्तछत्रीशिखरस्थिता ये मणयः क्रमात् ॥
ते समाकृष्य तच्छक्तिं पिबन्त्यत्यन्तवेगतः ।
पश्चात्तच्छक्तिप्रवेगेन मणयो भ्रामयन्ति हि ॥
एतद्भ्रमणतः पञ्च छत्रयोऽपि भ्रमयन्ति हि ।
एतेनैकचच्छोटिकावच्छिन्नकालेऽतिवेगतः ॥
सहस्रलिकप्रमाणा विद्युत् संजायते क्रमात् ।

\+ \+ \+ \+

कार्यनिर्वहणायाऽथ तच्छक्तिं तन्त्रीभिः क्रमात् ।

समाहृत्यातिवेगेन यत्र कुत्रापि वा नरः ।।
नियोज्य तत्तत्कार्येषु चोपयोक्तुं ध्रुवम् ।
बृहद्विमानशास्त्रे त्रिपुरविमानम् ३९०-३९९

एतदन्तरिक्षयानं न केवलं कल्पनामयं सिद्धान्तरूपेण ग्रन्थेषु संगोप्य संस्थापितमेव अपितु व्यवहारेऽपि प्रयुज्यमानमासीत् । महाकविना कालिदासेन रघुप्रभावं वर्णयता रघुवंशमहाकाव्ये समुपवर्णितम्—

वशिष्ठमन्त्रोक्षणात्प्रभावादुदन्वदाकाशमहीधरेषु ।
मरुत्सखस्येव बलाहकस्य गतिर्विजघ्ने नहि तद्रथस्य ।। ५-१७

इत्थं सिध्यति यत् महातपसः वशिष्ठस्य महर्षेः मन्त्राणां प्रभावात् सागरेषु व्योम्नि पृथिवीतले महीधरेषु च सञ्चरणसमर्थं विशिष्टं रथं व्योमयानं रघोः सविधेऽप्यासीत् मरुत्सखस्य मेघस्येव यस्य रथस्याऽऽकाशयानस्य गतिः कुत्रापि न विहता भवति स्म । स सम्राड् रघुः अनेनैव यानेन कुबेरस्य-भियाय ततः प्रचुरं धनमाहृत्य वरतन्तुशिष्याय कौत्साय प्रदातुकामोऽभवत् ।

अस्य त्रिपुरविमानस्य विनिर्माणे वैज्ञानिकविधिना समुत्पादितस्य कस्यचिद्विशिष्टस्य धातोः त्रिणेत्रनामकस्य लोहस्यैव प्रयोगो भवेदित्यपि महर्षिणा भरद्वाजेन "वैमानिकप्रकरणे" प्रतिपादितम्— यतो हि तत् त्रिणेत्रलोहं जलाग्निवाताऽऽतपादिभिरविकार्यम्, अदाह्यम्, अच्छेद्यम्, अशोट्यम्, भाररहितं नीलाभं कान्तिमयं केकापिच्छसमप्रभं मृदुलं सर्वत्तुसुखप्रदं च भवति ।

समीकृतं चेन्मृदुलं केकापिच्छसमप्रभम् ।
अदाह्यमच्छेद्यमशोट्यञ्च भारविवर्जितम् ।।
जलाग्निवातातपाद्यैरभेद्यं— नाशवर्जितम् ।
शुद्धं सूक्ष्मस्वरूपं भवेल्लोहं त्रिणेत्रकम् ।।

यद्यपि हि आधुनिका अपि वैज्ञानिकाः स्थलजलनभश्चारिणो यानस्य, भास्करांशुसमुद्भूतशक्त्या सञ्चालितस्य वा विमानस्य निर्मिति-योजनां प्राख्यापयन्, लोके यदभिकृत्य परिवर्धते चाऽऽशा यदारादेव व्यवहार-पक्षमपि तदाश्रयेत्, यथा हि न स्यात् कदाचित्तत्र याने विमाने वा यानसंचालनहेतुभूतायाः ऊर्जायाः अभावः न्यूनता वा किन्तु सर्वमेतदधुनाऽप्य-नुसन्धातव्यमेवाऽस्ति ।

दूरदर्शनसंगीतनाटिका—

# राधिका

(एकचित्रं स्वातन्त्र्यस्य । अपरं स्वेच्छयाऽज्ञता साधकम्)

१

गतं पारतन्त्र्यं चिरादस्मदीयम्
गताज्ञानदृष्टिर्न चैवास्मदीया ।
गता आंगलाः स्वीयदेशमितश्चेत्—
न चोद्घाटिता ज्ञानदृष्टिः स्वकीया ॥

२

स्व स्वातन्त्र्यकालोऽपि व्यर्थं गतोऽयम् ।
परां घोरनिद्रां हि मोहेन पूर्णाम् ।
वयं प्राप्य—अद्यापि घोरेऽन्धकारे
भ्रमामस्तु भ्रष्टाः, न सत्यं किलैतत् ? ॥

३

(स्व सामाजिकोत्सवचित्रम् स्वप्रशासकानां चित्रप्रदर्शनम् । ततश्च च सामाजिक दुर्दशायां रूढिवादस्य च दृश्यायोजना ।)

समाजोऽस्मदीयोऽस्ति देशोऽस्मदीयः
वयं शासकाः स्वस्य देशस्य नूनम् ।
न सामाजिकी दुर्दशा साऽपयाता,
न चाप्यस्तमायात्यसौ रूढिवादः ॥

४

गुणाश्चास्मदीयास्तु प्रायेण नष्टाः
तथा दोष एको न नष्टोऽस्मदीयः ।
स्वतन्त्रे तथा शिक्षितेऽप्यत्र देशे
पराधीनता नारिवर्गस्य दष्टा ॥

५

(नाट्यगीतानुसारि दृश्यसंयोजनं सर्वत्र कार्यम् ।)

विवाहो मया राधिकायास्तु दृष्टः.
विवाहोत्सवे मङ्गलाचारभारः,
पिशाच्याः सुरायाः— महीयान् प्रचारः,
कुरीत्याः— कुठारस्य चासौ प्रहारः ॥

६

गता राधिका पितृगेहात्स्वगेहम्
परित्यज्य मातुर्गृहं प्रेमपूर्णम् ।
कृता यत्र मुग्धास्तया बालक्रीड़ाः
सखीभिः सदा खेलितं यत्र प्रायः ॥

७

गृहेऽस्याः पिता चापि माता तथैव
प्रसन्नौ—हि आस्तां विवाहं विधाय ।
"उभौ भारमुक्तौ हि जातौ तु काले
यथेयं जनेष्वत्र लोकोक्तिरस्ति ॥"

८

यथैव स्वकीये गृहे सा प्रविष्टा
न लोकास्तु तद्गेहिनो वै प्रहृष्टाः ।
यतो सा प्रभूतं धनं यौतुकम्वा
समादाय नैव प्रविष्टा स्वगेहे ॥

९

न श्वश्रुः शुभं स्वागतं व्याजहार
न तस्याः पतिस्तां तथा स्वीचकार ।
यथाऽपेक्ष्यते नूतनपत्न्याः सदैव
महारौरवे सा तु स्वर्गात् पपात ॥

१०

पतिर्निष्क्रियः- कार्यहीनस्तु यस्याः
अकिञ्चित्करः –यौतकाधीनलुब्धः ।
इतश्चापि तस्याः पिता निर्धनत्वात्
प्रभूतं धनं तां कुतः सम्प्रयच्छेत् ?

११

न पत्युर्गृहे सा सुखं प्राप किञ्चित्
सदा पीडिता सा नवीनैर्हि दुःखैः ।
यथा शीतकाले तुषारेण कम्राः
परं शोषमायाति सौम्याः लतास्ताः ॥

१२

तथा पाण्डुदेहा ऽभवत्सा वराकी
कथञ्चित्स्वकालमनैषीन् मनोज्ञा ।
यथा शुष्कपत्राणि वृक्षाल्लुठन्ति
तथा सापि मृत्योर्मुखे विद्यमाना ॥

१३

गृहे नापि श्वश्रूः— नः भर्ताऽथ तस्या
न भर्तुः पिता नापि चान्यो हि कश्चित्
सुखं दत्तवान् लेशमात्रं कदाचित्
सदा दुःखपाषाणक्षेपमकार्षुः ।

१४

गृहे सा तु सर्वान् सदा सेवमाना
गृहस्थस्य धर्मान् तथा पालयन्ती ।
स्थिरा संस्थिता पक्वपाषाणवत्सा
न सत्यात्पथः प्राचलल्लेशमात्रम् ॥

१५

न तस्या गुणानां प्रशंसापिकेन
कृता तद्गृहे, ताड़िता पीड़िताऽपि ।
रुदन्ती स्व भाग्योपरि सन्ततं सा
दिनानि स्वकीयानि निन्ये कथंचित् ॥

१६

न पानाय किञ्चित्तथा भोजनम्बा
न वस्त्राणि तस्मै न चैवाभूषणानि
न प्रीतिर्न चवादरश्चापि गेहे
कदाचिद् ददौ कोऽपितून्नं परस्तात् ॥

१७

कथं पौतकस्य प्रलुब्धाः बभूवुः
जनाः राधिकाया कुटुम्बे तदानीम् ?
धनं शोषितं तत्पितुः-सद्गृहात्तैः
सदा चापि तुष्टा न ते सम्बभूवुः ॥

१८

अथान्ते खनिः सम्पदा सापि रिक्ता
तदा तां निहन्तुं प्रवृत्तास्तु क्रूराः ।
योजना तादृशी कापि निर्मीयतान्
मृत्युरस्याः भवेत्सत्वरं वै यया ॥

१९

चिन्तयन्तस्तु ते पाकशालागताम्
मृत्तिकातैलस्नातामकार्षुस्तु ताम् ।
एकतोऽग्निस्तु भर्त्रा प्रदत्ता-अहो ?
अर्गलां द्वारदेशे तु श्वश्रुर्ददौ ।

२०

या तु जज्वाल वन्हौ यथा वै तृणम्
सा वराकी न केनापि वा संस्मृता ।
लोलुपास्त्री धनस्यापि तस्याः पतिः
चाकरोदन्यपाणिग्रहं तत्परम् ।

२१

राधिकायाः पतिर्येन केनापि वा
नैव संताड़ितः वा तथा दण्डितः ।
किन्त्वसौ कुष्ठरोगेण सम्पीडितः
दुःखितोऽन्ते तु पीड़ां परां भुक्तवान् ।

२२

एकला राधिका भारते चेद्भवेत्
तत्तु प्रायश्चितोऽस्याः—भवेत्सम्भवः ।
किन्त्वसंख्या हि देशे तु तत्सदृशाः
राधिकास्ताः कथं कोऽपि रक्षेदिह ?

२३

धन्य धन्योऽस्ति देशस्य भालस्त्वयम्
यत्र तादृग् जनो नैव नैवास्ति च ।
देवभूमिस्तथा पुण्यभूमिः परा
सा हिमानी तु विश्वे सदा भासते ।

२४

सर्वप्रान्तेषु दिव्यस्त्वयं पर्वत:
यो हिमाद्रीति लोकै: सदा गीयते ।
नात्र लोभी न दम्भी न वा निर्दयी
सुन्दराश्चापि नार्यो नरास्तादृशा: ।

२५

यौतकं नात्र लोकेषु भीतिकरम्
किन्तु नव्या इय नागरी सभ्यता ।
दूषयेच्चेत् प्रदेशं तु दोषस्त्वयम्
नायकानां हि देशस्य नि: संशयम् ।

— प्रो. केशव शर्मा
दिव्यज्योतिष: सम्पादक:

---

## उत्तर प्रदेश संस्कृत अकादमी

गत मास के अंक मे उ० प्र० संस्कृत अकादमो के विज्ञापनों में प्रार्थना पत्र भेजने की विभिन्न पुरस्कारार्थ दर्शायी गयी अन्तिम तिथि ३१ दिसम्बर के स्थान में ३० जनवरी, १९९३ पढ़ें ।

तिथि बढ़ा दी गयी है ।

— मधुकर द्विवेदी
निदेशक








बाला: ? अयमस्ति राष्ट्रपिता श्री महात्मा गांधी । जनवरी मासीय ३० दिने ११४७ खीष्टाब्दे अयं नाथूराम गोडसे नामकेन हतकेन गुलिकया हतः । अस्य आदर्शपालनमस्माकं कर्तव्यम् । संस्कृताध्ययनस्य समयं ना लब्धवन् - एतदर्थं खेदं प्रकटयतिस्म अयम् ।



अयमस्ति डा० राधाकृष्णन् महोदयः । भारतस्य द्वितीयो राष्ट्रपतिः । संस्कृतस्यायं विद्वान् प्रचारकश्च—आसीत् । सितम्बरमासेऽस्य जन्मदिनं भवति । अध्यापक दिवस नाम्नाऽपि दिवसोऽयं प्रख्यातः । अनेकसंस्कृतसम्मेलनानामनेनाध्यक्षता कृता ।





शिशव: ? इन्दिरा गांधी भारतस्य प्रथममहिला प्रधानामात्या बभूव । इयं संस्कृतं प्रति निष्ठावती आसीत् । अस्या जन्मदिनं नवाम्बरमासे आयाति । इयमपि गुलिकया एकेन स्वीयेनैव रक्षापुरुषेण हता हन्त ? अनया बहुबारं संस्कृतसम्मेलनेषु गमनं कृतम् । इयं बहु वर्षाणि यावत् अ० भा० संस्कृतसम्मेलस्याध्यक्षतां स्वीचकार ।





छात्राः ? एषोऽस्ति ताताचार्यः। हिमाचल प्रदेशस्य पूर्वलोकायुक्तः। शिमलायां संस्कृतसम्मेलनस्योद्घाटनं कुर्वन्।





श्रीमती सुषमा जर्मन् आकाशवाणी केन्द्रतः
संस्कृतप्रसारणव्यग्रा ।

---




# 'प्रमद्वरा X'

समीक्षक:-

डा० रूपनारायणपाण्डेय:



विबुधवाग्वाङ्मये विद्यते विपुलतरं रूपकसाहित्यम् । विश्वविश्रुतनाटककारैर्भासकालिदासाश्वघोष- दिङ्नाग विशाखदत्त भवभूति जयदेवमुरारिकृष्णचन्द्रमिश्रादिभिरूपकप्रणयनस्य या परम्परा प्रारब्धा. तस्यामेव परम्परायां साम्प्रतं सुरभारतीसाधनायां ये संलग्ना: सन्ति, तेषु डा. राजेन्द्रमिश्रोऽग्रे राजते । तेनैव प्रमद्वरा नाम नाटिका प्राणीयत । नाटिकाया लक्षणं साहित्यदर्पणे एवं वर्ण्यते—

---

X प्रमद्वरा, नाटिकाकार :— मिश्रोऽभिराजराजेन्द्र: ।
प्रकाशक:- वैजयन्त प्रकाशन, ८ बाघम्बरी रोड इलाहाबाद ।
पृ. सं.-१६+६२ मूल्यम्-२० ।
प्रथमसंस्करणम्-१९८४

'नाटिका क्लृप्तवृत्ता स्यात् स्त्रीप्राया चतुरङ्किका ।
प्रख्यातो धीरललितस्तत्र स्यान्नायको नृपः ।

नवानुरागा कन्यात्र नायिका नृपवंशजा ।
सम्प्रवर्तेत नेतास्यां देव्यास्त्रासेन शङ्कितः ॥

देवी पुनर्भवेज्ज्येष्ठा प्रगल्भा नृपवंशजा ।
पदे पदे मानवती तद्वशः संगमो द्वयोः ॥'

(सा०-६)

अस्यां नाटिकायां चत्वारोऽङ्का विद्यन्ते । प्रणयरागाङ्कुराभिधे प्रथमेऽङ्के—नर्मदातटे सैन्धवारण्ये प्रमतिनन्दनो रुरुः स्थूलकेशतनयां प्रमद्वरां विलोक्य तस्यामनुरक्तो वयस्येन डुण्डुभकेन साकं सैन्धवारण्यं प्रविश्य वाटिकामण्डपे मधुकरिकया सार्धं तस्या आलापं ताभ्यामलक्षितः शृणोति । रागाङ्कुरसंघर्षे नाम द्वितीयेऽङ्के डुण्डुभकेन चित्रितेन प्रमद्वराचित्रेण रुरुर्मनोविनोदं करोति, देवी सुवर्णा यूथिकया नवमालिकया च साकम् आगम्य तस्मै क्रुध्यति, तं च परित्यज्य गच्छति । प्रणयाभिसारे नाम तृतीयेऽङ्के रुरुः सैन्धवारण्ये प्रमद्वरां मिलति, सा प्राजापत्येन विधिना परिणयार्थं निवेदयति । प्रणयपोषणे नाम चतुर्थेऽङ्के महाविषधरेण नागेन प्रमद्वरा दष्टेति विज्ञाय निजायुषोऽर्धं तस्यै प्रदाय स तां यमप्रासादाज्जीवयति, देवी सुवर्णा च तां तस्मै स्वयमेव यच्छति । ग्रन्थादौ नाटिकाकारस्य कथाया मूलमधिकृत्य हिन्दीभाषया, रचनामाश्रित्य चाङ्ग्लभाषया निवेदनं वर्तते, ग्रन्थान्ते च श्लोकानुक्रमणिका प्रमद्वरासुभाषितानि च विलसन्ति ।

यथा रूपककारेण स्वयमपि गदितं यद् नाटिकाया मूलकथा महाभारतादिपर्वणि विराजते । तस्याः किमपि परिवर्तनं नाटिकालक्षणानुरूपं विहितमस्ति । अत्रनायको रुरुः स्वप्रीतिपात्रं प्रमद्वरां प्राप्य कृतार्थो भवति । नाटिकायां प्रधानोरसः शृङ्गारः । हास्यादयोऽपि यत्र तत्र तिष्ठन्ति । वियोगस्य मार्मिकं चित्रणं नाटिकाया प्राणभूतमस्ति । प्रमद्वरायाः प्रथमदर्शनादेव कथं रुरुर्वेदनामनुभवतीति द्रष्टव्यमत्र—

'श्यामा सा नयनाभिराभरमणी कन्दर्पदर्पानिघा ।
रेवारोधसि सैकते यदवधि प्रीत्या मया लक्षिता ।

चैतन्यं तु तदाप्रभृत्यनुदिनं याति क्षयं भूरिशः
नीरं कुम्भगभीरनीडनिहितं छिद्रध्वनीनं यथा ।।'
(प्रमद्वरा, पृ० ५)

दिवङ्गतां प्रमद्वरां वीक्ष्य रुरो रम्योत्प्रेक्षा हृदयं हरति—

'त्रैलोक्यविश्रुतमुखच्छविचन्द्रिकायां
सञ्जातरागमदनाङ्कुरकोऽल्पशङ्कितः ।
'मन्ये यमः परिणिनीषुरुपायहीनो
मम्मत्सरी मुषितवान् भवतीं प्रदोषे ।' (प्रमद्वरा, पृ. ५०)

देव्याः सुवर्णायाः चरित्रस्योदात्तताऽत्र सर्वथा श्लाघनीयास्ति। यद्यपि सा प्रथमं कान्ताय क्रुध्यति, तथापि तस्य प्रमद्वरायामप्रतिमां प्रीतिमवलोक्य स्वयमपि तां तस्मै दातुमुत्सहते। नाटिकाकृतः शब्देषु पठनीयोऽयं प्रसङ्ग :—

नवमालिका—आर्यं आर्यं ! भणतिस्म देवी यन्नवमालिके ? कान्ताभिलाषरहस्यं जानन्त्यापि मया यदि तदिच्छा न पूर्यते तर्हि को लाभो मम जीवनेन ? अतएव प्रियतमाभिलाषमभिनन्द्य स्वयमेवाहं प्रमद्वरां स्वलघुभगिनीं राजमन्दिरमानेष्यामि कथं त्वं मन्यसे इति। (प्रमद्वरा पृ० ४७)

प्रणयिन्यां प्रमद्वरायां प्रणयिनो रुरोर्यद् दुर्लभं प्रेम पोषितमस्ति, तत् खलु नान्यत्र दृश्यते। रुरुः स्वप्रणयिनीं जीवयितुं स्वायुषोऽर्धमपि त्यजति।

'न स्वप्नेऽपि विखण्डितो यदि मया धर्मस्त्रयीसम्मतः।
सत्यं वा यदि संकटेऽपि न मया लोभात् कदाचिद्धतम् ।
मिथ्याचाररतोऽभवं क्षणमपि क्रोधान्न वा यद्यहं ।
तज्जीवेन्मम जीविताऽर्धमहिता मत्प्रेयसी सत्वरम् ।।'
(प्रमद्वरा, पृ. ५३)

कविकुलगुरुकालिदासस्य रचनाशैली नाटिकायामस्यां स्पष्टं प्रतिभाति। महाकविभवभूत्यादीनां प्रभावो यत्र तत्र दृश्यते—

'प्रिये ! आन्तर: कोऽपि हेतुः पदार्थान् व्यतिषजति जननान्तरसौहृदञ्च भावस्थिरमिति यदुक्तं पूर्वसूरिभि: तद् विश्वसनीयम् ।'

(प्रमद्वरा पृ. २)

'क्षणमपि विना शक्ति शक्तशिवो नहि जीवितुम् इत्यत्र भवभूतेरुत्तररामचरितस्य प्रभावः स्पष्टमस्ति (प्रमद्वरा, पृ. ५२) इत्यत्र भगवतः शङ्कराचार्यस्य सौन्दर्यलहरीस्तोत्रस्य 'शिव: शक्त्या युक्तो यदि भवति शक्तः प्रभवितुम् — इति प्रथमपद्यस्य कोऽपि प्रभावो विद्यते ।

नाटिकायामस्यां संवादा: प्रायश: प्रसङ्गानुकूला: समीचीना भारतीयसंस्कृतिपरम्परानुरूपाश्च । तत्र कृत्रिमता न राजते, भाषापि च तेषाँ सरला ग्राह्या च । 'डुण्डुभक: (हतचेतनस्सन् तारस्वरेण)

मोचयस्य ! एषा आनर्तनन्दिनी—देवी—सुवर्णा पार्श्वे तिष्ठति ।

(सर्वा: सविस्मयं परस्परमवलोकयन्ति)

सुवर्णा (रोषारुणलोचना सती)

कुटिलमाणवक ! केयं प्रमद्वरा ? कस्याश्चित्रमिदम् ? (डुण्डुभको मौनं भजते) न भाषसे किञ्चित् । भवतु, स्वयमेवाहं द्रक्ष्यामि केयं मत्सपत्नी एव जाता ?

(सकम्पं रुरुकरपुटात् प्रमद्वराचित्रमपकृष्य रहस्यञ्चाभिज्ञाय सक्रोधं चित्रं दूरे क्षिपति) रुरु: (प्रबुद्धस्सन् सुवर्णां दृष्ट्वा किंकर्तव्य विमूढतां नाटयन्)

'अये देवी सुवर्णा ? स्वागतं स्वागतं प्रिये ! इत आस्यताम् ।'

(प्रमद्वरा. पृ. १६)

+सहामि (२०)— सहन्ती (३०) प्रस्थास्यसि (४९) भञ्जितुम् (५२) इत्यादयः केचन शब्दा व्याकरणदृष्ट्यात्र चिन्तनीयाः सन्ति। भूमिका-लेखने ग्रन्थकृतादर्शितः आङ्लभाषामोहो न रोचते।

अभिनेया नाटिकेयं सर्वैः सहृदयैः सानन्दं संग्राह्या पठनीया च वर्तते। मन्ये प्रगल्भो नाटिकाकारो डा० राजेन्द्रमिश्रमहाभागोऽग्रेऽपि स्वकीयाभिर्महनीयरचनाभिः संस्कृतसाहित्यस्य गौरवम् अभिवर्धयिष्यति। जयतु संस्कृतं संस्कृतिश्च।

---

+ नाटिकयानया डा० मिश्रमहाभागेन स्वगुरुमण्डली आत्मपरिचये स्मृतेति नियतं प्रशंसनीयमस्ति। पद्यमिदं प्रयाग विश्वविद्यालयस्थानां गुरूणां स्मृतिं नवीकरोति।

नाट्यं योऽधिजगाम दीक्षिततत्तं काव्यं सुरेशाञ्चितं।
शैलूषाभिनयं कवित्वकलनं चण्डीप्रसादोद्गतम्।
वेदं रामसियाश्रितं ह्युपनिषज्ज्ञानं पितृव्यानुगं।
वैनीत्यं जननीनिदेशजनितं माङ्गल्यमूल कृती॥
अभिनवत्रङ्गुरुशिष्यः कृतबहुकाव्योऽभिषिक्तसदुपायः।
स जयति वाक्तनुजन्मा मिश्रस्त्वभिराजराजेन्द्रः॥'

(प्रमद्वरा, पृ० ३)



# मध्यप्रदेशेषु संस्कृतप्रचारस्य शुभारम्भः

श्री पूर्णचन्द्रः उपाध्यक्षः



लोकभाषा: प्रचार समिते: मध्यप्रदेशशाखा गतवर्षत: बिलासपुरे नैकसंस्कृतसंभाषणशिविराणामायोजनेन यद्यपि सक्रिया सञ्जाता किन्तु सागरनगरस्य विविधस्थानेषु संस्कृतशिविरायोजनेन स्फूर्तिमती भवति। २४-९-९२ त: ३-१०-९२ पर्यन्तं सागरविश्वविद्यालससंस्कृत-विभागे - महिलाक्लब - राजकीयविद्यालय– महिला पलिटेक्निक्— महारानीलक्ष्मीबाई कन्याशाला — सरस्वतीशिशुमन्दिरेषु समकाल षट्शिविराणि केन्द्रीयसंस्कृत प्रचारकस्य श्री पूर्णचन्द्रोपाध्यायस्य नेतृत्वे आयोजितानि संस्कृतप्रचारका: श्रीनारायणदाश-श्री धर्मेन्द्रकुमारहटाई-श्री लम्बोदरनन्दी-श्री ललितकुमार मिश्र: एतानि शिविराणि सञ्चाल्य ३०० बालक बालिका: प्रशिक्षितवन्त: राज्यशाखाध्यक्षाणां सागर-विश्वविद्यालयसंस्कृतविभागमुख्यानां प्रोफेसर राधावल्लभत्रिपाठि-नाम् आध्यक्ष्ये सामूहिकसमापनसमारोह: ३-१०-९२ दिनाङ्के आयो-जित:। प्रो० त्रिपाठिमहोदया: संस्कृतस्य व्यापक प्रचारेण मातृभाषाया: स्थिति: दृढा भविष्यति इति मतम् प्रकाशितवन्त: मुख्यातिथिरूपेण प्रो. वामो आठलेमहोदया: भाषाजननी संस्कृतस्य महत्वं प्रख्यापितवन्त:। संस्कृतसंभाषण शिविरं च प्रशंसितवन्त:। अर्थशास्त्र विभागाध्यक्षा: प्रो० मेहरोत्रामहोदया: संस्कृतशब्दानां मातृभाषायां व्यापकव्यवहा-रार्थम् सूचितवन्त:। केन्द्रीयप्रचारक: संचालक: श्री पूर्णचन्द्र उपाध्याय: लोकभाषा प्रचार समिते: उद्देश्यं स्वरूपं च प्रकटितवान्। शिविरार्थिभि: संस्कृतनाटिका: अभिनीता: संस्कृतभाषणं च कृतम्। सामूहिकसंस्कृत-भाषण प्रतियोगितायां प्रथम: श्री शेखरशास्त्री, द्वितीय: श्री विक्रान्त कुमार जैन:, तृतीया कुमारी सुचित्रा शेखरवानी, अभिनये च प्रथमा-कुमारीमालविकात्रिपाठी पुरस्कृता: कार्यक्रमस्य सञ्चालनं स्वागत-समिते: सचिव: श्री एस. पी तिबारी कृतवान्, धन्यवादार्पणं श्री बलवीरसिंह: कृतवान्। एतत्कार्यं शाखाया: उपाध्यक्षाणां डा. अच्युतानन्ददाशानां प्रत्यग्रमार्गदर्शनेन तथा च संघटमसचिवस्य डा. प्रभाकरपाटनकरस्य प्रयासेन सफलं जातम्।

— सागर, मध्यप्रदेश:



पूर्वतोऽनुवृत्तम्--

# सोलनशतकम्

केशवराम शर्मा, दर्शनाचार्य, एम, ए. एम. फिल.
(प्राप्तस्वर्णपदकद्वय:)



सातिप्रीति श्रममविरतं कुर्वतां कर्षकाणाँ
स्वेदासारै वंपुरवयवस्यन्दितैः प्राप्तपोषा:
छायामात्रं मसृणतनव: पादपा आद्रियन्ते
अम्भोधारा न खलु गणयन्त्यानपेक्ष्याद् घनानाम् ।५१।

बड़ी लगन से निरन्तर श्रम करते हुए कृषकों के अङ्गो से बहते हुए पसीने से ही पोषित होने वाले कोमल काय पौधे मेघों की जलधाराओं की आवश्यकता नहीं मानते केवल छाया की अपेक्षा रखते हैं ।

आरादुच्चैरचलवपुषो निर्गतो ग्रावराशि:
चूर्णीभूतोऽमलधवलतापादको मन्दिराणाम् ।
इष्टामृद्धिं वितरति जनान् विक्रयाद्प्रयासं
नूनं नष्टा अपि सुकृतिनां भूतय: स्युः परार्थाः ।५२।

चारों ओर ऊंचे पर्वतों से निकले पत्थरों के ढेर चूना के रूप में घरों को निर्मल और धवल बनाते हैं । तथा बेचे जाने पर लोगों को समृद्धि प्रदान करते हैं । निश्चय ही श्रेष्ठ जनों की सम्पत्तियां नष्ट हो जाने पर भी परोपकार कारक होती हैं ।

मूर्ध्नो वृक्षान् मधुरफलदान् क्रोडतश्चाद्रिखण्डः
उत्कृष्टार्थां सृजति सिकता गेहनिर्माणयोग्या: ।

केदारेभ्यो बहुधनवृषं शस्यशस्योत्करं च
सर्वेऽप्यङ्गा जलधितनयालिङ्गिता ह्यस्य सन्ति ।५३।

पर्वतीय क्षेत्र का यह भाग ऊपर से मीठे फल देने वाले वृक्षों को पैदा करता है अपनी गोदी से बहुमूल्य भवननिर्माण योग्य रेत उपजाता है । अपने खेतों से प्रभूत धन प्रदान करने वाले श्रेष्ठ फसल के भण्डार जुटाता है । वस्तुतः इस सोलन क्षेत्र के सभी अङ्ग समुद्रपुत्री लक्ष्मी द्वारा आलिङ्गित हैं ।

गम्भीयन्त्रव्रजसमुदितो घोरघोषोऽनुयामं
निघ्नन् रूढां सुचिरजडतामस्वतन्त्रत्वजाताम् ।

विद्राव्यारिं कलुषितमितः क्रूरदारिद्रयदैत्यं
लोकस्यान्तर्जनयति गतिप्रेरणामृद्धिहेतोः ।५४।

यहाँ रेल गाड़ी आती है । उसका तीक्ष्ण घोष प्रति प्रहर जनता की चिर कालिक परतन्त्रता की जड़ता को मिटाता है । तथा दरिद्रता के क्रूर दैत्य रूपी कलुषित शत्रु को भगाकर लोगों के अन्दर समृद्धि के लिए प्रगति की प्रेरणा प्रदान करता है ।

शैलेषूच्चैर्नगरपरिधौ उज्ज्वलाङ्गो हिमौघः
प्रत्यब्दं यो शिशिरसमये तन्यते द्रष्टुमिष्टः ।

श्वेतच्छत्रो नृप इव सदाराजतेऽसौ स्वपीठे
दण्डत्रासाद् भृशमवयवान् कम्पयन् नु प्रजायाः ।५५।

नगर की परिधि में ऊंचे पर्वतों पर उज्ज्वलाङ्ग दर्शनीय हिमसमूह जो प्रतिवर्ष फैल जाता है, लगता है कि श्वेत छत्र वाला राजा सिंहासन पर शोभा-यमान है और लोगों के शरीरों को दण्ड के भय से कम्पित कर रहा है ।

शीतो वातो न किल सहते ग्रैष्ममुष्णप्रकोपं
क्लिष्टा मेघा न च गिरिभुवः शुष्कतां मर्षयन्ति ।

दौर्गन्ध्यं वा घनतरुवरा न क्षमन्ते समुत्थं
मातेवात्र प्रकृतिरनिशं रक्षति स्वीयसूनून् ।५६।

यहां शीतल वायु ग्रीष्म के गर्मी के प्रकोप को नहीं सहता । सदा छाए हुए गीले बादल पर्वत भूमि का सूखापन नहीं सहते । तथा घने वृक्ष फैलती हुई दुर्गन्ध को नहीं सहते । इस प्रकार यहाँ की प्रकृति अपने बच्चों की रक्षा माँ सी बनकर करती है ।

> श्यामाभेषु द्रुमघनवनेषूच्चविद्युत्प्रदीपा
> रात्रौ नीलोज्ज्वलमणिरुचो वक्रमालालिखेशाः ।
>
> गोपाधीशः सुललितवपुः चित्ररत्नोत्कराढ्यः
> क्रीडाकश्रो रवितनयया नृत्यतीव प्रसन्नः ।५७।

श्याम वर्ण के वृक्षों वाले घने बनों में वने घरों पर ऊंचे स्थानों में प्रज्ज्वलित बिजली के दीपक नील उज्ज्वलमणियों की तरह लगते हैं जो बक माताओं की छवि प्रस्तुत करते हैं । उन्हें देख कर ऐसा लगता है कि– अत्यन्त ललित देह वाले, अनेकवर्णी रत्नों के चमकदार भूषणों से सुसज्जित मदनमोहन, रात के समय प्रसन्नता पूर्वक यमुना से क्रीड़ा करते हुए और भी सुन्दर हो कर नृत्य कर रहे हैं ।

> क्रीड़ाक्षेत्रे पुरपरिसराभ्यन्तरे रम्यसाम्ये
> ग्रीष्मे देव्याश्चरणशरणीभूतपूतात्मलोकाः ।
>
> चापक्रीडां रचयति महामल्लयुद्धोत्सवं च
> ग्रामीणानां पिशुनयति यत् कौशलं विक्रमं च ।५८।

नगर के परिसर के मध्य रमणीय समतल वाले खेल के मैदान में ग्रीष्म काल में भगवती शूलिनी के चरणों की शरण से पवित्र लोग धनुषबाण का खेल तथा विशाल मल्लयुद्धोत्सव का आयोजन करते हैं जिसमे ग्रामीण लोगों की क्रीड़ाकुशलता तथा पराक्रम प्रकट होता है ।

> पुष्पोद्याने नगरजठरे सालमालान्तराले
> ग्रावोत्कीर्णः प्रगतिपुरुषो नेहरूमूर्तिभूतः ।
>
> शंलक्षेत्रं श्रमपरजनैर्जुष्टमृद्धिं प्रणीय
> तद्रक्षार्थं प्रहरिसदृशः प्रेरयत्यद्रिलोकान् ।५६।

नगर के बीचों बीच वृक्षों की माला के अन्तराल में प्रगति पुरुष पं. नेहरू की एक भव्य मूर्ति स्थापित है जो मेहनती लोगों के आवास इस हिमाचल को पहले उन्नति का पथ दिखा कर तथा अब उसकी रक्षा के लिए प्रेरित करने वाले प्रहरी की तरह खड़े हैं ।

यद्यप्यास्ते नगरसविधे मद्यनिर्माणशाला
नैवात्येति स्थितिमिह सदा तत्प्रपानप्रवृत्तिः ।

पूर्वं प्राप्ता शमदमदयासंस्कृतिः क्वापि लोक—
चेतोरूढा न हि विकृतिमल्पीयसीमप्युपैति ।६०।

यद्यपि नगर के निकट ही मद्यनिर्माण शाला भी है तथापि मद्यपान का प्रचार कभी मर्यादा को नहीं तोड़ता । एक लम्बी चिरपरम्परा से विद्यमान शान्ति, संयम व दया से सम्पन्न संस्कृति लोगों के हृदयों में बैठी हैं वह कहीं भी थोड़ी भी विकृति को नहीं आने देती ।

संस्कृत विभागाध्यक्ष, राजकीय स्नातकोत्तर
महाविद्यालय, सोलन (हि. प्र.)

---

# पाठकाः प्रार्थ्यन्ते

मान्याः !

नववर्षारम्भो जातः नववर्षशुल्कः प्राप्यः ।

पत्रप्रेषणेनापि वार्षिकशुल्कप्रेषणार्थं प्रार्थना कृता किन्तु स्वल्पैरेव महानुभावैः शुल्कप्रेषणं कृतम् । अतः सविनय प्रार्थ्यते यत् शीघ्रमेव शुल्कप्रेषणेन सहायता कार्या ।

— सम्पादकः



# गीता जयन्ती सुसम्पन्ना

काशी प्रसाद मिश्र:



चुनार। दिसम्बर मासस्य ५—१२—९२ तारिकायां 'श्रीमती भागीरथी—ट्रस्टादर्श संस्कृत महाविद्यालये 'काशी विद्यापीठस्य संस्कृत विभागाध्यक्षाणां" माननीयानां प्रो० अमर नाथ पाण्डेय महोदयाना- मध्यक्षत्वे "गीता जयन्त्युत्सव:" महतोत्साहेन सुसम्पन्न:। महाविद्यालयस्य प्राचार्यवर्यै: श्री गणेश प्रसाद मिश्रमहोदयै: स्वागतभाषणेन सह कृतज्ञतापूर्वकं माल्यार्पणं कुर्वद्भि: कार्यक्रम: सञ्चालित:। कार्यक्रमेऽस्मिन् महाविद्यालयीया: छात्रा: काव्यपाठेन, सुभाषितगीतेन च प्रतिथिमहोदयानां स्वागतमकार्षु:। तदनन्तरं समवेतस्वरेण श्री मद्भगवद्गीताया: पञ्चदशाध्यायस्य पाठोऽभवत्। एतदनन्तरमध्यक्षत्वेन भाषमाणा: प्रो० पाण्डेयमहाभागा: गीताविषये स्वीयान् विचारानुपस्थापयन्तोऽचकथन्. यन्नैष्कर्म्यं साधितुं कर्मयोगस्य महत्यावश्यकताऽस्ति। गीताऽस्माकं रिक्थम्। अस्य रिक्थस्य रक्षाऽस्माभिर्विधेया। भगवदुक्तिरियं कर्म सम्बन्धें, तदेव कर्म विशुद्धं मन्यते, यत् फलासक्तिशून्यं भवति। कर्मणोऽस्य परम्परायाँ भगवन्तं प्रति कर्मसमर्पणमेव प्रमुखं तत्वमस्ति। कर्मयोगी सिद्ध्यसिद्धयोश्च समो- भवतु समत्वमेव योगनाम्नाभिहितम्। इदमेव रहस्यं गीताया: कर्मयोगस्य। प्रो० पाण्डेयमहाभागै: गीतामाधारीकृत्य कर्मयोगपरम्परा वर्णिता। स्वमौलिककल्पनाभि: कर्मयोगस्य विविधा: रहस्या उद्घाटिता: गोष्ठ्यां पण्डितप्रवरै: डा० श्री रामप्यारे मिश्र महोदयैरुक्तम्। गीता भारतीय संस्कृत वाङ्मयस्यामूल्यो निधिर्वर्तते, संस्कृतवाङ्मयस्य निर्मलितो अंश: गीतेति। श्री प्राणनाथ मिश्र, श्री नन्दकिशोर त्रिपाठी, श्री काशीप्रसाद मिश्र, श्री कृष्णकान्त शुक्ल, नामधेयै: विद्वद्भिरपि स्वीया: विचारा: गीतामाध्यमेन प्रकटिता:।

अन्ते महाविद्यालयस्य प्राचार्य महोदया: श्री गणेश प्रसाद मिश्रा: परिषदोऽध्यक्षा: श्री काशीप्रसादमिश्रश्च आगतातिथीन् प्रति धन्यवादज्ञापनं कुर्वन्त: गोष्ठ्या: समापनं कृतवन्त:।

# श्रीचामुण्डास्तव

सुदेश गौतम पङ्किल



वत्सले–भगवति – चण्डिके – चामुण्डे ।
पाहि–पाहि–पाहि माम् पाहि जगदम्बे ।१।

महामङ्गले पुण्ये वरदे शरण्ये ।
पाहि–पाहि–पाहि माम् पाहि चामुण्डे ।२।

त्वमाद्यासृष्टिः अयि ! विश्वरूपे ।
त्वमाद्याशक्तिश्चारुज्ञानरूपे ॥

महामङ्गले –पुण्ये च वरदेऽम्बे ।
पाहि–पाहि –पाहि माम् पाहि चामुण्डे ।३।

हिमक्रोडवासिनी वाणगङ्गाविहारिणी ।
आतुराणाञ्च कष्टनिवारिणी ॥

राधा धामाग्रे नन्दिकेश्वरोपकण्ठे ।
पाहि–पाहि–पाहि–माम् पाहिं चामुण्डे ।४।

शैलसुते अयि ! गन्धमाल्यशोभे ।
गणाधिपाम्बे भवप्राणवल्लभे ॥

देदीप्यमाने निवसननिगति खण्डे ।
पाहि–पाहि –पाहि माम् पाहि चामुण्डे ।५।

भवतायतप्ता: दरिद्राश्च दुष्टा: ।
न कुर्वन्ति पूजां पापै: बिमूढा: ॥
यत् किञ्चिद् यादृशश्च सुतस्तवाम्बे ।
पाहि—पाहि—पाहि माम् पाहि चामुण्डे ।६।

रक्तवीजहारिणी चण्डमुण्डविनाशिनी ।
भक्तानाञ्च भवतापहारिणी ॥
दैवदानवसम्बादे संस्तुते मार्कण्डे ।
पाहि—पाहि—पाहि माम् पाहि चामुण्डे ।७।

विश्वेश्वरी जगद्धात्री इति मन्त्रार्चिते ।
रम्भे च शोम्भे त्रिगर्तबिराजिते ॥
महालक्ष्मी: महासरस्वती हे! महाकालिके ।
पालय विश्वं नित्यं विश्वपालिके ॥
राजते रम्भे तुषारखण्डे ।
पाहि—पाहि—पाहि माम् पाहि चामुण्डे ।८।

सदा पापेषु लीना: च सद् बुद्धिहीना: ।
कुर्वन्ति नित्यमनाचारान् नवीनान् ॥
त्रुटित: च खण्डित: निम्नगापङ्के ।
पाहि—पाहि—पाहि माम् पाहि चामुण्डे ।९।

हे उमे—रमे—हे सीते—राधे ।
समागतो सुदेशोऽयं तव पादभागे ॥
यथेच्छा वर्तते कुरु तथा अम्बे ।
पाहि—पाहि—पाहि—माम् पाहि चामुण्डे ।१०।

(संस्कृत विभागाध्यक्ष) डी.ए.वी. कालेज
कोटखाई (शिमला) १७१२०२




# मध्यप्रदेशसंस्कृतअकादमी

## नवोदितप्रतिभासमागमः-९२

म. प्र० संस्कृतपरिषदः (अकादमी) अ० भा० प्रतियोगितापर्वः विश्वविद्यालयसहयोगेन १३-१४ नवाम्बरदिवसयोः १९९२ खरीष्टाब्दे सागर विश्वविद्यालये जातः । अत्र २०-३५ वर्ष—आयुषः संस्कृतज्ञाः विश्वविद्यालयेभ्यः संस्कृतप्रतिष्ठानेभ्यः भागं जगृहुः ।

अत्र संस्कृतनृत्य — रूपकस्पर्धा पाण्डवानीनृत्यगीतप्रस्तुतिः शास्त्रार्थ—सृष्टिप्रक्रिया संस्कृतकविगोष्ठी च एते विशेषकार्यक्रमा आसन् समारोहस्य । डा० भास्कराचार्य त्रिपाठी परिषदः सचिवोऽत्र विशेषरूपेण कार्यक्रमसफलतायै प्रयासान्-अकरोत् ।

अत्रोद्घाटकः श्री रेवाप्रसादद्विवेदः—वाराणसेय आसीत् । स्वागत कर्ता च परिषदः सचिवः । डा० राधावल्लभः सागरविश्वविद्यालये संस्कृत विभागाध्यक्षः कार्यक्रमस्य महत्वं व्याख्यातवान् । कालिदास परिषदः (अकादमी) उज्जैनस्थायाः आर्षविद्वान् डा० वच्चूलाल अवस्थी अध्यक्षीयभाषणमकरोत्-युवानश्च पण्डितास्तेन प्रतिबोधिताः । डा. बाल शास्त्री संस्कृतविभागस्य प्रवक्ता च मञ्चसञ्चालनम करोत् । तिरुपतितः समागमप्रतियोगिभिः नाट्यप्रस्तुतौ प्रथमपुरस्कारः प्राप्तः । द्वितीय स्थानमत्र सागरविश्वविद्यालयस्य संस्कृतविभागीयछात्राणामासीत् । हमीदियामहाविद्यालयस्य छात्रैः "रोगीवैद्यकम्" नाटकमभिनीतम् । सागरविश्वविद्यालयछात्रैश्च मेघसन्देशम् । यथा गुरुस्तथा शिष्यः प्रहसनमिदं केन्द्रीय सं. वि. तिरुपतिछात्रैरभिनीतम् । 'सृष्टिप्रक्रिया'

इति विषयमधिकृत्य जाते शास्त्रार्थे चत्वारो युवानः पण्डिताः भागं जगृहुः । वेदप्रभृतिभारतीयदर्शनपर्यन्तं तथा च सृष्टिविषये पाश्चात्य चिन्तनमधिकृत्य गभीरमालोड़नमभूत् । तिरुपतिस्थौ पं. विरूपाक्ष-भागीरथ नन्दौ प्रथमद्वितीयपुरस्कारणे सम्मानितौ ।

संस्कृतकाव्यकारेषु दिल्लीतः डा. रमाकान्त शुक्लः इलाहाबादतः श्री जनार्दनमणिः, उज्जैनतः डा, श्री वच्चू लाल अवस्थी सागरतः डा.-राधावल्लभ त्रिपाठी, श्री सीताराम द्विवेदी तथा डा. प्रेमनारायण द्विवेदी परिषदः सचिव श्रीभास्कराचार्यः प्रमुखा आसन् ।

पुरस्कारवितरणं कुर्वता कार्यवाहककुलपतिना भणितम् यदेष अकादम्याः प्रयासः सर्वथा स्तुत्यः सफलश्च ।

---

# दिल्लीसंस्कृत अकादमी

## जैनदर्शने राष्ट्रीयएकता

### १०-११-९२

दिल्लीविश्वविद्यालयस्य टेगोर कक्षे अकादमी डा. इन्द्रचन्द्रशास्त्रिणः स्मृतौ समारोहमिदमायोजितवती । अत्र दिल्लीविश्वविद्यालयस्य डा. सूबे सिंहः राणा मुख्यातिथिरासीत । अहिंसासत्यापरिग्रहादिविषयाः सन्ति जैनदर्शने. । एतेषां पालनेन 'वसुधैव कुटुम्बकम्' एष भावो जागर्ति तेन च राष्ट्रैक्यं सुलभमेव । मुख्यवक्ता तु जोधपुरविश्वविद्यालयस्य संस्कृतविभागाध्यक्षः डा. दयानन्द भार्गव, आकृति–प्रकृति अहंकृति— आदय एव जीवनधाराः-इति प्रावोचत् । यदि मानवः विन्दूनिमान् स्वलक्ष्यप्राप्तये सेवते तु सर्वथाऽसौ शान्तो भवति तेन च राष्ट्रिया एकता सुलभा । दिल्लीविश्वविद्यालयस्य संस्कृतविभागाध्यक्षः वाचस्पति उपाध्यायः दिल्लीसंस्कृतअकादम्याः— आयोजितान् नव नवविषयसम्बन्धि समारोहान् प्राशंसत ।

## अन्तरमहाविद्यालयीयश्लोकसंगीतप्रतियोगिता

१३-११-९२ दिने मिराण्डा हाउस सभागारे दिल्यां 'पशुपत्यष्टकम्'

उपरि-आधारिता प्रतियोगिता जाता । त्रयोदशमहाविद्यालयानां छात्रा-भिः षट् षट् छात्राणां वर्गरूपेण भागोऽत्र गृहीतः । सुन्दरमधुरकण्ठेन च प्रस्तुतीकरणं जातम् । नवभारत टाइम्सपत्रस्य सम्पादकः दीपं प्रज्वाल्य उद्घाटनमकरोत् । मिराण्डा महाविद्यालयप्राचार्या चाध्यक्ष-तामकरोत् । डा. सूबे सिंहः, डा. रामकरण शर्मा, डा. के.पी. एस. मेननः एते महापुरुषा अप्यत्रोपस्थिताः आसन् । डा. विद्यानिवासमिश्रः प्रवो-चद्यत् श्लोकगायनेन मनोरञ्जनन्तु नूनमेव भवति सहैव संस्कारशोधन-मपि अनेन जायते । अकादमी—एतत्-सर्वं सुष्ठु करोति देशहिताय ।

अकादमी सचिव श्रीकृष्ण सेमवाल जगाद यत् एवं विधानेक प्रति-योगिता प्रतिवर्षं क्रियन्ते पाठशालामहाविद्यालयस्तरीयाः । अत्र क्रमशः रु.१५००/ रु.१२००/रु.९००/ रु. ६००/ ३००/रु.३००/ अनेन क्रमेण प्रोत्साहनपुरस्काराः दीयन्ते ।

——

## पाठशालासु संस्कृतप्रतियोगिताशुभारंभः

२५-११-९२ तिथौ दिल्याः तुलसीनगरीये राजकीयविद्यालये संस्कृत प्रतियोगितानामुदघाटनमकारि । श्लोकसंगीतम् श्लोकोच्चारणम् संस्कृते भाषणम्, एकलश्लोकसंगीतम् इत्यादि विविधा, विद्यालयीयप्रति-योगिताः प्रारब्धा अनेन सह । दिनचतुष्टयं यावत् इदं भविष्यति । दिल्याः पूर्वकार्यकारिपार्षदेन श्री कुलानन्दभारतीयेन भणितम् - संस्कृत-मस्ति तज्ज्योतिः यया प्राचीनभारतदर्शनं भवति । अनेन देशएकतायाः देशप्रेम्णश्च भावना जागर्ति । विद्यालयमहाविद्यालयेषु एतत् सर्वमा-योज्य दिल्लीसंस्कृत अकादमी जनमानसं यावत् संस्कृतं प्रचारयति । सचिवः प्रावोचत् यत् वार्षिकव्ययस्य तृतीयो भागोऽत्रैव व्ययी क्रियते ।

—

## नवोदितसंस्कृतकविप्रतियोगिता

दिल्ली २८-११-९२ वसन्तग्रामआदर्शसंस्कृतमहाविद्यालये वसन्तविहारस्थले समारोहोऽयमायोजितः । अत्र दिल्याः पञ्चविंशति नवोदित संस्कृतकविभिः भागो गृहीतः । राष्ट्रिय—एकता, भारतस्तुतिः राष्ट्रनेतारः भारतीयसंस्कृतिः, तथान्येऽनेका जीवनोपयोगि विषयाः ।

आसन् यानाश्रित्य कविभिः स्वकाव्यपाठः कृतः । ११००/=प्रथमपुरस्कारः, ८००/=द्वि.पु. ७००/=तृ.पु. ६००/=च.पु. ५००/=पञ्चमपुरस्कार, स्तथा च ३००/रूप्यकाणां विंशतिपुरस्काराः प्रदत्ताः । मुख्यवक्ता भारतप्रशासनस्य पूर्वरक्षासचिवः आसीत् स आह" काव्यं किल मानव जीवनायातीवावश्यकम् संस्कृतकविप्रतियोगितया यत्र कवयः प्रोत्साहिताः भवन्ति तत्रैव समाजोऽपि लाभान्वितो भवति । कविः स्वकाव्यमाध्यमेन प्रतिजनं राष्ट्रियैक्यं देशप्रेमभावनाञ्च तथा च सामायिकसंगठनं. धार्मिकसाम्प्रदायिकऐक्यञ्चोद्भावयति ।

समारोहस्याध्यक्षता भारतप्रशासनस्य मानवसंसाधन विकासमन्त्रालये सहायक संस्कृतपरामर्शदात्रा श्री रामकृष्ण शर्मणा कृता । सञ्चालनञ्च अकादमी सचिवोऽकरोत् ।

---



## निवेदन

जिन्हें किसी भी मास की २५ तिथि तक अंक प्राप्त न हो उन्हें कार्यालय को सूचित करना चाहिए जिससे अंक पुनः भेजा जा सके । विलम्ब से सूचना मिलने पर अंक अप्राप्य हो जाते हैं ।



# सम्पादकीयम्



संस्कृतस्य हि संस्कारा: जीवनेऽस्य पदे पदे ।
दृष्ट : जनैर्भारतीयै: सोऽयं लालबहादुर: ॥१॥

श्रद्धाञ्जलिमर्पयामस्तस्मै नरवराय वै ।
प्रधानामात्यपदवीं योऽस्य देशस्य प्राप्तवान् ॥२॥

संस्कृतं जीवनं यस्य संस्कृतोद्धारहेतवे ।
सोऽयं जयतु वीराणां कृषाणानामपि प्रियः ॥३॥

मुद्रक: प्रकाशक :—
भारतीमुद्रणालय भारती विहार, मशोबरा - शिमला १७१००७ (हि. प्र.)
स्वामी:- श्रीमती आचार्य रत्नकुमारी शर्मा,
दूरभाष : [78459 8-200]
जनवरी १९९३ माघ २०४९ — वर्षम् — ३७ अङ्कः ४
वार्षिक मूल्यम् ५० रु०

R. N. 6384/57 ल– 33/एस. एम. / 10/91

# संस्थान के प्रकाशन

१. फलादेश कल्पतरुः (मूल संस्कृत में)
हिन्दी अंग्रेजी टीका सहित ४० वर्ष के अनुसन्धान और अनुभव पर आधारित जातकफल कहने का अनुपम ग्रन्थ ... मू. ७०-००

२. संस्कृत कोशवाङ्मयम् (संस्कृत में)
संस्कृतकोशसाहित्यपर अनुसन्धानपूर्ण विवेचन ... मू. १७५-०

३. झञ्झा (संस्कृत में)
शेक्सपीयर के द टैम्पेस्ट नाटक का सचित्र रूपान्तर .. मू. ५०-००

४. हिमाचलप्रदशे संस्कृतस्य प्रसारो विकासश्च (संस्कृत में)
हिमाचल में संस्कृत के प्रसार विकास की विस्तृत कहानी ... मू. ५०-००

५. वैजयन्ती (हिन्दी काव्य)
नवीन प्राचीन विचारधाराओं का गीतिमय समन्वय — मू. १५-००

६. सूनृता (संस्कृत काव्य)
आधुनिक गीतों में गुम्फित अनुपम उपहार ... मू. २५-००

७. शक्तिसौरभ (हिन्दी में)
संस्कृत लेखिकाओं का इतिहास ... ... मू. १५-००

८. विचारामृत (हिन्दी में)
आचार्य जी के विभिन्न विषयों पर जीवनोपयोगी लेख दो भाग मू. १५-००

९. पथ्यापथ्यविनिर्णय
सं. हिं. टीका सहित आयुर्वेद का दुर्लभ ग्रन्थ ... मू. [illegible]
(डाकव्यय सर्वत्र पृथक्)

१०. सरिता
(अभिनव सं. कथानिकाएं) ... मू. ५० ००

११, हिमानी
(संस्कृत काव्य हिन्दी अनुवाद सहित) — मू. १००-०

सम्पर्क सूत्र :—

सचिव, **संस्कृत शोध संस्थान**
भारती विहार मशोबरा
शिमला १७१००७ (हि. प्र.)

# दिव्यज्योतिः

संस्कृतस्य सचित्रमासिकम्



ताः कृष्णवाहे वसुदेव आगते
स्वयं व्यवर्यन्त यथा तमो रवेः ।
ववर्ष पर्जन्य उपांशु गर्जितः
शेषोऽन्वगाद् वारि निवारयन् फणैः ॥

श्रीमद्भागवतम्

३७ शिमला फर्वरी, १९९३ अङ्कः ५

# दिव्यज्योतिः

संस्थापितम् १९५६
प्रधानसम्पादकः—
आचार्य केशव शर्मा



संस्थापकाः तथा
आद्यसम्पादकाः
आचार्यश्रीदिवाकरदत्त
शर्माणः,
राष्ट्रपतिसम्मानिताः

(पत्रमिदं हि०क० सं० भा० अकादमी प्रदत्तानुदानसाहाय्यम् । पत्रिकागत-मुद्रणदोषाणां सम्पादकीयनीति-विषये च अकादमीदायित्वं नास्ति)


हिमाचल प्रदेश—पंजाब-हरियाणा-जम्मूकश्मीर मध्य प्रदेश-राजस्थान—महाराष्ट्र उत्तरप्रदेश शासन-स्वीकृतं केन्द्रशासनपुरस्कृतं सचित्रं संस्कृतमासिकम् ।

## पत्रस्य उद्देश्यानि तथा नियमाः

सरलसरससुबोध-साधनैः सर्वस्मिन् संसारे संस्कृतस्य प्रसारः, साहित्यान्तर्गतानां सकलकलानां समन्वेषणं, संसारस्य हितसम्पादनम्, एवं लौकिक - अलौकिकस्वातन्त्र्यस्य प्राप्तिः ।

"दिव्यज्योतिः" प्रतिमासं पञ्चदशतारिकायाम् (आङ्ग्लमानेन) प्रकाशितं भवति

पत्रस्य वार्षिकमूल्यं ५० रु० अर्धवार्षिकं २५ रु० एकस्याङ्कस्य च रु० ४/५०
भवति ।

वर्षारम्भः अक्तूबरमासतः भवति ग्राहकः कस्मादपि मासाद् भवितुं शक्नोति। ग्राहकैः, "सम्पादक, दिव्यज्योतिः, भारती विहार, मशोबरा, शिमला-१७१००" इति संकेते धनादेशेन वा. शु. प्रेषणीयम् ।

# विषयानुक्रमः

# सौरभाश्रमः

## प्रथमं दृश्यम्

हिमालयस्योपत्यकायां विशालक्षेत्रम्, इतस्ततः प्रसृताः लघुशैलश्रृंगाः,

पर्वतश्रृंगेषु सघनाः वनराजयः । विशालक्षेत्रमध्ये सौरभमुनेराश्रमः । आश्रमस्य निर्माणमाधुनिकम् तथापि पार्वत्यशैलीमनुकुर्वन्मध्यम् तत्रोपासनास्थलम् यत्र — अनेके साधकाः साधनां कुर्वन्ति सायं प्रातः — दिवसे च निःशुल्कं समाजसेवाम् । सर्वतो मध्ये मुनिकुटीरः । कुटीरस्तु स्थानीय-तरुतृणनिर्मितम् परितः मनोहराण्यनेक— कुसुमसम्बलितानि-उद्यानानि कतिपयक्रोशपर्यन्तं स्थानमिदं पुष्प-धूपसुगन्धवासितम् । प्रातः कालः, उपासनास्थले मुनिर्विराजमानः स्वोच्चासने । अन्ये साधकसाधिकाः स्व स्व आसनेषु उपविष्टाः— प्रार्थयन्ति सवाद्यघोषम् —

### मङ्गलगानम्

हे ईश ! त्वत्कृपातः कुशलास्तु-त्वां स्मरामः

१

त्वत्पादपद्मधूलिं शिरसा सदा नमामः ।
ये पर्वतीयश्रृंगास्तत्रापि त्वं हि दृष्टः
तत्रत्यवृक्षशाखासु विराजसे न हृष्टः ?
जीवोऽपि दीनहीनः कोऽसौ न त्वया पृष्टः ?
तत्कारणात् हि सर्वे त्वत्पादयोः पतामः
हे ईश ... ...

२

उद्यानपुष्पकलिकास्त्वद्रूपराशियुक्ताः
या भिन्नवर्णशोभा सापि त्वया प्रमुक्ता ।

या नीलिमा तृणेषु सा किं न त्वत्प्रयुक्ता ?
दूरेऽपि पार्श्ववासं स्वयमद्य-अनुभवामः ॥
हे ईश ... ...

३

त्वं सर्वजनविधाता परिपालकोऽसि सृष्टेः
न हि बन्धनं जनानां त्वयि मोक्षदातृदृष्टे ।
का दुःखदग्धता स्यात्तव दर्शनैर्हि हृष्टे
स्नेहं परस्परं चेद्वयमत्र वर्धयाम।
हे ईश ... ...

४

न हि हिन्दवो न खृीष्टा न च सिख मुस्लिमाः वा
एतानि नामजातानि तु वैदिकानि नैव ।
शैवैर्न वैष्णवैर्वा न च शाक्तगाणपत्यैः
जैनैर्न बौद्धसङ्घैरपि त्वामनु प्राप्नुयामः ॥
हे ईश ! ... ...

५

सर्वे जनाः समानाः जीवास्तथा च सर्वे
इति वैदिकीयघोषं शृण्वन्तु रे मनुष्याः ?
नहि धर्मजातिमिश्रा द्वेषाग्निरत्र देया
दुःखं विनाश्य लोके ईशं समर्चयामः
हे ईश ? ... ...

(सघोषमंगलगानं शनैः २ समाप्तिमेति सर्वे स्व स्व कर्मकर्तुं यान्ति । सौरभमुनिस्तत्रैवासनमारूढस्तिष्ठति । केचन छात्राः प्रविशन्ति । ते सर्वे क्रमशः मुनेश्चरणयोः प्रणमन्ति । सभ्यभारतीयवेषभूषालङ्कृताः स्वासनेषु मुनेराज्ञया उपविशन्ति ।)

मुनि :— शिष्यवर्याः ? भवद्भिः षट्शास्त्राणि प्रायेणाधीतानि । विविधा :- वैदेशिक्यः- भाषाः पठिताः । प्राचीननवीनविज्ञाना-ध्ययनं कृतम् । १ कम्प्युत्तरज्ञानमपि प्रायेणाधिगतम् । अधीता-श्चान्येऽनेकविषयास्तत्तच्छास्त्रनिष्णातेभ्यो गुरुभ्यः ।

छात्रेष्वेकः- मान्याः ? नात्र सन्देहोऽस्ति यदस्माभिः भवतां कृपया-आशीर्वादेन च सर्वमधीतम् । तथापि आत्मा न तुष्यति ।

मुनि :— पुत्राः ! सन्तोषस्तु स्वयमात्मनि-समुत्पादनीयः । अत एव वेदानामयमुद्घोषश्छात्राणां कृते यत्— "मातृदेवो भव, पितृदेवो भव, आचार्य देवो भव " विचारणीयो भवति । चेत्सत्येन एतद्वेदोपदेशोऽनुतिष्ठितस्यात्तु स्वयमेव परिपूर्णा तुष्टाश्च भविष्यथः ।

कन्याछात्रा:-मान्याः ! अस्माकं कृते भवतां को निर्देशः ? स्त्रीवर्गस्य सन्त्यनेकाः, समस्याः । पुरुषाणां कृते तु राम आदर्शपुरुषो वर्तते । शास्त्राणामप्ययं निर्देशः "रामादिवत् - प्रवर्तितव्य न रावणादिवत्", इति । परन्तु रामस्य पत्नी सीता तु समस्तजीवनं कष्टपूर्णमेव व्यनयत् ।

मुनि :—एतस्य समाधानन्तु वैदिकसाहित्यनिर्देशानुसारं जीवनयापनेनैव भवितुमर्हति । ममाशयोऽयमस्ति यद् वैदिकसन्देशोऽस्ति स्त्रीपुरुषयोः साम्यम् । तत्स्वीकृत्य वर्तमानकाले प्रवर्तितव्यम् ।

अपरा कन्याछात्रा:- तात ? आधुनिकसमाजे नारीणां स्थितिरस्ति चिन्तनीया । प्रथमन्तु तासां शिक्षणेऽनेकबाधाः । विद्यालय महाविद्यालयजीवने तु पुनरपि काठिन्यमायाति । धूर्ताः छात्रास्तत्र पीड़यन्ति । अध्यापकाः प्राध्यापकाश्चापि एवमनुश्रूयते । अस्माकमाश्रमवत् तु सर्वत्र स्थितिर्नास्ति तादृशी यथाऽत्र वयं कुटुम्बभावेन निवसामः ।

मुनि :—(चिन्तां नाटयन्) पुत्र्यः ? अस्माकं शिक्षाव्यवस्थायां सन्ति घोराः— त्रुटयः । तासां संशोधनं नाद्यावधिः जातम् - प्राप्तायामपि दशकचतुष्टयपूर्वं स्वतन्त्रतायाम् । अस्या एव न्यूनता-

१ केन —सुखेन उत्तरयति प्रश्नानिति कम्प्युत्तरः ।

याः संशोधनाय- अस्माभिरत्राश्रमे गुरुकुलोऽयं सञ्चालितोऽस्ति यत्र विविधशास्त्रनिष्णाता आचार्यास्तेषामेव पत्न्यश्चाचार्याण्यः सन्ति । भ्रातृभगिनीभावेन छात्राः पठन्ति । तथापि बालकानां पाठनं पुरुषाध्यापकैः बालिकानाञ्चाध्यापनं स्त्री अध्यापिकाभिः क्रियते । अर्थात् - उभयोः कृते पृथक् २ अध्ययनाध्यापननिवासभोजनादिव्यवस्था विद्यते यस्याः सचालनं कठोर-अनुशासनान्तर्गतमस्ति । पञ्चविंशतिवर्षानन्तरं च आश्रमे छात्राणां निवासो निषिद्धोऽस्ति ।

बालकछात्रः- श्रीमन्तः । भवतामस्मिन् गुरुकुलेऽस्माभिः मातृपितृस्नेहः प्रभूतमात्रायां प्राप्तः । अत्र स्नेहसौजन्यादिकं यदप्यस्माभिः प्राप्तं तन्न कदापि विस्मर्तुं मर्हाः ।

मुनिः- (गद्गदहृदयेन) पुत्राः पुत्र्यश्च एतत्सर्वं भवद्भिः समस्तदेशे प्रसारणीयम् । सौरभाश्रमस्य सौरभेण समस्तदेशः सुरभितः स्यादित्यस्माकं प्रबलेच्छा । गम्यतामिदानीं भवद्भिर्बहु अनुष्ठेयमस्ति । बालकाः बालिकाश्च शनैः २ निर्यान्ति ।

पटाक्षेपः

## द्वितीय दृश्यम्

(आश्रमस्य विशालसभागारः । भारतीयपरम्परानुसारं आगारस्य सज्जा । मञ्चोपरि विराजमानः सौरभमुनिः । समक्षे - उपविष्टाश्च भारतस्य प्रत्येकप्रान्तीयप्रशासनानां मुख्यसचिवाः केन्द्रीयप्रशासनस्य च सचिवाः । मुनिः- मञ्चोपरि कतिपयविशिष्टवानप्रस्थावस्थायां प्रवर्तमानाचार्यैराचार्याभिश्च सह वार्तां कुरुते ।)

एका आचार्या- (उपस्थितसचिवान् — सम्बोधयन्ती) श्रीमन्तः ! भारतस्य तथा च तदन्तर्गतविभिन्नप्रान्तसचिवाः ! आश्रमाध्यक्षैः सौरभमुनिभिरत्र समाहूता - इति भवन्तः सर्वे जानन्ति । भवद्भ्यः सर्वेभ्यः स्वागतं व्याहरन्तीयं प्रार्थयति तत्र भवन्तं सौरभमुनिं भवद्भिः साकं देशोत्थानविषये विचाराणामादानं कर्तुम् ।

सौरभमुनिः- सभ्याः ! देशस्य सचिवाः ? १९४७ खीष्टाब्दे देशोऽयं

स्वतन्त्रो जातः। दशक चतुष्टयादप्यधिकोऽयं कालः। आश्रमे प्रत्यहं देशस्य विभिन्नप्रान्तेभ्यो जनाः अस्माकं पार्श्वे समागच्छन्ति। सर्व एव च प्रतिपादयन्ति यद्देशस्य शासनं दिनानुदिनं निच्चैरपयाति। कोऽपि वर्गः सन्तुष्टो न विद्यते। अशासनसञ्चालका भवन्तो भवन्ति। भवद्भिः- कया पद्धत्या शासनं प्रचाल्यते येन प्रगतिशीलयुगेऽप्यसाववनतिं प्रति याति ?

एकः सचिवः- (सविनयम्) पूज्यवर ? अहमस्मि - भारतस्य शिक्षा सचिवः देशे शिक्षासम्बन्धि सर्वमपि कार्यजातं मया सम्पाद्यते।

मुनि : (साश्चर्यम्) ततोऽपि शिक्षासमस्याऽस्माकं देशे प्रतिदिनं जटिलत्वमेव धारयति। मेकाले शिक्षानीतावामूल परिवर्तनं न जातम्। तत्प्रभाविता एव सन्ति भवन्तः सर्वे भारतसंघ सेवाया जनाः सेवानिबृत्तिकालः प्राप्ताः परन्तु तत्रापि सैव प्राक्तना आंग्लप्रचालिता एव नीतिरनुकृता। भारतस्य स्वपरम्पराधारिता न कापि शिक्षानीतिरद्यावधिनिर्माणमाप। तस्मादेव समाजोऽहर्निशमधोगतिं याति। भारतीयविचाराणां सर्वथा तत्र तत्रोपेक्षा कृताऽभूत् यत्र यत्र आंशिकपरिवर्तनमस्माकं शिक्षानीतौ जातम्। पाठशालाप्रभृति विश्वविद्यालयं यावत् दूषितेयं प्रणाली। अत्र पर्याप्तसंशोधनस्यावश्यकता आसीत्। परन्तु मौलिकविचारं परित्यज्य स्वार्थसाधनाय एव नीतिनिर्माणमद्यतनं दूषणमस्ति।

शिक्षासचिवः- पूज्याः ! नीतिनिर्धारणन्तु मन्त्रिभिः क्रियते। वयं तु तत्परिपालनं कुर्मः, कार्यरूपं च दातुं प्रयासान्। तथापि शिक्षायाः—भूयान् प्रचारः स्वतन्त्रतोपरान्तं जात इति को न स्वीकुर्यात् ?

मुनिः- महोदय ! सत्यमिदं यत् - शिक्षायाः प्रचारः प्रभूतमात्रायां जातः परं तेन समाजे भ्रष्टाचारः, अनाचारः, उत्कोचप्रसारः, चरित्रहीनता, रोगप्रसारः लुण्ठनं बलात्कारः, मातृ-पितृ-गुरूणां तिरस्कारः आलस्यं, प्रमादः, हिंसा, अहो नु खलु

किं किं गणयामि मादकद्रव्यसेवनं तदपि युवकैर्युवतिभिश्च। शिक्षा मानवं सुधारयति न तु पशुत्वं राक्षसत्वं वा प्रापयति। अतस्तादृशी शिक्षा देशनाशाय एव स्यात् या उपरिनिर्दिष्ट-पापान् प्रचारयति। किं वर्तते सत्यमिदं यन्मयोक्तम् ?

शिक्षासचिव:- (सलज्जम्) नात्र लेशमात्रमपि मिथ्या।

मुनि :- तर्हि नेयं शिक्षा। कुशिक्षेयं यस्या प्रचारे यूयं लग्ना:। देश-रक्षायै अस्या: परिवर्तनं नितरामावश्यकम्। भवद्भिस्तु मेकाले सूत्रानुसारिणी शिक्षा एव प्रसारिता। भारतीया शिक्षा तु नष्टप्राया। पारम्परिकसंस्थास्तु प्रायेण नष्टा: याश्च यत्र कुत्रचिद् देशे सन्ति ता अपि अर्थाभावेन, कुव्यवस्थया चावसीदन्ति। तासु अध्यापकानां वेतनं नाममात्रम्। छात्राणां कृते तासु - अद्यापि नि:शुल्कशिक्षाभोजनवसनव्यवस्था च वर्तते लोककृता। परं घोरमन्यायं ताभि: साकं प्रशासनं करोति।

शिक्षा सचिव:- (निरुत्तर: सन् शिरश्चालनेन समर्थयति मुनेर्विचारान्) मान्या: ? अर्थाभाव एवात्र मुख्यकारणम्।

मुनि:- अन्यकार्यकृते तु अर्थाभावो नास्ति केवलं लाभदायक भारतीय-विचारशिक्षादिप्रचाराय एव अर्थाभावो मध्ये समायाति। किमिदं सत्यं नास्ति तदिदं वित्तसचिव: प्रकटयतु।

वित्तसचिव :- (किञ्चित्काठिन्यमनुभवन्) प्रात: स्मरणीय चरणा: ? अद्य देशोऽयं घोरे आर्थिकसङ्कटे निमग्नोऽस्ति। (मध्य एव मुनि:।)

मुनि :- (साक्रोशम्) अर्थाभाव: अर्थाभाव:। कुतोऽयमर्थाभाव:, संघ-लोकसेवायोगसदस्या:, प्रान्तीयजनलोकसेवायोगसदस्या एव प्रायेण देशस्य नीतिनिर्धारणं कुर्वन्ति त एव प्रशासनमिति मन्यते कथ्यते च। तत:- कथं नार्थाभावदूरीकरणोपाया: कृता: ?

वित्त सचिव:- (असमर्थमिवात्मानमनुभवन्) पूज्यचरणा: ! सत्यमिदं परन्तु मन्त्रिणामत्रानावश्यकहस्तक्षेपोऽपि कारणमस्ति।

मुनिः- (समुज्वलमुखः) संघलोकसेवायोगसदस्याः जनलोकसेवायोगसदस्या वा निर्धनजनपणैः देशसेवायै निर्मीयन्ते । भवद्भ्यस्तादृशी । शिक्षा दीयते यया देशस्य प्रान्तानाञ्च प्रशासनं शोभनं भवेत् । परन्तु यथा यथाऽधिकारिणां संख्या देशे वृद्धिं गता तथा तथैव देशस्यावनतिरपि बहुषु क्षेत्रेषु जायमाना दृश्यते ।

वित्तसचिव - (निरुत्तरः सन्) पूज्याः ! मन्त्रिणामत्र अनावश्यक हस्तक्षेपोऽपि मुख्यकारणमिति मया पूर्वमेव निर्दिष्टम् ।

मुनिः - (नेत्रयोः प्रकाशं प्रक्षिपन्) गणतन्त्रमिदम् मन्त्रिणस्तु भविष्यन्ति । तानप्यहं प्रक्ष्यामि । यतोहि नात्र किमपि मदीयं स्वार्थंजातम् । अहन्तु देशस्योन्नतिं द्रष्टुकामोऽस्मि । परन्तु भवद्भिर्या आर्थिकी व्यवस्था क्रियते सा प्रायेण परमुखापेक्षिणी भवति ।

वित्तसचिवः- (अनभिज्ञतां नाटयन्) परमुखापेक्षिणी कथम् ?

मुनिः- परमुखापेक्षिणी, पाश्चात्यदेशानुसारिणी । इति भवद्भिर्ज्ञातव्यम् । अस्माकं देशस्य प्राचीनोऽस्ति इतिहासः । अत्र प्रभूतानि परिवर्तनानि जातानि । अत्रापि महत्तराः अर्थशास्त्रिणो वैज्ञानिकाश्च सञ्जाताः । किं कतिपयानां नामज्ञानमपि विद्यते तेषु ये ऽर्थनीतिमत्रत्यां निर्धारयन्ति । मदीयोऽयं स्पष्टविचारः- यद्गतेषु चत्वारिंशत् वर्षेषु – अर्थोत्पादनाय· अस्माभिः- विशालोद्योगाः देशे संस्थापिताः । देशस्य प्रभूतधनं तत्र व्ययी कृतम् । प्रशासनव्ययो वर्धितः । सामान्यजनाः, विशेषतश्च ग्रामा उपेक्षिता यत्र देशस्य अशीति प्रतिशत जना बसन्ति तेषां शोषणं कृतम् । विशालनगराणामुदयो बिहितः । तेन वातावरणदूषणं जातम् । वातावरणदूषणेन अद्य देशस्य सर्वेऽपि जनाः- अकालमृत्युप्रतीक्षायां सन्ति । लोकानां कृते कार्यं नास्ति । यतोहि एकमेव यन्त्रं सहस्रशः लोकानां– कार्यं करोति । एतत्सर्बं विचारणीयमस्ति । अस्माभिः स्वदेशस्य समस्याः गाम्भीर्येण चिन्तनीयाः समाधानञ्च तासां स्वयं

स्वावश्यकतानुसारं सर्वैर्भवद्भिः कार्यम् । अद्य प्रतीक्षाया आवश्यकता नास्ति नोचेत् वयं सर्वथा पृष्ठगामिनः पुनरपि परतन्त्रा वा भविष्यामः । भवद्भिर्गन्तव्यम् देशे प्रान्तेषु च स्वदेशावश्यकतानुसारं स्वकीयामार्थिकस्थितिं सुधारयितुं स्वबुद्ध्याः प्रयासाः कार्याः । भारतीयेषु बुद्धेः श्रमस्य च न्यूनता नास्ति । स्वार्थं निहत्य देशस्योन्नतिः पुरस्कार्या । इति खलु मदीयं विनम्रनिवेदनम् ।

(प्रणम्य यान्ति)

— —

## तृतीयदृश्यम्

(मुनिः- कानिचित् पुस्तकान्यवलोकयति ।)

(एको ब्रह्मचारी प्रविशति)

ब्रह्मचारी :-जयत्वार्यः ।

मुनिः- (ब्रह्मचारिणमालोकयन्) काथय वटो ? का वार्ता ?

ब्रह्मचारी:- (विनयं नाटयन्) पूज्यचरणानां दर्शनार्थं देशस्य प्रधानामात्यस्तथा च प्रदेशमुख्यमन्त्रिणः समायाताः ।

मुनि :- (औत्सुक्येन) सादरमतिथिकक्षे सर्वानपि दुग्धं पाययित्वाऽनय ।

ब्रह्मचारी:-(हस्तौ संहतौ कृत्वा) तत्सर्वं सम्पादितमाश्रमनियमानुसारम् ।

मुनिः- (मन्दहासेन) तर्हि प्रवेशय किमर्थं विलम्बः ? (ब्रह्मचारी गच्छति समानयति च मन्त्रिप्रवरान्) सर्वेऽपि मन्त्रिणो मुनेश्चरणयोः प्रणमन्ति ब्रह्मचारिनिर्दिष्टासनेषु च क्रमशः समुपविशयन्ति) धूपसुगन्धेन चन्दनागुरु सौरभेण च कक्षः सुवासितोऽस्ति ।)

मुनिः- स्वागतं तत्रभवतां प्रधानामात्यसहितानां सर्वेषाम् । कथ्यतां तावत् अपि राष्ट्रे कुशलमस्ति ?

प्रधानामात्यः- (सविनयम्) प्रातः स्मरणीयचरणाः ?

सर्वं कुशलं नास्ति तथाप्याशीर्वादेन भवतां सर्वं कुशलं भविष्यतीति तदर्थमेवोपस्थिताः वयम् ।

मुनिः- (मन्दस्मितेन) प्रधानामात्यः । अहन्तु साधारणजनोऽस्मि । ममाशीर्वादस्य नास्ति किमपि मूल्यम् । जनानामाशीर्वादोऽस्ति कल्याणकरः ।

प्रधानामात्यः- श्रीमन् ? गतेभ्यः कतिपयवर्षेभ्योऽस्माकं प्रगतिः-रुद्धप्राया वर्तते ।

मुनिः- (मध्य एव) महोदय ! यस्मिन्-देशे जातधर्म--भाषा—भूषाऽधारमाबिष्कृत्य प्रत्यहं वर्गसंघर्षो भवति स देशः कथं निरन्तरं प्रगतिशीलो भवेत् यावदत्र शान्तिरासीत तावत्खलु देशेन परा प्रगति कृता । इदानीं सा नास्ति ततस्मात्प्रगति रवरुद्धा ।

प्रधानामात्यः- (विनयं नाटयन्) सा शान्तिः पुनरपि स्वदेशे स्थापिता भवेत् इत्यस्माकं मम सहयोगिनाञ्चैतेषां भारतस्य विभिन्न-प्रान्तमुख्यमन्त्रिणां प्रयासाः सन्ति परन्तु तथापि साफल्यं न प्राप्यते । (प्रश्नमुद्रायां सर्वे मुनेर्मुखमी क्षमाणा ।)

मुनि :- (किञ्चिद् विचार्य गंभीरेण स्वरेण) सर्वेऽपि विधायकाः यदि चरित्रबलेन न तु धनवलेन विभीषिकावलेन वा निर्वाचनानि युद्धेयुस्तत्र साफल्यञ्च प्राप्य सर्वगुणसम्पन्नजनं स्वनेतारं मन्येरन् साधारणगृहेषु निवसन्तः- निःस्थार्थभावेन शासनं सञ्चालयेयुस्तदैव शान्तिः सुलभा ।

प्रधानामात्यः (सशङ्कम्) अनेकाः सन्ति तादृशा अपि जनाः परन्तु ते स्वल्पाः ।

मुनिः- तत्कालमुत्तरयन्। एकश्चन्द्रः, एकः सूर्य । चरित्रबलेन सर्वं कर्तुं शक्यते महामात्य ?

प्रधानामात्यः- (मध्य एव) तत्खलु सत्यम् । परन्तु गणतन्त्रऽयम् । अत्र मतैर्नेतारो भवन्ति न तु केवलं चरित्रबलेन मतप्राप्तये किं किं न कर्तव्यं भवतीति भवन्तः स्वयं जानन्ति ।

मुनिः—(चिन्तयित्वा) अद्य देशस्य स्थितिस्तादृशी जाता यस्यां सुधाराय कस्यापि प्रबलतम शासकस्यावश्यकता वर्तते । एवं नास्ति यत्सर्वे एव चौराः मिथ्यावादिनः, भ्रष्टचरित्राः वा सन्ति । सेनायां संघसेवासु, नेतृषु रक्षापुरुषाधिकारिषु

न्यायाधीशेषु सन्ति सर्वगुणोपेताः जनाः । अतः कश्चित्प्रशासकश्चेत् दुर्नीतिप्रवाहसंरोधनं कुर्यात्तु कालेन सर्वे तत्पृष्ठगामिनो भविष्यन्ति ।

प्रधानामात्यः- (सोत्सुकः) किमस्माभिरेतत्कर्तुं शक्यते ?

मुनिः- (दृढतया) किं नहि । प्रथमं पक्षपातत्यागो विधेयः । पक्षपातेनापरधर्मजातिवर्गजनास्तिरस्कृता वयमिति -- अनुभवन्ति । सर्वेषां कृते समानो व्यवहारः, समाना नीतिः, समान न्यायव्यवस्था समाननियमाश्च स्युरिति कठोरानुशासनपालनपूर्वकं स्थापनीयं सर्वं समस्त राष्ट्रे ।

मानवधर्मनियमानां परिपालनं सर्वेषां कृते यथावश्यकं स्यात्तथा सामाजिकधारा परिवर्त्तनीया ।

प्रधानामात्यः- वयं प्रयासान् करिष्यामः परन्तु भवतामाशीर्वादं विना न तत्र सफलता भवितुमर्हति ।

मुनिः- सर्वेषां राजनैतिकदलानां केवलंदेशोत्थानमात्रं यावत्कर्तव्य न भवति तावन्नात्र साफल्यं भविष्यति ।

दलगत-व्यक्तिगतस्वार्थहीनाः- भविष्यन्ति यदा राजनेतारस्तदैव राष्ट्रे समृद्धिः सुखं शान्तिः एतत्सर्वं भविष्यति । अस्माकमाशीर्वादोऽस्ति एवंविधसर्वदलसदस्येभ्यो ये निःस्वार्थाः देशकृते समर्पितभावाः स्युरिति ।

प्रधानामात्यः- (सविनयं प्रणमन्) श्रीमन्तः, अनुज्ञेया इदानीं वयम् ।

(मुनेराशीर्वादपूर्वकं पटाक्षेपः ।)



पूर्वतोऽनुवृत्तम्——

# सोलनशतकम्

केशवराम शर्मा, दर्शनाचार्य, एम. ए. एम. फिल.
(प्राप्तस्वर्णपदकद्वय:)

★

ठोडो क्षेत्रे नगरसविधे वार्षिकेषूत्सवेषु
ग्राम्या वीरा धनुरिषुमहायुद्धमध्ये सुदृप्ता: ।
आगर्जन्त: समभिदधति स्वान् कुरून् पाण्डवान् वा
प्राप्तान् द्रष्टृन् पुनरिव महाभारतं भावयन्त: ।९१।

नगर को निकट मध्य भाग में, ठोडो नामक मैदान में जब वार्षिक मेलों का आयोजन होता है तो धनुष बाण का युद्ध करते हुए गर्वीले ग्रामों के वीर गर्जना करते हुए अपने को कौरव अथवा पाण्डववंशीय घोषित करते हैं तो देखने वाले दूसरे महाभारत का आनन्द लेते हैं ।

विक्रेतुं स्वं चतुरवणिजो वस्तुजातं विपण्यां
ग्रामात्प्राप्तान् सरलहृदयान् इङ्गितैराह्वयन्त: ।
आक्रष्टुं तान् अनियमितमामध्यमार्गं प्रसार्य
ऋय्यंगन्तॄन् द्रुतगतिमतो मन्थरत्वं नयन्ति ।९२।

चतुर व्यापारी, ग्राम से आए सरलहृदय लोगों को इशारों से बुला बुला कर अपनी वस्तुओं को वेचने के लिए. उन्हें आकर्षित करने को अपना माल अनियमित प्रकार से मार्ग के बीच तक फैला कर तेज गति वाले लोगों की चाल धीमी कर देते हैं ।

गोधूमान्नं सविधि मधुरं सर्पिषा पाकसिद्धं
पिष्टै: धान्यै: दृषदि कलया साधिता चास्कुली वा ।
भूरिक्लिन्नै: विततवपुषो मण्डकाश्चाणुचूर्णै:
सूपैर्मिश्रा अतिथिरसनाकर्षिणोऽत्र स्वदन्ते ।९३।

घी पर विधिवत पका हुआ गेहूं के दलिए का हलुवा, पीसे चावलों के आटे की कलापूर्ण विधि से पत्थर पर पकाई हुई शष्कुली, पतले आटे को खूब गीला करके बनाए विशालाकार पटांडे (दाल के साथ) — इत्यादि अनेकों स्वादिष्ट पदार्थ यहां अतिथि जनों को खूब आकर्षित करते हैं।

केचिन्मद्यव्यसनपतिता नैकमासश्रमाप्तं
दत्वा शाकादिकमसतय: तद्धनप्राप्तमद्या: ।
प्रत्यायान्त: पथि विलुठिता: संस्खलत्पादगत्या
हासं सृष्ट्वा परजनमनोमोदहेतू भवन्ति ।६४।

कुछ मद्यव्यसन के मारे ग्रामीण, अनेक महीनों के परिश्रम से उगाई, साग सब्जी आदि फसल को बेचकर. उस धन से शराब खरीद व पीकर, घर आते हुए लड़खड़ाती गति से मार्ग में गिरते पड़ते, अपनी हरकतों से हास्य पात्र बन कर अन्य जनों के लिए मनोरञ्जन का कारण बनते हैं ।

यस्मिन् पात्रे हितकरपयो विक्रयार्थं नयन्ति
तस्मिन् मन्दा मतिहरसुराभाजनान्यानयन्ति ।
दिव्यान्नं ये सरल गृहिणी दत्तमत्त्वा व्रजन्ति
प्रत्यावृत्ता मधुमदहता हन्त गेह तुदन्ति ६५।

कुछ लोग, जिस पात्र में अमृतमय दूध बेचने के लिए ले जाते हैं उसी में बुद्धिनाशक सुरापात्रों को लाते हैं। भोली गृहिणी द्वारा प्रेमपूर्वक दिया दिव्य स्वाद भरा अन्न ग्रहण कर जाते हैं और मद्य के नशे में चूर चूर लौट कर घर भर को व्याकुल करते हैं यह खेद है।

यत्रापातुं परिणतफलोद्गीर्णनिष्यन्दधारा:
तत्रैवं चेद् भवति मदिरोपद्रव: पानजन्मा ।
शैलेशस्य प्रकृतिरमला नीरमापूर्य नेत्रे
वक्षस्ताडं सकरुणमहो ! तर्हि रोदेद् विषण्णा ।६६।

जिस पवित्र हिमाचल में पके फलों से निचुड़े रस की धाराएं बहती हैं, वहाँ यदि इस तरह मदिरापानजन्य उपद्रव हो तो, निश्चित है कि इस पर्वतराज की निर्मल प्रकृति वनिता नेत्रों में आंसू भर कर, छाती पीट कर, दुःख और करुणा भरा रुदन करेगी ।

शेषांश: २४ पृष्ठे

# कालिदासस्य काव्येषु निसर्गमानवजीवन-चित्रणे सदोषता

— धीरेन्द्र झा, दरभंगा



निसर्गेण समं मानवजीवनम् यथा कालिदासो ग्रथते— तथा— अन्य: तद्भिन्न: कवि: क्वचिदपि न लक्षितो भवतीति फल्गुकल्पं वच: प्रतिभाति—कालिदासादभिन्नानामपि कवीनां माघ, श्रीहर्ष, बाण, भवभूति प्रभृतीनां निसर्ग सहकारेण मानवजीवन रचनापरतानुभावात्। मालविकाग्निमित्रस्य प्रस्तावनायां पारिपार्श्विक मुखेन—"मा तावत प्रथित—यशसां-भास सौमिल्ल कविपुत्रादीनां प्रबन्धानतिक्रम्य कालिदासस्य क्रियायां कथं बहुमान:"—इत्यामि वदता कालिदासेन भासस्य श्रेष्ठता स्वीकृता। वयं तु ब्रूम:— कालिदास: निसर्गतो विदूर जीवनम् जग्रन्थ तथाहि "दुष्यन्तस्य तपोवनप्रवेशे—कन्याभि: वार्त्तालाप:, पालकस्य पितुरनुपस्थितौ तापस्य्या शकुन्तलया दुष्यन्तस्य प्रेम-विवाह: गर्भिण्या: शकुन्तलाया "अनिर्वर्ण्यं खलु परकलत्रमिति वदता दुष्यन्तेन परित्याग: सर्वमेतत् निसर्गविरुद्धम्। एवमेव पुत्रे-तरुणे सेनापतित्वमुररीकृत्य विदर्भजयेन प्रहृष्टे वृद्धो राजा अग्निमित्रो मालविकामीहते न केवलमीहते अपितु विवाहात् पूर्वमेव तां संगच्छ-तेऽपि। तत्रैव न्यूनतमवस्त्रपरिवृताया: मालविकाया: प्रतिस्पर्द्धा-यामवतारणम् संन्यासिन्यास्तत्र निर्णायकता — इत्यादि वार्ता निसर्ग विरुद्धा:। एवमेवान्येषु परिचारकेषूपस्थितेषु सत्स्वपि दुष्यन्तस्य — मातलिकेलिभीतविदूषकरक्षणक्षणक्षीणधैर्यस्य धनुर्धनुरित्येवं ब्रुवाणस्य-यवनीहस्ताद्धनुष आदानम्— आदि सर्वथा निसर्ग विरुद्धम्। सर्वमेतत् कालिदासेन प्रौढया प्रतिपादितम् — न तत्र मानवजीवनस्य स्थूलमपि संवेदनम् समालक्षितं भवति। किं तस्मिन्नपि समये—

"अष्टवर्षा भवेद् गौरी नववर्षा तु रोहिणी ।
दशवर्षा भवेत् कन्या तत ऊर्ध्वं रजस्वलेति ।"

क्षीण कलेवरो बभूव—यतो निवृत्त रजोधर्मा स्नातां शकुन्तलाम् संगम्य दुष्यन्त तामापन्नसत्त्वां पञ्चषैरेव दिवसैः कारयामास किं शकुन्तला अष्टादश एकोनविंशवर्षदेशीया आसीदित्यादिप्रश्नान् जनयन्ती कालिदास रचना कथं निसर्गतो मानवजीवनम् ग्रथते । एवमेव ब्रह्मचारिणा एकान्ते रमण्या सह वार्तालापनिषेधवाक्ये जागरूके कुमारसंभवे कथं कालिदासो ब्रह्मचारिवटुवेषधारिणः शिवस्य— पार्वत्या वार्त्तालापं बृंहयति-न केवलं बृंहयति - अपितु कामचर्चया दूषित चित्तत्त्वमपि परिचाययति । पित्रोरिव सम्माननीययोः शिव-पार्वत्योः संभोगवर्णनविस्तारेण कालिदासस्तु मानवजीवनसूत्रम् निसर्ग स्थूणातः कियद्दूरं कारयामासेति सुधियो जानन्त्येव ।

कालिदासस्य परवर्तिषु कविषु भवभूतेः उत्तररामचरिते निसर्गः चित्रणं मानवजीवनवर्णनं च साधु संलक्ष्यम् । कालिदासेन प्रकृति चित्रणम् उद्दीपन विभावपरकतया कृतम् । तथाहि

"पर्याप्तपुष्पस्तवकावनम्रा संचारिणी पल्लविनी लतेव ।"

किन्तु भवभूतेः प्रकृतिवर्णनं नास्ति शृङ्गारालिङ्गितम् । तत्र यथार्थतायाः किमपि विचित्ररूपम् संलक्ष्यते । एवं दण्डकारण्यस्य भीषणता उत्तररामचरित नाटकगताऽनुसन्धेया भवति । तथाहि —

"निष्कूजस्तिमिताः क्वचित् क्वचिदपि प्रोच्चण्ड सत्त्वस्वनाः,
स्वेच्छा सुप्तगभीरभोगभुजगश्वासप्रदीप्ताग्नयः ।
सीमानः प्रदरोदरेषु विलसत्स्वल्पाम्भसो या, स्वयं
तृष्यद्भिः प्रतिसूर्यकैरजगरस्वेदद्रवः पीयते ।।"

एवमेव पर्वतगतानां प्रवहन्तीनां निर्झरिणीनां वर्णनं यथार्थं रोचकञ्च वर्णध्वनिचमत्कृतिश्च तत्र संलक्ष्या तथाहि—

"इह समद शकुन्ताक्रान्तवानीरवीरुत्प्रसवसुरभिशीतस्वच्छतोया वहन्ति ।
फलभरपरिणामश्याम जम्बूनिकुञ्जस्खलन मुखर भूरि स्रोतसो-
निर्झरिण्यः ।"

कालिदासेन वासनामिश्रः सांसारिककामभाव एव बाहुल्येन वर्णितः । किन्तु भवभूतिना यौवनगतायाः उद्दामकामवृत्तेः वर्णनम् यदि मालतीमाधवे कृतम् तर्हि विशुद्धस्य प्रेम्णः चित्रणम् उत्तररामचरितेऽपि कृतम् एव । भवभूतिना उज्ज्वलस्य दाम्पत्यप्रेम्णः चित्रण यथा विहितम् तथा संस्कृतसाहित्ये अन्यत्र दुर्दर्शम् ।

अभिज्ञाननाटकगतोपि दुष्यन्तः कदाचित "वयं तत्त्वान्वेषान्मधुकर हतास्त्वं खलु कृती:" इति दिशा आत्महृद्गताम् निगूढामपि कामवृत्ति विवृतां करोति, किन्तु पद-वाक्य-प्रमाणज्ञोऽयं पण्डित कविर्भवभूतिः यथार्थं प्रेम दिव्यवरदानतया संगृह्णात । तथाहि-

"अद्वैतं सुख दुःखयोरनुगुणं सर्वास्ववस्थासु यद्,
विश्रामो हृदयस्य यत्र जरसा यस्मिन्नहार्यो रसः ।
कालेनावरणात्ययात् परिणते यत्स्नेहसारे स्थितं,
भद्रं तस्य सुमानुषस्य कथमप्येकं हि तत्प्राप्यते ।।"

रघुवंश महाकाव्ये कालिदासः-

"ययावनुद्धातसुखेन मार्गं स्वेनैव पूर्णेन मनोरथेन ।"

अत्र रथमारुह्य नृपः दिलीपः पूर्णेन सफलमनोरथेन मार्गं गच्छति । अत्र च राज्ञः मनोरथ पक्षः ध्वन्यते तस्य निसर्गगतिश्चावगम्यते । तत्र कुत्रापि जीवन-यापने अवरोधो न भवति तत्र च मानवजीवनस्य निसर्गत्वं सिद्ध्यति । किन्तु अस्मिन् पक्षे कोऽपि न विश्वसिति यत् बाधां विनैव कुत्रापि कश्चन् प्रवृत्तिः न संभवति । सुखं दुखं च मानवजीवनस्य अभिन्न अङ्गम् । महाकविना कालिदासेन ग्रथितेन एकेन सूक्तेन तस्य अपरा सूक्तिः खण्डिता भवति । तद्यथा उत्तरमेघे—

"कस्यात्यन्तं सुखमुपगतं दुःखमेकान्ततो वा ।
नीचैर्गच्छत्युपरि च दशा चक्रनेमि क्रमेण ।"

उत्तरमेघस्य श्लोकेऽस्मिन् स्वीयां प्रियाम् संबोध्य यक्षः स्वकीयं विचारं प्रकटयति, स खलु आत्मना एव आत्मानं धारयति । अतएव वियोगावस्थायां तस्य कान्ताऽपि बहु भीरुतां न गच्छेत् । रथचक्रांग-

परिपाट्या व्यक्तिः दशा नीचैः उपरि च गच्छत्येव । महाकविना भासेनापि जीवनस्य दुःखम् अनुभूय सम्यगभ्यूधाय-

"कालक्रमेण जगतः परिवर्तमाना चक्रारपंक्तिरिव गच्छति—
भाग्यपंक्तिः"

इतोऽवगम्यते यन्निसर्गेण समम् मानवजीवनं कथमपि यापयितुं न शक्यते ।

काव्ये रमणीयता भवितुमर्हति तत्र च निसर्गत्वं जायते यतः सौन्दर्यंक्षणमपि विनष्टुम् न क्षमते । काव्यं नित्यं नवीनं भवति किन्तु मानवजीवनम् तु सर्वथा ततः दूरापेतं नित्यं च परिवर्तते । अतएव काव्ये निसर्गत्वं भवति न च मानवजीवने । यदि मानवजीवने निसर्गता स्वाभाविकी तर्हि कथं कालिदासेन अभिज्ञानशाकुन्तल नाटके निसर्गेण समं शिवः परिकल्पितः । तद्यथा —

"या सृष्टिः स्रष्टुराद्या वहति विधिहुतं या हविर्या च होत्री,
ये द्वे कालं विधत्तः श्रुति विषयगुणायास्थिताव्याप्य विश्वम् ।
यामाहुः सर्वबीज प्रकृतिरिति यया प्राणिनः प्राणवन्तः
प्रत्यक्षाभिः प्रपन्नस्तनुभिरवतु बस्ताभिरष्टाभिरीशः ।"

किन्तु नैतावता खिन्नेन भाव्यम् अपितु निसर्गेण सम मानवजीवनं निरूपयतां कवीनां परामर्शेन क्लेशः शमनीयः तथाहि प्रकृतिवर्णने प्रकृतिमतिशाय-यन्ती माघ कवेः शैली कालिदासस्य प्रकृतिवर्णनपरककविषु प्राथम्यम् विघटयति -- यथा—कालिदासः रघुवंश महाकाव्ये —

"प्रतीपगामुत्तरतोऽस्य गंगाम् (रघु० १६-३५)"

माघश्च शिशुपालवध महाकाव्ये—

"प्रतीप नाम्नीः कुरुते स्म निम्नगाः (शि० व० १२-५७)"

महाकविकालिदास. रघुवंशे -

"गंगा निषादाहृतनौ विशेषस्ततार सन्धामिव सत्यसन्धः-
(१४-५२)"

माघश्च शिशुपालवध महाकाव्ये-

"तीर्वाजवेनैव नितान्तदुस्तरां नदीं प्रतिज्ञामिव ताँ-
गरीयसीम् (१२-५७)"

कालिदासः रघुवंश महाकाव्ये—

"स्वमेवमूर्त्यन्तरमष्टमूर्त्तिः (१-५७)"

माघश्च शिशुपालवधे महाकाव्ये -

"अष्टमूर्तिधरमूर्तिरष्टमी" (१४-१८)"

कालिदाः रघुवंश महाकाव्ये -

"स्त्रीणां प्रियालोक फलोहि वेशः" (१७-२२)"

माघश्च शिशुपालवध महाकाव्ये—

"कामिनां मण्डनश्रीर्ब्रजति हि सफलत्वंवल्लभालोकनेन।"

कालिदासः रघुवंश महाकाव्ये—

"नमो विश्वसृजे पूर्वं विश्वं तदनु बिभ्रते।

अथ विश्वस्य संहर्त्रे तुभ्यं त्रेधा स्थितात्मने।" (१०-१६)

माघश्च शिशुपालवध महाकाव्ये—

"सत्वमुच्यत इति स्थिति नयन। संहरन हर इतिश्रितस्तम स्त्रैधमिव भजसि त्रिभिर्गणैः (१४ ६१)"

इत्थम् न केवलं निसर्गेण समं मानवजीवनवर्णने माघरेव पुरः पदं वत्ते, अपितु महाकवेर्भारवेः प्रतिभापि तद् विषये चित्तम् हठाद् चमत्करोति, यथा महाकवेर्भारवेः किरातार्जुनीयस्य सप्तमे सर्गे—

"माहेन्द्रं नगमभितः करेणुवर्याः पर्यन्तस्थित जलदा दिवः
पतन्तः।"

किरातार्जुनीयस्य षष्ठ सर्गे—

"सततार सैकतवतीरभितः शफरी परिस्फुरित चारुदृशः।
ललिताः सखीखि बृहज्जघनाः सुर निम्नगामुपयतीः सरितः॥"

किरातार्जुनीयस्य पंचमे सर्ग–

"परिसरविषयेषु लीढमुक्ता" इत्यादिभिः पद्यैरपि प्रकृतेः अनुपमायाः छटायाः वर्णनमुपलभ्यते ।"

कालिदासः रघुवंश महाकाव्ये–

"परस्परेण स्पृहणीय शोभं न चेदिदं द्वन्द्वमयोजयिष्यत् ।
अस्मिन् द्वये रूपविधानयत्नः पत्युः प्रजानां विफलोऽभविष्यत् ॥"

अश्वघोषः सौन्दरनन्द महाकाव्ये–

"तां सुन्दरी चेन्न लभेत नन्दः सा वा निषेवेत न तं नतभ्रूः ।
द्वन्द्वं ध्रुव तद्विकलं न शोभेतान्योऽन्यहीनाविव रात्रिचन्द्रौ ।"

कालिदासः रघुवंश महाकाव्ये–

"वाता ववुः सौख्यकरा प्रसेदुराशा विधूमो हुतभुग्ददीपे ।
जलान्यभूवन् विमलानि तत्रोत्सवेऽन्तरिक्ष प्रससाद सद्यः ॥"

अश्वघोष बुद्धचरित महाकाव्ये–

"वाता ववुः स्पर्श सुख मनोज्ञा दिव्यानि वासाँस्यवयन्तः ।
सूर्यः स एवाभ्यधिकं चकाशे जज्वाल सौम्यार्चिरनीरितोऽग्निः ।"

महाकवेर्भासस्य मानवजीवनेन सह प्रकृति वर्णनम् यथा रुचिकरम् न तथा कालिदासस्य तथाहि–

"खगा वासोपेताः सलिलमवगाढो मुनिजनः,
प्रदीप्तोऽग्निर्भाति प्रविचरति धूमो मुनिवनम् ।
परिभ्रष्टो दूराद्रविरपि च संक्षिप्त किरणो
रथं व्यावृत्यासौ प्रविशति शनैरस्तशिखरम् ।"

कालिदासः कुमारसंभव महाकाव्ये पंचमे सर्गे–

"अतन्द्रिता सा स्वयमेव वृक्षकान्घटस्तनप्रस्रवणैर्व्यवर्धयत
(५-१४)

भासस्य प्रतिमा नाटके—

"योऽस्याः करः श्राम्यति दर्पणेऽपि
स नैति खेदं कलश वहन्त्याः ।
कष्टं वनं स्त्री जन सौकुमार्यं,
समं लताभिः कठिनी करोति ॥ (५-३)

एवम् समस्तेन विचारेण प्रकाप्तेन इदं सर्वथा ध्येयं प्रतिभाति, यत् यदा कृत्याकृत्य - प्रवृत्ति - निवृत्तिपरत्वं काव्यस्य स्यात् तदैव तस्य साधुत्वं निषेवितव्यम् च स्यात्। अतः प्रकृति चित्रणम् मानवजीवनसंबद्धम् असंबद्धम् वा भवतु नाम। किन्तु मानवजीवनम् शास्त्र लोक विगर्हितम् सर्वथैव न चित्रणीयम्। किन्तु कालिदास कृति नायिका इमां सभ्याचार रेखाम् समुल्लंघ्य केनापि समालोचकेन रावणेन परिह्रियमाना कां दशां प्राप्स्यतीति वयम् न विद्मः। इत्यलम् पल्लिवतेन।

— लोकभाषा-प्रचार-समितिः विहारशाखाः
दरभंगा (बिहार)

※※ ※ ※ ※ ※ ※ ※ ※ ※ ※ ※ ※

# पाठकाः प्रार्थ्यन्ते

मान्याः !

नववर्षारम्भो जातः नववर्षशुल्कः प्राप्यः। पत्रप्रेषणेनापि वार्षिकशुल्कप्रेषणार्थं प्रार्थना कृता किन्तु स्वल्पैरेव महानुभावैः शुल्कप्रेषणं कृतम्। अतः सविनयं प्रार्थ्यते यत् शीघ्रमेव शुल्कप्रेषणेन सहायता कार्या।



# दिल्ली संस्कृत अकादम्याः १९९१–९२ वर्षीयाः उपलब्धयः

——— श्री कृष्ण सेमवाल, सचिव



१. सम्मेलनानि

(क) अखिल भारतीय संस्कृत कवि सम्मेलनम् ।

(ख) अखिल भारतीय त्रिदिवसीय-संस्कृतपत्रकार सम्मेलनम् ।

(ग) स्थानीय संस्कृत कविसम्मेलनम् ।

(घ) श्लोक संगीत सम्मेलनम् ।

(ङ) द्विदिवसीय वैदिक सम्मेलनम्

२. संगोष्ठयः

(क) ज्योतिषशास्त्रस्य प्रामाणिकता । (ख) संस्कृत काव्यगोष्ठी ।

(ग) भारतीय सन्दर्भे संस्काराणां महत्वम् ।

(घ) संस्कृतशिक्षकसंगोष्ठी ।

(ङ) संसारीय वैदिकायुर्वेदस्य योगदानम् ।

(च) वेदेषु-इतिहासतत्वानि सन्ति न वा ।

(छ) पण्डितराजजगन्नाथस्य साहित्ये राष्ट्रियभावना ।

(ज) कालिदाससाहित्ये स्त्रीणां महत्वम् ।

(झ) राष्ट्रियैकतायां भारतीयभाषाणां योगदानम् ।

३. परिचर्चा:

(ट) धर्मस्य शाश्वतमूल्यानि राजनीतिश्च । (ठ) संस्कृतस्य पंजाबीभाषाया उपरिप्रभावः (ड) वर्तमानसन्दर्भे बौद्धधर्मस्य प्रासंगिकता (ढ) धर्मस्य वर्तमानयाथार्थ्येन सह कर्म समन्वयः स्यात् ।

४. परिसंवादा:

(त) जैन संस्कृतवाङ्मये स्त्रीपुरुषयोः समानता (द) ज्योतिषविज्ञानस्याधारे सूर्यचन्द्रग्रहणविवेचनम् ।

५. सम्माना:

(प) संस्कृतसेवासम्मानः । (फ) विद्यालयीयसंस्कृतसेवासम्मानः (ब) अकादमी सहयोगिसम्मानः ।

६. प्रतियोगिता:

(य) संस्कृत श्लोक संगीत प्रतियोगिते १. विद्यालयस्तरीया । २. महाविद्यालयस्तरीया ।

(र) श्लोकोच्चारणप्रतियोगिता । १. विद्यालयस्तरीया ।

(ल) संस्कृत नाट्य प्रतियोगिते । १. विद्यालयस्तरीया । २. महाविद्यालयस्तरीया ।

(व) संस्कृत भाषण प्रतियोगिताः । १. संस्कृत विद्यालयस्तरीया, २. सामान्यविद्यालयस्तरीया । ३. महाविद्यालयस्तरीया च, ४. नवोदितसंस्कृतकविप्रतियोगिता ।

(ष) श्लोकान्त्याक्षरी प्रतियोगिते । १. संस्कृतविद्यालयस्तरीया २. संस्कृत महाविद्यालयस्तरीया ।

(स) संस्कृतश्लोकसंगीतसन्ध्याप्रतियोगिते । १. कनिष्ठ वर्गस्तरीया । २. वरिष्ठवर्गस्तरीया ।

७. पुरस्कारः

(ह) संस्कृत शिक्षक पुरस्कारः (क्ष) अखिलभारतीय-मौलिक संस्कृत साहित्य रचना पुरस्कारः

(त्र) संस्कृत प्रतिभापुरस्कारः ।

८. अध्ययनाध्यापनकार्यक्रमे

(क) संस्कृताध्ययनप्रशिक्षणशिविरम् ।

(ख) संस्कृत-अध्ययनकेन्द्रयोजनाः ।

९. प्रकाशनसहयोगः

पाण्डुलिपिप्रकाशनसहयोगः

१०. राष्ट्रस्तरीयकार्यक्रमे संस्कृत-अकादमो योगदानम्

११. प्रकाशनादि

(क) संस्कृत मंजरी प्रकाशनम् ।

(ख) महाबुद्धवत्थु महाग्रन्थस्य प्रथमद्वितीयभागयोः प्रकाशनम् ।

(ग) अकादमी विवरणिका प्रकाशनम् ।

१२. टेलीफिल्म योजना

१३. संस्कृत स्तोत्र टेप योजनायाम्

१. वर्णात्मक भगवती सुप्रभातम् । २. हनुमत्सुप्रभातम् ।

१४. समारोहाः

(क) प्रतियोगिता पुरस्कार वितरण समारोहः ।

(ख) महाबुद्धवत्थु प्रथम भाग लोकार्पणसमारोहः ।

(ग) भीमशतकम् काव्य लोकार्पण समारोहः ।

(घ) संस्कृत साहित्य सेवासम्मान समारोहः १९९०-९१ वर्षीय

(ङ) अकादमी सहयोगेन प्रकाशितानां संस्कृत ग्रन्थानां लोकार्पण समारोहः ।

(च) संस्कृत मंजरी पत्रिका लोकार्पण समारोहः ।

(छ) संस्कृतदिवससमारोहः ।

१५. संस्कृत पत्र–पत्रिका विज्ञापनसहयोगः

अकादमी पक्षतः समायोजितानां समेषां कार्यक्रमाणाँ संस्कृतानुरागिभिश्च महती प्रशंसा कृता । कार्यक्रमेषु समागतः जनसम्मर्दस्तेषाँ समुत्साहो कादम्यै पाथेयस्वरूपो विद्यते । येनाकादम्या सर्वे कर्मचारिणः द्विगुणेन समुत्साहेन निष्ठया च कार्यसम्पादने प्रवृताः भवन्ति, अकादम्याः विकासाय सम्वर्धनाय च अस्याः समितिरपि प्रशस्या । यस्याः मार्गदर्शनमस्मान् कृतार्थीं करोति ।



(१२ पृष्ठस्य शेषांश:)

हासैर्यत्र प्रसरति पुरा सौम्यसीमन्तिनीनां
मोदस्तत्र भ्रमति मदिरामत्तसम्मर्दं खेद: ।
येषु प्रीतिर्लसति मनस: हृर्षदेषूत्सवेषु
तत्रासभ्यो रुजति जनतां ताण्डवो मद्यपानाम् ६७।

जिन प्रसन्नतापूर्ण उत्सवों में पहले कोमल रमणियों के उन्मुक्त हास उल्लासों से आनन्द बरसता था और मन की प्रीति झूम जाती थी, वहाँ शराब से धुत्त जुंडली से उत्पन्न खेद तथा मद्यपों का असभ्य ताण्डव जनता को पीड़ित कर देता है।

एकं दोषं त्यजति यदिमं मद्यजन्यं समाज:
तत्सर्वस्यां भुवि न समता सोलनस्योपतिष्ठेत्
निर्व्यालं चेन्मलयगहनं जायते चन्दनाढ्यं
स्वर्गस्थानश्रियमनुहरेत् नन्दनानन्दगन्धि ।६८।

यदि यहां का समाज यह मद्य का दोष छोड़ दे तो सोलन की समता किसी अन्य स्थान से न होगी। निश्चय ही, यदि चन्दन से समृद्ध मलय वन बिषैले सर्पों से रहित हो जाए तो आनन्द प्रद सुगन्ध से पूर्ण चन्दन वन वाले स्वर्ग को भी अपनी महिमा से लज्जित कर दे।

नैकस्थाने रुचिकर निवासाय दूरागतानां
वासा: सन्ति प्रचुरसुविधा निर्मिता सौख्यहेतो: ।
प्रत्यावृत्त: शिशिर समये ग्रीष्मकालो हि यत्र
शैत्यानन्द स्तपनसमये प्राप्यते यात्रिलोकै: ।६९

अनेक स्थानों पर दूर से आये पर्यटकों के सुख के लिए रुचिकर निवासार्थ अनेक सुविधापूर्ण विश्राम भवन बने हैं। जहां पर लोग शिशिर में ग्रीष्मकाल का तथा ग्रीष्म में शीतकाल का आनन्द लौट आया समझते हैं।

मार्गप्रान्ते भ्रमणरसिकप्रीतिदा भोज्यशाला:
पेय प्राप्ति: प्रतिपथमथास्वादलाभ: फलानाम् ।
विश्रामार्थं ललितभवनावासचारुप्रबन्ध:
सर्वेऽपीमेऽतिथिहितविधिं व्यक्तुमीशा हिमाद्रे: ।७०।

हर मार्ग के किनारे भ्रमण रसिकों के प्रीतिदायक भोजनालय, पीने के पदार्थ, तथा फलों के रसों की उपलब्धि, विश्राम के लिए सुन्दर भवनों के आवास का सुप्रबन्ध—ये सभी हिमाचल के अतिथिसेवाभाव को व्यक्त करते हैं।



संस्कृत विभागाध्यक्ष, राजकीय महाविद्यालय,
सोलन (हि. प्र.)

सम्पादकीयम्:

मान्याः ! फर्वरी अंकः सेवायां उपायनीं क्रियते । बहुबारमपि प्रार्थितेषु सदस्येषु न शुल्क प्राप्तिः । अतः पुनरपि शुल्क प्रेषणाय निवेद्यते येन प्रतिमासं पत्रं भवतां सेवायां नवीनविषयसहितमागच्छेत् । आशासे कृपालवः पाठकाः सहयोगदानपुरस्सरं कृतार्थयिष्यन्ति । —— केशव शर्मा

## फार्म ४


१. प्रकाशन स्थान ... भारती विहार मशोबरा।
२. प्रकाशन अवधि ... मासिक
३. मुद्रक का नाम ... केशव शर्मा
(क्या भारत का नागरिक है ?) ... भारतीय
(यदि विदेशी है तो मूल देश) ... पूर्ववत्
४. प्रकाशक का नाम ... केशव शर्मा
(क्या भारत का नागरिक है ?) ... भारतीय
पता ... ... पूर्ववत्
५. सम्पादक का नाम ... केशव शर्मा
(क्या भारत का नागरिक है ?) ... भारतीय
(यदि विदेशी है तो मूल देश) ... भारतीय
पता ... पूर्ववत्
६. उन व्यक्तियों के नाम व पते जो समाचार--पत्र के स्वामी हों तथा जो समस्त पूंजी के एक प्रतिशत से अधिक के साझेदार या ... आचार्य रत्नकुमारी शर्मा
हिस्सेदार हों ... केशव शर्मा

मैं, केशव शर्मा एतद् द्वारा घोषित करता हूं कि मेरी अधिकतम जानकारी एवं विश्वास के अनुसार ऊपर दिए गए विवरण सही है।

प्रकाशक के हस्ताक्षर

दिनांक १५-२-९३

केशव शर्मा

मुद्रक प्रकाशक :—
भारतीमुद्रणालय भारती विहार, मशोबरा - शिमला १७१००७ (हि. प्र.)
स्वामी:- श्रीमती आचार्य रत्नकुमारी शर्मा,

दूरभाष : [78459 8-200]

फरवरी १९९३ फाल्गुन २०४९ — वर्षम् – ३७ अङ्कः ५
वार्षिक मूल्यम् ५० रु०

R. N. 6384/57 ल-33/एस. एम./10/91

# संस्थान के प्रकाशन

१. फलादेश कल्पतरुः (मूल संस्कृत में)
हिन्दी अंग्रेजी टीका सहित ४० वर्ष के अनुसन्धान और अनुभव पर आधारित जातकफल कहने का अनुपम ग्रन्थ ... मू. ७०-००

२. संस्कृत कोशवाङ्मयम् (संस्कृत में)
संस्कृतकोशसाहित्यपर अनुसन्धानपूर्ण विवेचन ... मू. १७५-००

३. झञ्झा (संस्कृत में)
शेक्सपीयर के द टैम्पेस्ट नाटक का सचित्र रूपान्तर ... मू. ५०-००

४. हिमाचलप्रदशे संस्कृतस्य प्रसारो विकासश्च (संस्कृत में)
हिमाचल में संस्कृत के प्रसार विकास की विस्तृत कहानी ... मू. ५०-००

५. वैजयन्ती (हिन्दी काव्य)
नवीन प्राचीन विचारधाराओं का गीतिमय समन्वय ... मू. १५-००

६. सूनृता (संस्कृत काव्य)
आधुनिक गीतों में गुम्फित अनुपम उपहार ... मू. २५-००

७. शक्तिसौरभ (हिन्दी में)
संस्कृत लेखिकाओं का इतिहास ... ... मू. १५-००

८. विचारामृत (हिन्दी में)
आचार्य जी के विभिन्न विषयों पर जीवनोपयोगी लेख दो भाग मू. १५-००

९. पथ्यापथ्यविनिर्णय
सं. हि. टीका सहित आयुर्वेद का दुर्लभ ग्रन्थ ... मू. २०-००
(डाकव्यय सर्वत्र पृथक्)

१०. सरिता
(अभिनव सं. कथानिकाएं) ... मू. ५०-००

११. हिमानी
(संस्कृत काव्य हिन्दी अनुवाद सहित) — मू. १००-००

सम्पर्क सूत्र :—

सचिव, संस्कृत शोध संस्थान
भारती विहार मशोबरा
शिमला १७१००७ (हि. प्र.)

# दिव्यज्योतिः

संस्कृतस्य सचित्रमासिकम्



## ज्वालादेवी मन्दिरम्



ज्वाला या विश्वविख्याता
ज्वलदग्निशिखा इव ।
सा मानवानां कल्याणम्
कुर्याज्ज्वालामुखी सदा ॥

शिमला अप्रैल, १९९३

वर्षम् ३७ अङ्कः

# दिव्यज्योतिः

संस्थापितम् १९५६
प्रधानसम्पादकः—
आचार्य केशव शर्मा



संस्थापकाः तथा
आद्यसम्पादकाः
आचार्यश्रीदिवाकरदत्त
शर्माणः,
राष्ट्रपतिसम्मानिताः

(पत्रमिदं हि० क० सं० भा० अकादमी प्रदत्तानुदानसाहाय्यम् । पत्रिकायां मुद्रणदोषाणां सम्पादकीयनीति-विषये च अकादमीदायित्वं नास्ति)
हिमाचल प्रदेश—पंजाब-हरियाणा-जम्मूकश्मीर-मध्य प्रदेश-राजस्थान—महाराष्ट्र उत्तरप्रदेश शासन-स्वीकृत केन्द्रशासनपुरस्कृतं सचित्रं संस्कृतमासिकम् ।


## पत्रस्य उद्देश्यानि तथा नियमाः

सरलसरससुबोध-साधनैः सर्वस्मिन् संसारे संस्कृतस्य प्रसारः साहित्यान्तर्गतानां सकलकलानां समन्वेषणं, संसारस्य हितसम्पादनम्, लौकिक - पारलौकिकस्वातन्त्र्यस्य प्राप्तिः ।

"दिव्यज्योतिः" प्रतिमासं पञ्चदशतारिकायाम् (आङ्गलमानेन) प्रकाशितं भवति ।

पत्रस्य वार्षिकमूल्यं ५० रु० अर्धवार्षिकं २५ रु० एकस्याङ्कस्य च रु० ४/५ भवति ।

वर्षारम्भः अक्तूबरमासतः भवति ग्राहकः कस्मादपि मासाद् भवितुं शक्नोति । ग्राहकैः, "सम्पादक, दिव्यज्योतिः, भारती विहार, मशोवरा, शिमला-१७१" इति संकेते धनादेशेन वा. शु. प्रेषणीयम् ।

## विषयानुक्रमः

# ‘स ह पा ठि नी’

प्रमोद भारतीयः



शाने पञ्जाव-एक्सप्रेसस्य प्रस्थाने निमेषपञ्चदशं केवलमवशिष्ट-मासीत्। इदानीम्पर्यन्तमपि केतकी नोपागता न जाने किं जातम्। यात्रायाः कार्यक्रमो निरस्त वा... ... काऽपि दुर्घटना जाता ... ... परं रेलयानस्यारक्षणस्य किं भविष्यति ... एतदेव विचारश्रृंखलायामह-मतीतस्य घटनासु विलुप्तः शनैः शनैः।

केतकी मम सहपाठिनी। वर्षद्वयं पूर्वं सा स्वनगरामृतसरतः अत्र दिल्लीं परास्नातकस्य कृते आगताऽऽसीत् अहमपि वाराणस्यां स्नातकस्य परीक्षामुत्तीर्य दिल्लीविश्वविद्यालयउच्चशिक्षायै समागतः। विधिवशादुभयोः प्रवेश एकस्यामेव कक्षायां सञ्जातः। ममाभिधानं कक्षायाः सर्वेषु वहुचर्चितेषु ख्यातिलब्धेषु च छात्रेषु स्वीकृतमासीत्। केतक्यपि समस्तकक्षायां बहुचपला-चञ्चला कुशला चासीत्। मम प्रमोदप्रियता अपि सर्वत्र चर्चिता।

एकदा कक्षायां केतकी मम पार्श्वे उपविष्टाऽऽसीत्। मया जिज्ञासा प्रकाशिता, “देवि! कुतः भवती समागताऽस्ति?”

“अहं तु अमृतसरतः आगताऽस्मि।” सा वहुविनीतस्वरेणोक्तवती।

"भवान् ?" सा प्रश्नं दत्तवती ।

"अहं तु वाराणसीतः समागतः ।"

"किमर्थम्ः तत्र परास्नातकस्याध्यापनस्य काऽपि व्यवस्था नास्ति ?"

"अस्ति तु, परं...... ।"

"परं किम् ?" किंचित्तया विस्मयः प्रकाशितः ।

"भवती सदृशी चंचला कन्या तत्र नास्ति ।" मया विनोदः कृतः। साऽपि मम टिप्पण्योपरि बहुप्रफुल्लिता जाता । तस्या मुखमण्डले स्मितमागतम् ।

'भवान् तु वहुहास्यप्रियः, भवता सह तु बहुप्रमोदं प्राप्स्यामि :"

तस्मादेव दिनादावयो मैत्री प्रगाढ़तः प्रगाढतरा जाता । नित्यमावयो एक एव कार्यक्रमः । प्रातः क्वचित् कक्षानपि विहाय, विश्वविद्यालयपरिसरे इतस्ततः भ्रमणम् । विभिन्नेषु ज्वलन्तविषयेषु विचार विनिमय ,...... । विश्वविद्यालयस्थोद्याने वार्तालापस्य क्रम एकदा --

"केतकि ! अहं सर्वदा त्वां नीत्वा इतस्ततः भ्रमामि तवाध्ययने विघ्नञ्च करोमि. किं ममोपरि क्रोधो न भवति ?"

"नैव प्रदीप ! त्वमेव केवलं मम सखा अपराः सर्वे खला अत्र ।"

अथ बहुदिनानि व्यतीतानि । परीक्षाऽपि आगता । आवां शोभनैः सम्मानजनकैश्चाङ्कैः पूर्वार्द्धपरीक्षामुत्तीर्योत्तरार्द्धकक्षायां प्रोन्नतौ । साऽत्र दिल्यामेकस्य परिजनस्य गृहे निवसति स्म तत्रैकस्मिन् विवाहसमारोहे तस्याः पितरौ, भ्राता, भगिनी, भगिनीपतिः, भगिनीसुताश्चागताः । सर्वेषां सर्वासाञ्च सम्मुखे केतक्या मम परिचयः प्रकटितः । सर्वे मां मिलित्वा बहुप्रमुदिताः जाताः ।

एकदा विभागतः वनभोजस्यैकस्य कार्यक्रमे वयं सर्वे विद्यार्थिन बसयानेन सूरजकुण्डमिति पर्यटनस्थलं गतवन्तः । तत्रापि अहं दिवसपर्यन्तं केतक्या एव सह विचरणं कृतवान् । सर्वे अपराः छात्रा आवयो मैत्री विषयेऽवगताः तदर्थं तैः कोऽपि विघ्नः नैव कृतः । उद्याने तत्रैको लतामण्डपः....

"किं पश्यसि ?"

"पश्यामि एतद् जपा पुष्पम् ।" केतकी उक्तवती ।

"परमेतद् जपापुष्पे केतकी सदृशः सौरभः नास्ति ।"

"कथम् ?"

"अयं तु अनुभवस्य विषयः ।"

लज्जायाँ तस्याः शिर अवनतः । लतामण्डपतः निर्गत्य किञ्चिद् नौकाटनं कृत्वा सरोवरस्य तटे उभौ उपविष्टौः । सरोवरे हँस-हँसिनीनां क्रीडाऽपि बहुदर्शनीया ......

"केतकि ! एकदा ईदृश एव हंस एकः त्वामितो नेष्यति बहुस्नेहं दास्यति च ।"

"प्रदीप ! अहमीदृशी सौभाग्यशालिनी नास्मि । मां कोऽपि प्रेम्णा न द्रक्ष्यति । न मया सह कोऽपि परिणयं करिष्यति ।" साऽकस्माद् किञ्चिद् गंभीरा जाता ।

"सखि ! त्वं तु कुशला, चपला सर्वेषु दक्षा । त्वया सह परिणयं कृत्वा कोऽपि मनुष्य आत्मानं भाग्यशालिनं विचारयिष्यति ।"

वस्तुतः तस्या एकस्मिन् नेत्रे सम्यक् प्रकाशो नासीत् । एतदर्थं सा बहुदुःखिता । परन्तु सा बहुगुणवती । तस्या गुणस्यैव प्रकाशेनाहमाप्लावितः । तस्मिन्नेव दिने मया निर्णयः कृतः यदहं केतकीमेव स्वगेहिनीं कारयिष्यामि न कामपि अन्याम् ।

अन्तिमायां परीक्षायां केवलं मासद्वयमवशिष्टमासीत् । आवां प्रतिदिनं पुस्तकालये नववादने आगच्छाव स्वः । एकस्मिन् दिने आगमने मया किञ्चिद् विलंबो कृतः । केतकी आगत्य घंटिकैकां यावत् मम प्रतीक्षां कृतवती । ममागमनोपरि अपि सा मौनं धारितवती ।

"किं जातम् ? मौनं किमर्थम् ?" मया पृष्टम् ।

"–––" पुनर्मौनम् ।

"अन्ततः कोपस्य किमपि कारणं तु भविष्यति ?"

"जानासि त्वम्, अहं घंटात अत्र तव प्रतीक्षायां विक्षिप्ता इव इतस्ततः भ्रमामि । अस्ति तुभ्यं काऽपि चिन्ता......" केतकी एकस्मिन्नेव श्वासे सर्वमुद्गलितवती ।

"क्षम्यतां देवि ! वस्तुतः वस्त्रप्रक्षालने विलंबः संजातः । इदानीमवकाशो जातः, आगच्छाम्येव ।" मया प्रक्षालनं प्रस्तुतम् ।

ततः उपाहारगृहं गत्वा हस्तमुखप्रक्षालनोपरान्तं बर्गरंकाफीञ्च गृहीत्वा पुनर्वार्तालाप आरब्धः ।

"केतकी ! किञ्चित् कथनीयमस्ति । "रात्रौ मया तव विषये वहुविचारः कृतः ।"

'किं कथनीयम् ? को विचारः ?" सा जिज्ञासयोक्तवती ।

"स्मरसि, एकदा त्वया कथितमासीत् यद् त्वमेतावद् भाग्यशालिनी नासीः, कोऽपि त्वां प्रेम्णा न द्रक्ष्यति परिणयञ्च न करिष्यति ।"

"सर्वमसत्यम्" मया प्रोक्तम् "त्वं बहुभाग्यशालिनी, त्वामेको युवको बहुप्रेम्णा पश्यति, त्वया सह विवाहोत्सुकश्च ।"

"को भाग्यहीनः सः ?"

"सः लब्धभाग्यः तव सम्मुखैव वर्तते ।"

"प्रदीप...... ! कथयसि ? सम्यग् विचारः तु कृतः ? जानासि मम नेत्रम्......"

"सर्वं जानामि ।" मया दृढनिश्चयः प्रकाशितः ।

एतच्छ्रुत्वा तस्या नेत्राभ्यामश्रुधारा प्रवाहिता । एषाश्रुधारा प्रमोदस्याश्रुधाराऽऽसीत् । सा कदाचित् स्वप्नेऽपि ईदृशीमाशां न कृतवती यदेकदा प्रदीपः ईदृशं प्रस्तावमानयिष्यति । स्वहस्तेनाहमश्रुमार्जनं कृतवान् ।

अस्माकं परीक्षा समाप्ता । ह्यः अन्तिमपत्रमासीत् चाद्य सा स्वगृहं अमृतसरनगरं प्रतिगच्छति । मां विहाय......न जाने.......

"प्रदीप ! कस्मिन् विचारे विलुप्त आसीः ?" अकस्मात् केतकी पार्श्वंत आगत्य मां स्वप्नलोकतः भूलोके आनीतवती ।

"तव प्रतीक्षायामेवाऽत्रासमुपविष्टः "किमर्थं विलंवो जातः ?"

"केतकि । पुनः कदाऽऽगमिष्यसि ?"

"पुनरागमनस्य तु न दृश्यते किमपि प्रयोजनम् ।"

"तर्हि अहं कथं जीविष्यामि ?"

"कस्मादधिकारादीदृशं वदसि ?"

"अन्ततः त्वं मम सहपाठिनी, त्वया सह ....."

"सहपाठिनी केवलं सहपाठिनी भवति, सहजीविनी न भवति ।" सा नितरां कठोरस्वरेण स्वाशयं प्रकटितवती । अहं तु तस्याः पाठनस्य जीवनस्य च नूतनां व्याख्यां श्रुत्वाऽऽकाशतो भूमौ पतितः । एवं मां ममाभिलाषञ्च खण्डीकृत्य तस्याः रेलयानं प्लेटफार्मतः प्रस्थितम् ।

— डी—१२०, रीड्स लाइन
दिल्ली विश्वविद्यालय, दिल्ली—७

---




# ए का द श

डा. प्रकाश पाँडे



१

महापुरुषा यदा म्रियन्ते
तदा
स्थलशः स्थशः शतशः सङ्गमर्मराश्मानः
जाग्रति
रथ्यायोगचत्वर शिल्पे
तान्सम्प्रविश्वय्य
विनिघ्नन्ति भूयोभूयः
पुनरप्येकवारम्—... कश्चिन्नित्यायैव
अत एव—
महापुरुषाणां विद्यते जीवनावसानम्
द्विवारमेव (नैकवारम्)
एकदाऽरिहस्तेन,
तदनन्तरञ्च भक्तेभ्यः,
इदं सङ्गमर्मस्मरणं नापेक्षसे त्वम्,
इयं मेऽस्मिञ्छुभदिवसेऽन्तरात्मनि,

२

## प्रार्थना

अद्याऽपि
नीलश्यामलजम्बूरागमयतटिन्याः
आम्रवनच्छाया
प्रथमव मीलनम्
अकाण्ड एव
मीलन दूरस्थयया
गर्भचीनांशुकक्षणानाम्
सौदामिनीबाणानाम्
आदानं च, प्रदानञ्च

३

## सूर्यं पुत्रः

जनकहीनेषु
सकलेषामप्यनौरसापत्येषु
अहमस्मि सर्वातिशायित्वेन तिष्ठन्
तरणिसूनुः,
सूर्यश्च पृथिवी चेत्यनयोः
केनाऽप्यज्ञातसंकेतेनैव
सम्यगाकृतिमान्,
आम्—स्याद्वाऽसीन्मे जन्म
कस्यचन पुरुषस्य वीर्येण
किन्तु गर्भाशयकृषिमनि
यल्लज्जास्पदीभूय सुपतितम्
तदस्तित्वम्
लक्षदलैर्जातमाकृतिमत
जातमाभामयमपि च सुन्दरम्
तत्तु जातमेव युष्मद्व्यवहरणविपक्षे तिष्ठतः
तरणिराजस्याऽशीर्वचसामेव सामर्थ्येन
अथ च मातुर्धरित्र्याः स्नेहकारणादेव
अत एव
तानेव नियमान्विसर्गान्सम्मानयाम्यहम्
ये समुद्गताः

दिव्यज्योतिः, अप्रैल, १९६३

न जनेभ्यो न वा जनग्रामेभ्यः
किन्तु भास्वदालोकत एव
अथ च सरस-रसाया एव मातृस्नेहे,
आम्, तानेव मानयाम्यहम्

४

## समन्वेषः

सृष्टशक्त्या अस्याः
अस्मिन्निरन्तरभाण्डारे
अहमासमन्विषन्
तव रत्नखचितराजकिरीटम्
सर्वेषामेव चराचरसमुन्मेषाणाम्
विधास्यन्ते विनिमयनम्;
मयाऽसीस्त्वमवलोकितः
अथ चाऽनावभालितोऽपि;
यदा विलोकित स्तदा
अहमासमेकः संन्यासी
विश्वव्यवहारेभ्यः
सम्प्रमोषित एव,
अथ च यदा नासीऽस्त्वमवलोकितः
तदाऽसमहं कश्चित्कठोरः
सकबंधूसरोपरयेव खड्गाहृतिं वितन्वन्
कश्चिद् हननकारी राजपुरुषः
स्वस्यैव कवित्वस्य

५

## यमकावर्षणम्

आतपस्नातेयं विषमोपलग्रामततिः
न स्फोटयित्वाऽपि स्फुटति
स्तनलग्नमर्भकम्.
अविश्लिष्टमेव तिष्ठति
कराङ्गुल्याः विनिर्गलद्रुधिरम्
नावसानमायाति

स्त्री स्फोटयन्त्येव तिष्ठति
स्त्री स्फुट्यमानैव तिष्ठति

६

## स एव जानातु

त्वष्ट्रा
कर्त्तितो विवस्वान्
संज्ञायाः सान्त्वनकृते
स्वीय-दारुकार—चक्रोपरि
एवमेव कर्त्तयन्नास्तेऽयं ललाटं तपः
कालस्य विषमाग्रच्छुरिकोपरि
अथ च निरस्य तिष्ठति
मम विगणिताञ्छकलान्
सहस्राधिकस्थलोपरि,
कोट्यतीतक्षणानामुपरि
क्षणपत्रैः कर्त्तितोऽहम्
नैकैः स्थलैर्विनिमीलितोऽहम्
सख्यातीतघटनाभिस्त्रोटितोऽहम्
कतिमात्रमेवास्म्युर्वरितः
भास्वानेव विजानातु !

७

## शब्दः

कोशगतः एक एव शब्दः
'विषण्णम्'
किन्तु न कदाऽपि
मया समुपयोगितः
एतर्हि सः कोशात्
समवतीर्णः,
अकाण्ड एव मम सदने;
श्वेतकबुंशास्थिपञ्जरे

कृष्णतमाऽवरणेन
अङ्गानि समावृत्य
श्लथमन्थरं पदानि समर्प्य
विनिः शब्दतया
प्रसरति सर्वतः
सर्वव्यापी
यथा द्विधैव भिन्नः

८

## विद्रूरम्

मन्ये,
तवेदमपारं दुःखम्
मम कायपाशे
घनीकर्तव्यम्
ममोरसि
विनिमीलितव्यम्
किन्तु
मम बाहु पाशेभ्यस्—
त्वमसि विदूरम्
सहस्र—शपथैः

६

## गृध्राः

वियत्
आरक्त—
रुधिरप्लुतमांसशकलैः
खचितमिव—
अथ च
भुवि
तन्नभोऽभिवीक्षमाणाः
एकयैवानिमेषदृशा

गृध्राः—
विनिश्चलाः
असंख्याताः
क्षितिजादकस्मात्
अन्यत्क्षितिजपर्यन्तम्

१०

चार्वाकः

यदहं भावयामि
तदेव सत्यं नान्यत्
यन्मां सुखयति
तदेवेषद्वरमेव नान्यद्,
इति मे विनिवेदनम्
'अहम्' एव सार्वभौममिति मन्यमानम्
अहमपि स्वीकरोमि
किन्तु लक्षलक्षैः सम्बन्धैर्यदा
मनुजस्थो 'अहम्' यदा
दशसु दिक्षु विस्तारयति स्वात्मानम्
तदा
स्वीयरथ्या अपि परिवर्तन्ते.
यतो 'अहम्' परिवर्तयति स्वात्मानम्
'वयम्' रूपेण

११

दृष्टिः

मार्क्स— रसेल सदृशाः
सर्वेऽपि निरीश्वरवादिनः
अवसीयन्ते सृष्टिमूलस्रोतस्सविधे स्थितिमतः

नयस्य निकटे,

नाऽस्त्युदयः, न वाऽप्यवसानम्
न रूपम्, न वाऽपि रागः,
न पार्श्वेऽस्य तीरस्य, न वाऽपि पर तरम्
एवंविध—वर्तमान—पार्थिव—नय-सविधे
सविधे किलैकस्य स्वयंम्भुवोऽस्तित्वस्य निःसंज्ञस्थ
तर्कस्याऽस्मदीयस्याभिमतमिदम्
किन्तु तथाऽपि मन्ये
यदेभिर्मिरीश्वरतावादिभिः
विभावरी—उत्तरयामेषु
न संदृष्टं कदाचनाऽपि
खचितं नक्षत्रैरुडुगणैश्च
अपारधूसरसमाप्लावितम्—समनूद्य
नभो मम दृशा,

संकेतः—

'अहल्या'
दत्तमन्दिर सविधे
सामलबाग
वर्धारोड नागपुरम्



——

# रामचरितमानसे साम्प्रादायिकसद्भावना

— डा० उपेन्द्र झा०



"नानापुराणनिगमागमसम्मतं यद्,
रामायणे निगदितं क्वचिदन्यतोऽपि ॥"

महाकवेः तुलसीदासस्य मतं सर्वत्र समन्वयवादितया परिपूर्णं वर्तते। रामचरितमानसे कुत्रापि पाक्षिकमतं न वर्तते। यथाहि—

"धर्मं यो बाधते धर्मः न स धर्मः कुधर्म तत्।
अविरोधी तु यो धर्मः, स धर्मः सत्यविक्रमः ॥"

ऋषयः इहलौकिकपारलौकिकःचिन्तनम् कृत्वा यत् सिद्धान्तं प्रतिपादितवन्तः स संप्रदायधर्मः। परस्परविरोधी धर्मंद्वारा न कदापि जनकल्याणम् राष्ट्रकल्याणं वा भवति। महाकवि तुलसीदासः रामचरितमानसे "सिया राममय सब जग जानी करहुं प्रणाम जोरि जुग पाणि" इति संदेशेन न केवलं मानवस्य कल्याणार्थं चिन्तयति, अपितु समेषां आपामरकीटपतंगादिप्राणिनां हिताय स्वमतं समुपस्थापयति। रामचरितमानसः रचनाकाले हिन्दवः यवनाश्च परस्परविरोधिभावनया परिचालिता आसन् इति विलोक्य अनेन महाकविना मानवानाम् अभ्युन्नत्यै, पारस्परिकविरोधपरिहाराय च समन्वयवादितया दृष्ट्या ग्रन्थस्यास्य निर्माणम् कृतम्।

"परहित सरिस धरम नहिं भाई"

इति न्यायेन अनेन धर्मप्रचारः कृतः। तत्र जड़चेतनयोः मध्ये न कापि भिन्नता परिलक्ष्यते।

"व्यापक ब्रह्म जीव अविनाशी"

इति लिखित्वा सः स्वदर्शनं समुपस्थापयति यन्नकेवलं जीवे एव ब्रह्मणः सत्ता अस्ति, अपितु सर्वत्र ब्रह्म वर्तते। सांप्रदायिकतायाः उन्मूलनाय महाकवेरस्य प्रयासः, तस्मिन् समये युक्तियुक्त आसीत्। यदि सामाजिकऐक्यप्रतिपादनाय महाकवेरस्य प्रयासो नाभविष्यत् तदा समाजः पारस्परिकविरोधभावनया दुष्प्रभावितो भूत्वा विशृङ्खलतां प्राप्य नष्टः अभविष्यत्। सम्यक् प्रदीयते भावः अनेनेति संप्रदायः। अस्य महाकवेः अयं प्रयासः जनानां कृते अतीव लाभप्रदोऽभवत्। वर्णव्यवस्थायां यः दोषः आगतः तस्य दूरीकरणं जातम्। मानवस्य अभ्युत्थानाय भावनायाः एकतायाश्च अतीव महत्वं भवति।

ईश्वरस्य सगुण-निर्गुण स्वरूपस्य निर्धारणम् अनेन इत्थम् निरूपितम् तथाहि —

'सगुनहिं अगुनहिं नहिं कछु भेदा,
गावहिं मुनि पुराण बुध वेदा ।'

पुनः

'बन्दऊ सन्त असन्तन चरणा'

इति लिखित्वा सः स्वदर्शनं प्रस्तौति यत् सर्वरूपेषु ब्रह्मणः स्थान वर्तते। अधुना विरोधस्य कारणं संप्रदायवादः वर्तते, अनया भावनया महती हानिः भवति अतएव सर्वेषां मानवानां कृते रामचरितमानसस्य अध्ययनम् अनिवार्यं वर्तते—

'जड़ चेतन जग जीव जन,
सकल राममय जानि ।'

मर्कट - भल्लुकादिनां कृते स्नेहभावं प्रदर्श्य सः भारतीय दण्डनीतेः महत्वं व्यनक्ति। अत्र आचारसंहितायाः उपदेशः वर्तते तद्यथा —

'अनुजवधू भगिनी सुतनारी,
सुनु शठ कन्या सम ये चारि ।

'इन्हहि कुदृष्टि विलोकहिं जेहि
ताहि वधै कछु पाप न होई ।।'

नरवानरयोः मध्ये मैत्री कीदृशी ? सीता रामचरितमानसे उपदिशति यत् जगतः सकलान् जनान् न केवलं मानवानां कृतेऽपि भावसमताया महत्वम्, अपितु पशुपक्षिणां कृतेऽपि भावनायाः ऐक्यस्य महत्वं भवति । विटपविनोदिनां भल्लूकादीनाम् साहाय्येन यथा रामः स्वोद्देश्यस्य पूर्तिं कृतवान् तथैव सांप्रदायिकभावनायाः भङ्गीकरणं कृत्वा एकतया स्व-स्व उद्देश्यं साधयिष्यन्ति जनाः । राजनीतिक क्षेत्रेऽपि भावसमतायाः अतीव महत्वं वर्तते ।

अध्यात्मरामायणेऽपि विरोध भावनायाः निन्दा वर्तते—

'सुखस्य दुःखस्य न कोऽपि दाता,
परो ददातीति कुबुद्धिरेषा ।
अहं करोमीति वृथाऽभिमानः,
स्व कर्म सूत्रग्रथितो हि लोकः ।'

मानवामानवयोः ऐक्यभावनां प्रदर्श्य स्वलक्ष्यस्य पूर्तिकरणार्थं उपदिशति । अङ्गदस्य युवराजपदप्रसङ्गं प्रदर्श्य साम्प्रदायिक सद्भावं व्यनक्ति । बहुविवाह प्रथायाः दोषं प्रदर्श्य एक पत्नीव्रतस्य महत्व प्रदर्शयति यथा—

'तृण धरि ओट कहत बैदेही,
अधम निलज्ज लाज नहिं तोही ।'

अनया उक्त्या सीतायाः सती धर्मस्य चमत्कारपूर्णो निर्बाहः अयं महाकविः उपस्थापयति । सर्वधर्मेषु सर्वसंप्रदायेषु च बहुविवाह प्रथायाः विरोधं कृत्वा एक पत्नीव्रतस्य महत्वम् आविष्करोति...मानसे अहिंसायाः महत्वमयमाविष्करोति तथाहि—

'चरहिं एक संग गज पञ्चानन ।'

हिंसया दूयते इति हिन्दू इति न्यायेन अहिंसायाः महत्वं प्रदर्श्य सर्वसंप्रदायस्य समभावं अभिव्यनक्ति ।

ताड़कायाः अनियन्त्रित बलस्य संयमनंकृत्वा मर्यादायाः सीमानं प्रकटयति । या नारी नार्य्याः मर्यादां परित्यज्य अनियंत्रितभावनया स्वदोषेण समाजंदूषयति तासां कृते उपदेशः वर्तते । जटायोः प्रेमप्रदर्शनं परोपकारस्य फलम् इति उपदेशः वर्तते । पाशविकी सभ्यतायामपि परोपकारस्य महत्वं प्रकटयति । सज्जन दुर्जनयोः लक्षणं प्रदर्शयति—

'परोक्षे कार्यं हर्तारं प्रत्यक्षे प्रियवादिनम् ।'
'आगे कह मृदु वचन बनाई,
पोछे अनहित मन कुटिलाई ।
जाकर चित्त अहि गति सम भाई,
अस कुमित्र परिहरहिं भलाई ॥'

शत्रोः उपरि विजय प्राप्त्यर्थं एकतायाः अतीव महत्वमस्ति । सखा भावं रक्षणाय स्वनम्रतां प्रदर्शयति ।

'प्रभु तरु तर कपि डार पर,
ते किए आपु समान ।
तुलसी कहुँ न राम से,
साहिब सील - निधान ।'

स्वभक्तोपरि सख्यभावेन प्रेम प्रदर्शयति । सद्भाव प्रदर्शनाय केवटस्य विचारं भूरि भूरि प्रशंसति—

प्रेम लपेटे अटपटे सुनि केवट के बैन ।
चितइ रानकी लखन पुनि विहसें करुणा ऐन ॥'

महाकवेः तुलसीदासस्य कल्पनायाः अत्र चित्रणं वर्तते । अकिंचन ऋषेः आश्रमं गत्वा स्वमहत्तां व्यनक्ति । अभय प्रदानाय ऋषीणां समीपे स्व अवतारस्य कारणं प्रकटयति—

'जनि उर पहुँ मुनि सिद्ध सुरेशा,
तुम्हहिं लागि धरि हऊ नरवेषा ।'

विभीषण: राजतिलकप्रसंगे सखाशब्दस्योच्चारणं कृत्वा स्वमहत्तां प्रदर्शयति—

'यदपि सखा तव इच्छा नाहीं,
मोर दरस अमोघ जगमाहीं ।'

दशरथस्य श्राद्धप्रसङ्गे कथयति—

'वयं यदन्ना: पितरस्तदन्ना: ।'

इति जीवात्मपरमात्मनो: ऐक्य-स्वभाव प्रदर्शयति । ईश्वरस्य ज्ञानप्रसङ्गे ईश्वरस्य गूढ़रहस्यम् प्रतिपादयति कठोपनिषद् ग्रन्थे —

'नायमात्मा प्रवचनेन लभ्यो,
न मेधया न बहुना श्रुतेन ।
यमेवैष वृणुते तेन लभ्यस्तस्यैष,
आत्मा विवृणुते तनूं स्वाम् ।'

समताप्रदर्शनाय सर्वत्र चैतन्यदर्शनाय च राम: कथयति –

'हे खग ! हे मृग ! मधुकर ! श्रेणी ।
तू देखीं सीता मृगनयनी ।'

रामचरितमानसे स: प्रकृते: मानवीकरणं करोति –

'रे वृक्षा: पर्वतस्था: गिरिगहनगुहावायुना वीज्यमाना: ।'

शवर्या: उद्धारं कृत्वा सर्ववर्णधर्मसमन्वयं प्रदर्शयति । अहल्योद्धारं कृत्वा स्वोद्धारभावनाया: परिचयं दत्वा उपदिशति । जयन्तोद्धारं कृत्वा क्षमाया: महत्वं प्रदर्श्य भारतीयदण्डनीते: वैशिष्ट्यं प्रदर्शयति—

'कोटि विप्र वध लागहिं जाके
आयहुँ शरण तजहुँ नहि ताके ।'

केवटोपरि कृपां कृत्वा स्वविचारं प्रदर्शयति यत् सर्वेषां कृते ईश्वरभक्तिः समाना वर्तते । सुग्रीवस्य राज्याभिषेकम्, विभीषणस्य राज्याभिषेकं च कृत्वा धर्मनीतेः वैशिष्ट्यम् व्यनक्ति यत् स्व उपकारात् पूर्वं परोपकारः अनिवार्यो वर्तते ।

तस्मिन् समये वैष्णवसंप्रदायी जनः स्वं स्वं उद्घोषं उच्चस्वरेण कृत्वा शैवसंप्रदायस्य विरोधं प्रदर्शयति स्म । शैवाः अपि वैष्णव सम्प्रदायं निन्दन्ति स्म इति विलोक्य अयं महाकविः कथयति–

'शिवद्रोही मम दास कहावा
सो नर मोहि सपनेहु नहिं पावा ।'

शैव-वैष्णवयोर्मध्ये रामशिवयोः मध्ये न कोऽपि भेदः ।

'यं शैवा समुपासते शिव इति ब्रह्मेति वेदान्तिनो,
बौद्धाः बुद्ध इति प्रमाणपटवः कर्त्तेति नैयायिकाः ।
अर्हन्नित्यथ जैनशासनरताः कर्मेति मीमांसकाः,
सोऽयं नो ! विदधातु वाञ्छितफलं त्रैलोक्यनाथो हरिः ॥'

रामकृष्णयोर्मध्ये एकतां प्रतिपादनाय सः लिखति–

'कृत मुरली कृत चन्द्रिका,
कृत गोपियन के पास ।
अपने जन के कारणे,
श्रीकृष्ण भये रघुनाथ ।'

भगवान् रामः न केवलं मानव साक्ष्यस्य महत्वं ददाति । अपितु पशुपक्षिवनस्पतीनां साक्ष्यस्य महत्वं व्यनक्ति । अत्रापि साम्प्रदायिक समभावनायाः स्फुटीकरणाय दण्डनीतिं प्रदर्शयति । बालिवधः रावण-वधादि कार्याणि कृत्वा पारस्परिकविरोधिनां कृते उपदेशो वर्तते ।

सांप्रदायिकभावनया उपद्रवकर्तारं दण्डं दत्वा प्रकटयति यत् न कदापि अनया भावनया शान्तिर्भवति । सदाचारसंस्थापनार्थं वधम् करोति । रावणस्य बधः उपदेश वर्तते । अत्र राजदोषनाशार्थं राज-धर्मप्रतिपादनाय सः लिखति यत्–

'भरतहिं होहि न राजमद,
विधि हरिहर पद पाहि ।
कबहुँ कि काँजी शीकरिणी,
क्षीर सिन्धु विनसाई ।'

सर्वसम्प्रदायेषु धर्मस्य परिलक्षणं वर्तते—

'खग मृग वृन्द अनंदित रहहीं ।
मधुप मधुर गुंजत छवि लहहीं ।'

ओषधि - वनस्पत्यादिषु च रामस्य समत्वं वर्तते । "समत्वं योग उच्यते" इति दृष्ट्या जनकल्याणस्य चिन्तनं महाकवेः तुलसीदासस्य अनिवार्यं वर्तते । यद्यपि ईश्वरस्य अवतारः "परित्राणाय साधूनां विनाशाय च दुष्कृताम्" इत्युद्देशस्य पूर्तये भवति । बालिवधप्रसंगे अस्य महाकवेः रामस्य सर्वधर्मसमन्वयभावस्य प्रकाशनं वर्तते । बालिमुखात् निःसृत इदं पद्यं दर्शनीयम्—

"कंह बालि सुनु भीरु प्रिये समदरसी रघुनाथ ।
जों कदापि मोहि मारहिं तौ पुनि होऊं सनाथ ।"

साम्प्रदायिकविरोधस्यापाकरणाय सेतुबंधनमकरोत् ।

'बांधा सेतु नील - नल - नागर ।
राम कृपा जसु भयउ उजागर ।।'

राजशासनपद्धत्याः उल्लेखं कृत्वा लोकप्रशासनस्य ज्ञानाय इदं उदाहरणं प्रस्तौति—

'सचिव वैद्य गुरु तीन जो,
प्रिय बोलहिं भय आस ।
राजधर्म तन तीन करि,
होंहि वेगहिं नास ।।"

— अध्यक्ष स्नातकोत्तर वेद विभागाध्यक्षः
का० सिं० द० सं० वि० दरभंगा



पूर्वतोऽनुवृत्तम्—

# सोलनशतकम्

केशवराम शर्मा. दर्शनाचार्य, एम. ए. एम. फिल.
(प्राप्तस्वर्णपदकद्वय:)



रक्तैर्वस्त्रैं वलयितमहादण्डमध्याधिरूढः
गुग्गादेवो भजनमुखरैः स्कन्धमारोप्य भक्तैः ।
ग्रामं ग्रामं प्रति सविनयं नीयमानः सवाद्य
इष्टान् कामान् वितरति निराकृत्य नैजात्मजेतीः ।७८।

लाल वस्त्रों से लिपटे एक बड़े दण्ड के मध्य विराजमान पूज्य गुग्गादेव को भजनगान पूर्वक कन्धों पर विनीत भक्तों द्वारा गांव गांव ले जाया जाता है। और वह अपने पुत्र तुल्य श्रद्धालुओं की विघ्न-बाधाएं दूर करके इच्छित कामनाएं पूरी करता है।

आनम्रैः स्वैरुभयकरणैरर्चयन्तः सुरेशान्
संशृण्वन्तः सुमधररसाः सत्कथा व्यासगीताः ।
लोकाः श्रद्धाचरितभगवद्भक्तयो ज्ञानयज्ञे
शोभन्तेऽत्रर्षय इव गता नैमिषारण्यतीर्थे ।७९।

यहां पुराणों के ज्ञानयज्ञ का बहुत आदर है। अन्तः करण एवं वाह्य चक्षुरादि करणों द्वारा विनयपूर्वक देवार्चना करते हुए, व्यासोक्त परममधुर रसमय पुराणकथाओं को सुनते हुए, श्रद्धापूर्वक भगवद्भक्ति निरत श्रद्धालुजन ऐसे शोभायमान होते हैं मानो नैमिषारण्य तीर्थ में ऋषिगण बैठे हों।

यामार्या जागरणसमये वाद्यवृन्दस्वरौघैः
प्रातर्देवस्तुतिपदशतैः शङ्खशब्दैरमन्दैः ।
यज्ञे नित्यं द्विजगणमुखोच्चारितैर्वेदमन्त्रैः
भीतो नैव प्रभुरिह कलिः क्वापि बाधां विधातुम् ।८०

रात्रि को भगवती जागरण आयोजन के वाद्यवृन्द स्वरों, प्रातः देवस्तुतिपदों एवं तीव्र शंखशब्दों और नित्य होने वाले यज्ञ में द्विज-मुखों द्वारा उच्चारित वेदमन्त्रों से मानो डरा हुआ कलियुग यहां कहीं भी कोई उपद्रव करने में समर्थ नहीं होता।

— संस्कृत विभागाध्यक्ष, राजकीय स्नातकोत्तर
महाविद्यालय, सोलन (हि. प्र.)

# धरित्री व्रतविद्धता

प्रो. केशव शर्मा



## प्रथम दृश्यम्

(मुनि सत्यानन्दाश्रम: । परित: सुगन्धितधूपधूपितवातावरणम् । मञ्चोपरि आश्रमबोधकसज्जा । आश्रमवासिन:, छात्रा प्राध्यापकाश्च प्रात: कालीनां प्रार्थनां गायन्ति । )

सौम्या, शुभा ध्वनि: सदा कर्णातिथिर्भवेत्
नेत्रै: सदैव शोभनं पश्येम: हे सखे ? ।१।

अंगानि सुस्थिराणि स्यु र्न द्वेषभावना
सर्वे भवन्तु सौख्ययुता: सैव कामना ।
रोगास्तु लोपमेव यान्तु क्षमातलेऽत्र चेत्
सौम्या ... ... ... ।२।

लोकास्त्वकालमृत्युतो हीना भवन्तु ते
सम्पालयेयु: जीवने नियमान् सदैव ये ।
सर्वोऽपि लोक एष: सौख्यं सदा लभेत्
सौम्या ... ... ... ।३।

लोकेऽत्र नो भवेद्यदि दारिद्र्यदोषदाह:
नैवात्र कोऽपि स्याद्वुभुक्षितश्च भारवाह:
सेयं स्वतन्त्रता तदा पूर्णत्वमाविशेत्
सौम्या ... ... ... ।४।

(सवाद्यं शनै: २ प्रार्थना समाप्तिमेति छात्रेष्वेक: पृच्छति)

छात्र :- आचार्यप्रवर ! अद्य केचन ग्रामीणसभाप्रधाना: आश्रममिदं समलंकुर्वन्ति भवतां दर्शनेच्छां च प्रकटयामासु: ।

आचार्य:- (छात्रान् प्रति) तान् आश्रमस्य सभागारे समानीयताम् । तत्रैव तै: साकं मिलिष्याम: ।

छात्र :- (सविनयम्) यथा भवतामादेश: ।

(सर्वे उत्थाय गच्छन्ति । पटपरिवर्तनम् ।)

## द्वितीय दृश्यम्

(प्राध्यापकाः, प्र. आचार्य। ग्रामपञ्चायतनप्रधानाः सभागारे उपविष्टाः सन्ति ।)

प्रधानाचार्य मुनिः- (सोल्लासं, सविनयं ज्ञानतेजो प्रसारणं स्वमुखप्रकाशेन भारतीयवेषेन च कुर्वन् प्रधानान् सम्बोधयन् ।) मान्याः ! ग्रामश्रेष्ठपुरुषाः :- उच्यतां तावत् भवतां किमुपकारं कर्तुं शक्ताः वयम् ?

एक - प्रधान :- पूज्यवर ! वयं ग्रामीणाः सततं कृषिसेवासंलग्नाः दारिद्र्यदोषपीड़िताः स्म । देशस्य विभिन्नप्रान्तेषु विशालोद्योगस्थापनाकारणात् - केचन लोकाः अगणितधनसम्पन्नाः सततं कारयानेषु वायुयानेषु वा यत्र तत्र सानंदं भ्रमन्ति परन्तु कृषकान् न कोऽपि पृच्छति ।

मुनि :- (चिन्तां नाटयन्) भवन्तस्तु अन्नोत्पादनेन समस्तराष्ट्रीय जीवनदानकर्तारः । भवतां पार्श्वेऽपि धनस्य न्यूनता ?

अपरः प्रधान :- मान्याः ! यद्यपि देशे भूमिवितरणं चिराज्जायमानमस्ति तथापि सन्ति केचन विशालभूमियुताः नामतः कृषाणा परन्तु क्षेत्राणां दर्शनमपि न कुर्वन्ति ते । एवं विधा एव स्वल्पाः कृषाणाः धनिकाः अन्ये तु बहुसंख्यकाः प्रायेण क्षीणा एव ।

तृतीयः प्रधानः- प्रभो ! अत्र कारणमिदमस्ति यत् ये मध्यस्थाः सन्ति ते एव लाभान्विताः भवन्ति । उत्पादयितारः प्रयोक्तारश्च सन्ति प्रायेण निर्धनाः ।

मनि :- (गम्भीरमुद्रया) श्रेष्ठपुरुषाः ! मध्यस्थान्दोलनाय एव तु सहकारितायाः संस्थापना जाता आसीत् । तस्या प्रसारेण मध्यस्था स्वय लुप्ताः भविष्यन्ति ।

चतुर्थः प्रधान :- (किंचिद् विचार्य) श्रीमन् ! तत्र येऽपि अग्रिणो भवन्ति ते स्वार्थपराः स्वयं धनिका - भवन्ति एवञ्चान्यजनानां धनहानिं कुर्वन्ति ।

मुनि :- (मध्य एव) एतदेव तु देशस्य दुर्भाग्यं यो हि क्वचिदुत्तरदायिपदमलंकरोति स एव धनलोभेन तथाऽनर्थं करोति। भवन्तोऽपि तैः साकं मिलित्वा साधारणजनवञ्चनं कुर्वन्ति।

एकः प्रधान :- (सखेदम्) मान्याः ! सन्ति—अस्मासु तथाविधा अपि केचन परन्तु न सर्वे वञ्चकाः धूर्ताः, लोलुपाः—वा।

मुनि :- प्रधानमहोदयाः ? प्रतिदिनं मम पार्श्वे सहस्रशः पीड़िताः जनाः समायान्ति। अहं किं कुर्याम् ?

द्वितीय प्रधान :- श्रीमन्तः ? भवतामाश्रमदर्शनेन लोकाः शान्तिमनुभवन्ति।

मुनि :- शान्तिः ...... हुम् ...... बुभुक्षितेषु शान्तिः कथं स्यात् ? देशगुरुरयं भारतोऽद्य दरिद्रोऽस्ति जातः। अस्य दरिद्रतायाः कारणमस्ति मन्त्रिणः, प्रशासनाधिकारिणः, भवद्विधाः ग्रामीणप्रधानाश्च।

तृतीयः प्रधान :- नहि, पूज्यवर ! नहि।

मुनिः "नहि कस्तुरिकामोदः शपथेन निवार्यते" प्रधानमहोदय ! दरिद्रदेशस्य मन्त्रिणः पञ्चाशत्कोटिरूप्यकनिर्मितभवनेषु वसन्ति। प्रथमं देशे गणनीयाः राजानः आसन् यदा ते दुष्टाः जातास्तदा नवीनमिदं पाश्चात्यपद्धतिमाश्रित्य गणतन्त्रमत्रोदितम्।

चतुर्थ प्रधानः-सत्यम् महाराज ! सत्यम्।

मुनि :- अद्य देशे सन्ति- अनल्पाः राजानः। क्वचिद् भाषाधारमाश्रित्य, अन्यत्र धर्ममाधारी कृत्य, इतरस्थाने च जातिमाश्रित्य विशालस्यास्य पवित्रदेशस्य विभाजनं, खण्डनं कुर्वन्- भारतीयैरेव।

एकः प्रधान :- मुनिवर ! परन्तु देशस्य निर्धनजनाः अद्य परम दुःखिताः सन्ति।

मुनि :- तत्रास्ति कारणम्। एकतो लोकाः आलस्यग्राहग्रस्ताः सन्ति। ये श्रमिकाः सन्ति ते प्रायेण निर्धनाः। तेष्वपि—आलस्यं शनैः २ प्रसरतीत्यनुभूयते।

अस्माभिः- पाश्चात्यानामन्धानुकरणं क्रियते ।

द्वितीय-प्रधानः- पूज्यवर ! तैस्तु सर्वक्षेत्रेषु प्रोन्नतिः कृता ।

मुनि :- आम् सा तु कृता । ममाशयोऽयमस्ति यदनुकार्यमासीत्तन्नानुकृतमस्मद्देशीयैः । यच्च त्याज्यमासीत्तदेवानुकृतं स्वजीवने च परिपालितञ्च ।

तृतीय प्रधान :- (जिज्ञासां नाटयन्) तत्कथं महाराज ?

मुनि :- तदेवम् - सुरा- सुन्दरी - मादकवस्तुसेवनं नासीदनुकरणयोग्यम् । परन्तु - भारतीयास्तेष्वेवाद्य अग्रगण्याः जायन्ते । उत्कोचस्यात्र नामापि न जानाति स्म कश्चित् । तदेवाद्य प्रतिजनं भयंकररूपेण प्रसृतम् । सत्यं परित्यक्तम्, देश प्रीतिर्नास्ति - एव ! धर्मभीतिर्नास्ति । एवञ्च मानवसमाजः जीर्णतां याति प्रतिदिनम् ।

चतुर्थप्रधान :- पूज्याः ! देशस्य ऊर्वराभूमिः विशालोद्योगसंस्थानैर्गृहीताः, नदितटभूमिः, या पर्वतीयक्षेत्रेषु ऊर्वरा भवति स्म सा विशालजलभाण्डारणयोजनाभिः जलमयी जाता । एवञ्चान्नोत्पादनक्षमतापि देशस्य भविष्यत् काले क्षीणतां प्राप्स्यति ।

मुनि :-सत्यन्विदम् ! विशालनगरैर्बहुभागोऽस्याः देशस्य पृथिव्याः गृहीतः । क्वचित - खनिजनिष्कासनाय, क्वचित्कृष्णांगारप्राप्तयेऽन्यत्र बालुकार्थं तथा च सीमान्तक-श्वेतलेपचूर्णादिग्रहणाय क्षतविक्षतेयं धरा कीदृशी कृता बुद्धिमद्भिर्भारतीयैरपि ।

एकः प्रधान :- श्रीमन् वयं ग्रामीणास्तु केवलं मतग्रहणाय एव रक्षिताः देशस्य राजनयज्ञैरज्ञैः । वनानि छिन्नानि । अत एव भूक्षरणं पर्वतेषु भयंकरतां प्राप्नोति । उत्पादनवृद्ध्यर्थं, शस्यहानिकरकीटविनाशाय, फलशाकादिवृद्धये, तद्धानिप्रतिरोधाय, प्राकृतिकसाधनापेक्षया एकपक्षीयः पाश्चात्यनिर्धारित - हानिकर औषध-प्रयोगैर्देशस्य भूमिः शनैः २ ऊर्वरतां त्यक्ष्यति ।

# द्विचक्रिका

## प्रथमं दृश्यम्

(महेन्द्रनरेन्द्रौ नरेन्द्रस्य—गृहे उपवेशनकक्षे उपविष्टौ । महेन्द्रः किमपि गायति नरेन्द्रश्च कारयानानां विभिन्नाकार–आदर्शदर्शने व्यग्रः ।)

### गीतम्

महेन्द्रः - हेईश ? कीदृशीयं तव मोहिकास्ति माया ?
सर्वेषु सम्पत्तस्यास्तु घोरछाया ।।

यानानि निर्मितान्यासन् सौख्यप्राप्तये ।
लोकाः परन्तु नैव पात्रतां वहन्ति ते ।
यानैरियं धराद्य सर्वतोऽपि वेष्ठिता ।
आरामदास्यतां गता परैव लोककाया ।
हे ईश ? ... ... ... ।१।

दशपादगन्तुमप्यद्य न लोक ईहते
होरासमाप्तियावत् बसयानमीक्षते
सा शक्तिः नाशमेति गमनस्य या जनेषु
विवशी करोति कारं क्रेतुं पतिं हि जाया ।।
हे ईश ? ... ... ... ।२।

उद्योगिनस्तु पूर्वं क्रीताः—नु कारयानैः ।
तस्मध्य एव मन्त्रिणोऽपि जितास्तैलयानैः ।।
साधारणोऽपि लोको मत्तोऽस्ति तत्क्रयाय
हे बन्धु ! स्वीयतृष्णां जहि दुःखश्यामला य
हे ईश ... ... ... ।३।

नरेन्द्र :- (बारं २ समुत्सुकतया कारयानानां विभिन्न—आदर्शान् विलोकयन् ।)

हुम् ... ...किमर्थं निर्जीवयानस्य तथा च लोकसमृद्धेः निन्दां करोषि मित्र !

महेन्द्र :- बन्धुवर ? नाहं यानस्य न चापि समृद्धेः निन्दां करोमि । अहन्तु केवलं भारतीयानां बुद्धिवैभवं निन्दामि ।

नरेन्द्र:- यदा विश्वस्य लोकाः विभिन्न-सुन्दरतमयानेषु सानन्दं भ्रमन्ति तदा भारतीयैरेव किं तादृक् पातकं कृतमस्ति येन ते यानेषु एषु नोपविशेयुः ?

महेन्द्र :- (गाम्भीर्येण) नरेन् ! त्वं कथं न पूर्णबुद्धिबलेन विचारयसि यद्देशोऽयं पञ्चाशीतिकोटिमितानां जनानां वर्तते । अत्र विभिन्न - आयवर्गस्य जनाः निवसन्ति । प्रशासनेन देशे प्रदेशेषु च सामान्यजनसुविधायै बसयानसेवा सञ्चालिता वर्तते परन्तु तेनापि जनास्तुष्टाः न सन्ति । सर्वत्र जनसमाजे कारयानक्रयाय प्रतिस्पर्धा जायमाना दृष्टुं शक्यते ।

नरेन्द्र :- तर्हि किम् ? सर्वेषामायस्तरो वृद्धिं गतः । अतो भारतीयेषु चेत् स्पर्धेयं सुखसाधनप्राप्तये चलेत् तेन किम् । नेदं लोककल्याणाय ?

महेन्द्र :- मानवेच्छास्तु न स्वल्पा । सा तु सुरसाया मुखमिव मनश्चाञ्चल्येन वृद्धिमेवोपयाति तस्याः वशीभूताः जनाः-उत्कोचादिग्राहेण, चौर्येण, राष्ट्रियसम्पदपहरणेनापि स्वसुखसुविधाजनकवस्तुसंकलने संलग्नाः सन्ति ।

नरेन्द्र :- सुखसुविधाप्राप्तिः किं पापमस्ति ?

नरेन्द्र :- नहि खलु पापम् । परन्तु—अवैधनिन्द्यसाधनैस्तद्ग्रहणं पापम् । भारतसदृशदेशीयाः जनाः स्वपरिश्रमप्राप्तधनेन केवलं वस्त्रगृहरोटिकाप्राप्तिसुखेन कर्तुं शक्ताः । नाधिकम् ।

नरेन्द्र :- तत्कथम् ?

महेन्द्र :- तदेवम् -- राष्ट्रस्य भूमिः विविधविभाजनैः लङ्का— वर्मा— नयपाल पाकिस्तान —भूटान — तिब्बत —आदि विभिन्न-भागेषु विभक्ता जनसंख्या च विशाला । यावदत्रत्यजनसंख्या सीमिता न भवति तावत्— सुखसुविधा विस्मरणमेव देशकल्याणाय ।

नरेन्द्र :- परन्तु तथ्यन्तु - अन्यदेव वर्तते । मन्त्रिप्रभृतिप्रशासक-व्यवस्थापक - लिपिकपर्यन्तं प्रशासकीयक्षेत्रेऽपि सर्वेऽहर्निशं स्वसुखसाधन - एकत्रीकरणे संलग्नाः सन्ति ।

महेन्द्र :- एतत्तु सत्यम् । परन्तु देशोऽस्माकं ऋणभारेण तथा ग्रस्तोऽस्ति यथा बहुवर्षपर्यन्तमस्माभिः कठिनतपस्तपनीयमस्ति तदैव ततो मुक्तिः स्यात् । चेन्मन्त्रिणः, प्रशासकाश्च यथाकालं ध्यानं न दास्यन्ति तदा गृहयुद्धमत्र भविष्यति ।

नरेन्द्र :- नैव, नैव, महेन्द्र । तादृशी कामनां मा कुरु । पूर्वाञ्चले देशस्य तथा पञ्जाबप्रदेशे किं न्यूनो रक्तपातः जातः ? पुनरपि भवान् तादृक्कामनां कुरुते ?

महेन्द्र :- नैव नरेन्द्र ! नाहं कामपि तादृक्कामनां करोमि । परन्तु, "विषवृक्षं समारोप्य न कदाचित्फलसम्भवः ।"

नरेन्द्र :- किमर्थोऽस्य ।

महेन्द्र :- यदा प्रशासनमिच्छावृद्धिधावनिकायां सततं प्रवर्तते तदा कथं साधारणो जनः सुखी स्यात् ?

नरेन्द्र :- सुखसाधनप्राप्तये एव तु प्रयासाः प्रशासनेन क्रियमाणाः सन्ति ।

महेन्द्र :- परन्तु इयन्तु सैवस्थितिरस्ति यत् - "यावज्जीवेत्सुखं जीवेत् ऋणं कृत्वा घृतं पिवेत् ।"

नरेन्द्र :- इदमपि शोभनम् । चिन्तापूर्णजीवनात्तु-इदमेव वरम् ।

महेन्द्र :- नरेन् ! व्यक्तिगतजीवनाय, एकस्य जनस्य जीवनाय वा इदं शोभनं भवितुमर्हति । परन्तु अत्र तु राष्ट्रस्य जीवनवार्ता अस्ति । गतेषु चत्वारिंशद् वर्षेषु यदस्माभिः कृतं तस्य एव फलमद्य सर्वमिदम् । मार्गसुविधाः शिक्षा - चिकित्सा - ऋण ग्रहणसुविधाः एतत्सर्वं गतवर्षप्रयासैरेव जातम् ।

नरेन्द्रः- तर्हि किमस्ति न्यूनमत्र येन भवान् क्षुब्धोऽस्ति ? (तदैव स्त्री-युगलं प्रविशति। एका चायपात्राणि गृहीत्वा द्वितीया च खाद्यवस्तुजातस्य पात्रमादाय। इमे उभयोः जाये। कमला महेन्द्रस्य पत्नी निर्मला च नरेन्द्रस्य।)

महेन्द्र।-बन्धुवर चायं पिव। तदाऽग्रे विचारयिष्यामः।

नरेन्द्र :- (हसन्) तदैव भवतां क्षोभोऽपि चायपानेन शान्तो भविष्यति।

(सर्वे स्व स्व पात्राणि हस्ते गृहीत्वा चायपानं कुर्वन्ति।)

कमला:- भ्रातृवर नरेन्द्र ? विचारचर्चा साग्रे गच्छतु।

नरेन्द्रः- कमले ! अयं तव पतिः सर्वेषां देशवासिनां भारं स्वस्कन्धोपरि धारयितुमिच्छति।

निर्मला:- महेन्द्र भ्राता सत्यमेव वक्ति सर्वमपि भवतां वार्ताजातमावाभ्यां श्रुतं किल।

नरेन्द्र :- अरे ? त्वं तु स्वकीयभर्तुः साहाय्यं कुरु।

निर्मला।- सर्वदा क्रियते तत् परन्तु महेन्द्रभ्राता सत्यं कथयति।

नरेन्द्र।- किमत्र सत्यम् ? किमस्माभिः स्वसुखसुविधायै प्रयासाः न कार्याः ?

कमला:- नहि भ्रातृवर "मम पतिरिदं वक्ति यत् देशो यावदार्थिक-रूपेण स्वतन्त्रो न भवति तावन्न स्वातन्त्र्यस्य फलं सर्वैरास्वा-दयितुं शक्यते।

महेन्द्र।- किं भवन्तो न जानन्ति यत् रूससदृशो महान् देशोऽपि आर्थि-कसङ्कटेन छिन्नभिन्नो जातः। यो ह्य समस्तसंसारे प्रथमश-क्तिरूपेण स्वीक्रियते स्म स एवाद्य भिक्षापात्रं गृहीत्वा लघुतमदेशेभ्यः आर्थिकसाहाय्यं याचते। अस्माकं दशापि सैव भवितुमर्हति यदि - अधुनापि - अस्माभिः स्वप्रमादनिद्रा न त्यक्ता।

नरेन्द्र।- (मन्दस्मितेन) महेन्द्र, वार्ता तु कारयानेभ्यः प्रारब्धा परन्तु— इदानीं भवद्भिर्भारतस्यार्थिकस्थितिर्व्याख्यायते।

महेन्द्र :- सर्वथार्थिकस्थितिसम्बद्धा कारयानवार्ता चीनदेशस्य निखिलेऽपि संसारे प्रायेण केनापि सह तादृशी आर्थिकसहायता सन्धिर्नासीदेव यादृशी अस्माकं देशस्य । तथापि स जीवति, अस्माकं देशश्चार्थिकसंकटापन्नोऽस्ति जातः । यावती प्रगतिरस्माभिः कृता तावती एव हानिरपि तदा कीदृशी प्रगतिः ?

नरेन्द्र :- भवान् स्वयमेव, प्रगतिर्जातादेशे इति स्वीकरोति तदैव च न कापि प्रगतिर्जाता—इत्यपि स्थापयति ।

महेन्द्र :- नहि, नायं ममाशयः । ममाशयोऽस्ति यद् देशे उद्योगप्रसारः प्रतिग्रामं स्यात् । न तु उद्योगविकासः एकस्मिन् नगरे, कतिपयनगरेषु वा स्यात् । न च सः कतिपयजनस्वामित्वे एव भवेत् । वार्ता कारयानात् प्रारब्धा आसीत् । भूमिरस्माकं पार्श्वे सीमिताः । नगरेषु कुत्र यानस्थापना क्रियेत एतस्यापि संकटमुत्पद्यते । यानतैलस्रोतांसि समाप्तप्रायाणि सन्ति तैलार्थमस्माभिः परमुखापेक्षिभिरेव भाव्यमस्ति । तेनास्माकमार्थिकनीतिः कथं प्रभाविता भवति इति को नाम न जानाति । अमेरिका - अरबदेशसंघर्षेण सा स्थितिः सर्वैरेवावलोकिता

कमला :- एतत्तु सत्यमस्ति ।

निर्मला :- कथयन्ति यत् त्रिंशत-वर्षकालेन तैलकूपाः समाप्ताः स्युः ।

महेन्द्र :- न केवलं तैलसमस्या एव । सहैव वातावरणमपि दूषयति धूमो यानानामेषाम् । तस्मात् तादृग्यानोपरि जनसाधारणोऽत्रत्यः निर्भरो भवेत् यत्सर्वजनसुलभं स्यात् । ग्रामीणमार्गेष्वपि सौकर्येण गच्छेत् । स्वदेशे एव निर्मितं स्यात् । वातावरणमपि कणमात्रमपि न दूषयेत् । स्थापनार्थं स्थानमपि स्वल्पं पर्याप्तं स्यात् ।

नरेन्द्र :- तादृग्यानं किं भवितुमर्हति ?

महेन्द्र :- द्विचक्रिका तादृगेव यानम् ।

नरेन्द्र :- (मध्य एव संरोधयन्) नहि महेन्द्र नहि । कस्तादृशो मूर्खो भविष्यति योहि परिश्रमेण चाल्यमानद्विचक्रिकामिच्छेत् ?

महेन्द्रः :- वैज्ञानिका शोधं कृत्वा द्विचक्रिकाचालनस्य परिश्रमदूरीकरणे सक्षमा :- सन्ति । प्रदूषणात्-रक्षा भविष्यति । तैलार्थं परमुखापेक्षित्वं न भविष्यति । अधिकाधिकजनाश्च तत्क्रेतुं शक्ष्यन्ति । भ्रष्टाचारे पर्याप्ता न्यूनतापि समागमिष्यति ।

कमला :- विषयोऽयं सर्वथा विचारणीयः ।

निर्मला :- न केवलं विचारणीयोऽपितु - अनुकरणीयः ।

नरेन्द्रः :- (हसन्) मन्यते मन्यते बहुमतोऽत्र सिद्धोऽस्ति ततोऽहमपि समर्थनं करोमि भवतां विचारस्य ।

(पटाक्षेप)

**************************************

# पाठकाः प्रार्थ्यन्ते

मान्याः !

नववर्षारम्भो जातः नववर्षशुल्कः प्राप्यः । पत्रप्रेषणेनापि वार्षिकशुल्कप्रेषणार्थं प्रार्थना कृता किन्तु स्वल्पैरेव महानुभावैः शुल्कप्रेषणं कृतम् । अतः सविनयं प्रार्थ्यते यत् शीघ्रमेव शुल्कप्रेषणेन सहायता कार्या ।

— सम्पादकः






# मिश्रोऽभिराजराजेन्द्रः पुरस्कृतः

संस्कृतजगति निजाऽनवरतसत्काव्याभ्यासपाटवात् सुविदितवरः काव्यनाट्यकथात्रिवेणीपरिस्नातशिमलाविश्वविद्यालयीयसंस्कृतविभागे चाधुनाऽऽचार्याध्यक्षपदमलङ्कुर्वाणो मिश्रोऽभिराजराजेन्द्रः स्वामिधर्मानन्दसरस्वतीसाहित्यसम्मानेन पुरस्कृतः ।

हरिद्वारस्स्थय परमार्थाश्रमसंस्थापकानां गोलोकवासिनां स्वामिपादानां श्रीधर्मानन्दसरस्वतीचरणानां पुण्यस्मरणमहोत्सवे मध्येसहृदयसमवायं स्वामिपादा विश्वविख्यातयशसः श्रीसत्यमित्रानन्दगिरिमहाभागा ५ अप्रैलदिवसेऽधिसन्ध्यं मिश्रमहोदयं महार्घोत्तरीयेण सम्भूष्य पुष्पमाल्यादिभिस्सत्कृत्य पञ्चसहस्रमितघनराशिना सम्मानितवन्तः । अयमासीत् प्रथमः पुरस्कारः स्थापितपुरस्कारपरम्परायाः ।

पुरस्कारोऽयं राजेन्द्रमिश्राय तदुपज्ञां काव्यकृतिं धर्मानंदचरितावधिमभिलक्ष्य प्रदत्त आसीत् । अस्मिन्नवसरे परमार्थाश्रमाध्यक्षाः प्रख्यातवक्तारः भारतीयसंस्कृतिपक्षधराः सांसदाः श्रीचिन्मयानन्दसरस्वतीमहाभागाः पुरस्कारस्थापनाभिप्रायं प्रकाशितवन्तः । गुरुकुलकांगड़ीविश्वविद्यालयीय हिन्दीविभागाध्यक्षा डा. विष्णुदत्तराकेशमहोदयाश्च अभिराजराजेन्द्रस्य संस्कृतहिंदीभोजपुरीकाव्यसाधनाया मर्मोद्घाटनं कृतवंतः ।

—

# श्री विश्वनाथआचार्याः ९२वर्षे प्रविष्टाः

खन्ना ! भारतस्य प्रख्यातसंस्कृतविद्वांसः संस्कृतसेवकाश्च स्वजीवनस्य ९१ वर्षाणि अपूर्य ९२ तमे वर्षे प्रविष्टास्तदिदमालक्ष्य समारोह एष – पञ्जाबप्रदेशस्य करमन्त्रिणः श्री स. शमशेरसिंह दूलो' महोदयस्य सभापतित्वे सम्पन्नः । आचार्य विश्वनाथशास्त्रिणः पञ्चसप्ततिसंख्यकगताब्देभ्योऽनवरतं सुरगिरं न केवलं पञ्चाम्बुप्रदेश एवापि: समस्तभारते प्रसारयन्ति । तत्र यथाशक्तिः सर्वदा साहाय्यं कुर्वन्ति । अनेकसंस्कृतविद्यालयसंरक्षणमेभिः कृतम् परन्तु पञ्चाबस्य परमप्रतिष्ठितः श्री सरस्वती संस्कृतकालेजस्तु— एतेषां निःस्वार्थ

निःशुल्कसेवया एव भारत संस्कृतसंस्थासु प्रमुखतां गतो नात्र सन्देहः। स्वीयं सर्वस्वं श्रीचरणैः संस्कृतसेवायै समर्पितम्। आचार्य विश्वनाथ शास्त्रिणस्तु स्वयमेव स्वकर्मभिः सम्मानिताः सन्ति समस्तदेशे एतेषां जन्मदिवसकाले समारोहायोजनेन पञ्जाबप्रशासनम् पंजाब संस्कृत-अकादम्याश्च सर्वेऽपि मुख्यसदस्याः स्वमानं वर्धयामासुः अनेन शुभकर्मणा। दूलो महोदयेन संस्कृतस्य गरिमा स्वीकुर्वता एकलक्षरूप्यकाणामनुदानं श्री सरस्वती संस्कृतमहाविद्यालयाय समनुज्ञातमिति प्रशंसार्हमिदं सर्वम्। आयुर्वेदमहाविद्यालयस्थापनायै अपि तेन प्रतिज्ञातम्।

## दिल्ली संस्कृत अकादमी

दिल्ली। संस्कृत अकादम्याः संयोजकत्वे, अत्र राजनिवासे 'संस्कृतसाहित्यसेवासम्मान' समारोहे श्री पी. के. दवेमहोदयेन मान्य उपराज्यपालेन डा० श्री रामकरण शर्मा, डा टी एस रुकमणिः श्री वेदप्रकाश शास्त्री, श्री शिवनारायण शास्त्री च—एते विद्वांसः सम्मानिताः।

उपराज्यपालः प्रावोचत् गतेभ्यः शतत्रयवर्षेभ्योऽनवरतं विदेशेषु संस्कृतभाषाध्ययनाध्यापनमारब्धमस्ति। ब्रिटेन, रूस, अमेरिका फ्रांस, जर्मनी आदिदेशेषु यत् संस्कृत प्रति अभिरुचिरस्ति तत्कारणमिदमस्ति यत्-संस्कृतग्रन्थेभ्यस्तैः – नव – नव वैज्ञानिक– आविष्काराः कृताः। उदाहरणस्वरूपम्— अमेरिकीयवैज्ञानिकैः पाणिनेरष्टाध्यायीमाश्रित्य "कम्प्यूटर प्रणाली" समन्विष्टा। अधुना विभिन्नसंहिताध्ययनेन ते विभिन्ननूतन आविष्कारकरणे संलग्नाः सन्ति। डा. के.पी.एस मेननः डा. मण्डनमिश्रः तथाऽनेके प्रतिष्ठितजनाः समारोहे–उपस्थिताः आसन्।

अकादमी सचिवः श्री कृष्णसेमवालः प्रावोचद्यत्–१९८७ ख्रीष्टाब्दे संस्कृतसाहित्यसेवासम्मानयोजना प्रारब्धा। प्रतिवर्षं चत्वारो विद्वांसः सम्मान्यन्ते।

---

## पतञ्जलि संगोष्ठी म. प्र. संस्कृत अकादमी, भोपाल

अत्र२९–३० मार्च दिवसयो १९९३ ख्रीष्टाब्दस्य संगोष्ठीयं जाता। अस्या–आयोजनं अकादम्याः सचिवेन डा. श्री सिद्धनाथशर्मणा कृतम्। पतञ्जलिमाश्रित्यात्रानेकशोधलेखवाचनं जातम्। रंगमंडल-भारतभवनेन 'मालविकाग्निमित्रम्' संस्कृतनाटकमभिनीतम्। समारोहेऽस्मिन् भारतस्य विभिन्नभागेभ्यः प्रख्यातसंस्कृतविद्वांसोऽत्र समवेताः।

---

मुद्रक। प्रकाशक :—
भारतीमुद्रणालय भारती विहार, मशोबरा - शिमला १७१००७ (हि. प्र.)
स्वामी:- श्रीमती आचार्य रत्नकुमारी शर्मा,

दूरभाष : [78459 / 8-200]

अप्रैल १९९३ वैशाख २०५० — वर्षम् - ३७ अङ्कः ७

वार्षिक मूल्यम ५० रु०

R. N. 6384/57 ल—33/एस. एम. / 10/91

# संस्थान के प्रकाशन

१. फलादेश कल्पतरुः (मूल संस्कृत में)
हिन्दी अंग्रेजी टीका सहित ४० वर्ष के अनुसन्धान और अनुभव पर आधारित जातकफल कहने का अनुपम ग्रन्थ ... मू. ७०-०

२. संस्कृत कोशवाङ्मयम् (संस्कृत में)
संस्कृतकोशसाहित्यपर अनुसन्धानपूर्ण विवेचन ... मू. १७५-०

३. झञ्झा (संस्कृत में)
शेक्सपीयर के द टैम्पेस्ट नाटक का सचित्र रूपान्तर ... मू. ५०-००

४. हिमाचलप्रदशे संस्कृतस्य प्रसारो विकासश्च (संस्कृत में)
हिमाचल में संस्कृत के प्रसार विकास की विस्तृत कहानी ... मू. ५०-००

५. वैजयन्ती (हिन्दी काव्य)
नवीन प्राचीन विचारधाराओं का गीतिमय समन्वय ... मू. १५-००

६. सूनृता (संस्कृत काव्य)
आधुनिक गीतों में गुम्फित अनुपम उपहार ... मू. २५-००

७. शक्तिसौरभ (हिन्दी में)
संस्कृत लेखिकाओं का इतिहास ... ... मू. १५-००

८. विचारामृत (हिन्दी में)
आचार्य जी के विभिन्न विषयों पर जीवनोपयोगी लेख दो भाग मू. १५-००

९. पथ्यापथ्यविनिर्णय
सं. हि. टीका सहित आयुर्वेद का दुर्लभ ग्रन्थ ... मू. २०-००
(डाकव्यय सर्वत्र पृथक्)

१०. सरिता
(अभिनव सं. कथानिकाएं) — ... मू. ५०-००

११, हिमानी
(संस्कृत काव्य हिन्दी अनुवाद सहित) — मू. १००

सम्पर्क सूत्र :—

सचिव, **संस्कृत शोध संस्थान**
भारती विहार मशोबरा
शिमला १७१००७ ) हि. प्र.

# दिव्यज्योतिः



संस्कृतस्य सचित्रमासिकम्



भारतस्य युवा नेता श्री राजीव गांधी योऽस्मिन्नेव मासे नृशंस-हतकैर्हतः ।

शिमला मई, १९९३

वर्षम् ३ अङ्कः ८

# दिव्यज्योतिः

संस्थापितम् १९५६
प्रधानसम्पादकः—
आचार्य केशव शर्मा



संस्थापकाः तथा
आद्यसम्पादकाः
आचार्यश्रीदिवाकरदत्त
शर्माणः,
राष्ट्रपतिसम्मानिताः


(पत्रमिदं हि० क० सं० भा० अकादमी प्रदत्तानुदानसाहाय्यम् । पत्रिकायाः मुद्रणदोषाणां सम्पादकीयनीति-विषये च अकादमीदायित्वं नास्ति)

हिमाचल प्रदेश—पंजाब-हरियाणा-जम्मूकश्मीर मध्य प्रदेश राजस्थान—महाराष्ट्र उत्तरप्रदेश शासन-स्वीकृत केन्द्रशासनपु... स्कृतं सचित्रं संस्कृतमासिकम् ।

## पत्रस्य उद्देश्यानि तथा नियमाः

सरलसरससुबोध-साधनैः सर्वस्मिन् संसारे संस्कृतस्य प्रसारः, साहित्यान्तर्गतानां सकलकलानां समन्वेषणं, संसारस्य हितसम्पादनम्, लौकिक - अलौकिकस्वातन्त्र्यस्य प्राप्तिः ।

"दिव्यज्योतिः" प्रतिमासं पञ्चदशतारिकायाम् (आङ्गलमानेन) प्रकाशितं भवति

पत्रस्य वार्षिकमूल्यं ५० रु० अर्धवार्षिकं २५ रु० एकस्याङ्कस्य च रु० ४/... भवति ।

वर्षारम्भः अक्तूबरमासतः भवति ग्राहकः कस्मादपि मासाद् भवितुं शक्नोति ग्राहकैः, "सम्पादक, दिव्यज्योतिः, भारती विहार, मशोबरा, शिमला-१७१..." इति संकेते धनादेशेन वा. शु. प्रेषणीयम् ।

## विषयानुक्रमः

# ऋ षि प त्त न म्

मिश्रो ऽभिराजराजेन्द्रः



विलसितं शिमलानगरान्तिके
परिवृतञ्च शिवद्रुमसञ्चयैः ।
अधिमशोवरमम्बुधिशावकै-
रशबलितं ददृशे ऋषिपत्तनम् ।१।

क्वचिदनोकहसान्द्रवनीकृतै —
र्घनतमोभिरवाप्त निशाभ्रमम् ।
क्वचिदवार्यबलाहकसन्तति—
प्रचरणैः प्रतिरुद्धविलोचनम् ।२।

सलिलभारविभङ्गुरमन्थर —
क्रमपयोदसमञ्चदुपत्यकम् ।
क्वचिदनन्तनभोऽङ्गणसंस्पृश —
च्छिखरिसानुविलम्बिघनाञ्चलम् ।३।

मसृणमन्दसमीरणदोलित —
व्रततिवृक्षकदम्बकपल्लवम् ।
शिशिरसीकरमञ्जवभिषेचना —
पहृतपान्थपथश्रमगौरवम् ।४।

अतिनतोन्नतपर्वतमेखला —
समवकाशविनिर्मितमन्दिरम् ।
क्वचिदधः क्वचिदप्युपरिष्टितै —
रनृजुवर्त्मचयैः परिवारितम् ।५।

हिमकणान्तरलोलरयानिलो—
त्पुलकवेल्लितगात्रमनारतम् ।
दशनपङ्क्तिकिटत्करसूचित—
प्रबलशीतपरीतमनोबलम् ।६।

विषमबन्धुरभूधरशृङ्गक—
प्रविततं वनराजिसमावृतम् ।
कुसुमवर्णशताहृतलोचनं
विविधजातिविहङ्गविनादितम् ।७।

अभिधयैव कृतार्थितभारत
स्थितिवशादिव भावितभूतलम् ।
विहितपुण्यचयादृषिपत्तनं
तदमलं समलक्ष्यत काङ्क्षितम् ।८।

तस्मिन्मनोमृगनिबन्धनजालकल्पे
पूताश्रमे प्रवितते ऋषिपत्तनारण्ये ।
दृष्टो मया तपसि लीनमना महर्षिः
कश्चिन्महामहिमशालियशोऽवदातः ।९।

विद्याविलासलसितो विशदाननश्रीः
सारस्वतंश्रमंविवृद्धदिगन्तकीर्तिः ।
कीर्तिप्रसारपरिवर्धितदेवभूमि-
ब्रह्मर्षिसन्निभदिवाकरदत्तशर्मा ।१०।

आजीवनं विबुधवाचि कृतानुरागोऽ
धीतिप्रबोधचरणप्रचरैश्चतुर्भिः ।
विद्यां बिमुक्तिनिलयां वितरन्नुपायै
राराज्यते वयसि पश्चिमकेऽपि नव्यः ।११।

वैदुष्यवैभवधरो विनयश्शरीरी
सौजन्यमूर्तिरथ मञ्जुमनोज्ञरूपः ।
स्मेराननः सहृदयत्वनवावतारः
सत्साहितीविरचनाञ्चितसत्समज्ञः ।१२।

राष्ट्रे ऽखिले सुविदितो महितोऽपि दिव्य—
ज्योतिः प्रसार्य घनमोहतमोविदारम् ।
द्वारं विरञ्चिगृहिणीभवनस्य सिद्धं
प्राज्ञोत्तमं तमहकं नितरामपश्यम् ।१३।

संवीक्ष्य पण्डितवरं श्रितकेशवं तं
प्राचीनपाण्डुलिपिमर्मसमुद्विभित्सुम् ।
श्रद्धा परा समजनि प्रसभं हृदन्ते
विद्या द्विजेन जयिनीति वरं यदुक्तम् ।१४।

वेदत्रयीस्मृतिपुराणकथेतिहासैः
षड्दर्शनैर्ललितकाव्यकलाविलासैः ।
शास्त्रैः प्रकीर्णविषयैर्गजशालिहोत्रैः
कालं नयन् बुधवरस्तनुते शताब्दीम् ।१५।

सम्मानितस्सदसि राष्ट्रपतिप्रदत्ते—
नोपायनेन बहुशोऽप्यभिनन्दितश्च ।
सोऽयं दिवाकरनिभोऽक्षयसत्प्रकाशो
राष्ट्रं प्रकाशयति सद्गुणभूरिधाम्ना ।१६।

गौरीगुरोश्चरणपङ्कजभृङ्गभूतं
विद्याध्वरावभृथनीरनिषेकपूतम् ।
सूतञ्च देववचसां तदमोघदूतं
श्रीमद्दिवाकरकवीन्द्रमहं नमामि ।१७।

अद्याऽप्यहो सपदि गिल्गिटशारदेयैः
क्लिष्टाक्षरैर्विरचितां निगमैकशाखाम् ।
बोद्धुं श्रमेण महता प्रयतन्त एते
श्रद्धेयवन्द्यचरणाः किमतः परं स्यात् ?? ।१८।

शुभ्रो हिमैर्नगपतिस्तदहं न मन्ये
ग्रीष्मे यतो हिममपि क्षयमेति तूर्णम् ।
श्रीमद्दिवाकरयशोभिरनूनमात्रै —
र्नित्यं चकास्ति स इति प्रथितं यथार्थम् ।१९।

यावल्लसन्ति सुभगा इह देवभूमौ
श्रीदेवदारुवनिका नयनाभिरामाः ।
तावद् दिवाकरयशः प्रसरेद् दिगन्ते ऽ
न्तेवासिनां परिकरैश्च समग्रलोके ।२०।

यं देवी सुषुवे कवित्वशिखरं दुर्गाप्रसादान्निजे
क्रोडे शुक्तिनिभे विमौक्तिकतनुं बन्ध्याऽभिराजी सुतम् ।
श्रीदेवेन्द्रसुरेन्द्रमध्यममणी राजेन्द्रमिश्राभिधो ऽ
सौ स्वान्तः परितुष्टये कवयति प्रीतप्रतीताक्षरैः ।२१।

मूलं श्रीकविकालिदासकविता श्रीहर्षवाणी तनुः
पत्रं श्रीजयदेवदेववचनं श्रीबिल्हणोक्तं सुमम् ।
श्रीमत्पण्डितराजकाव्यगरिमा यस्य प्रपूतं फलं
जीव्याद्धन्त निसर्गजो ऽयमभिराड् राजेन्द्रकाव्यद्रुमः ।२२।

हिमाचलप्रदेशीये विश्वविद्यालये स्थितः
राजेन्द्रसंस्कृताचार्यः स्तौति वन्द्यं दिवाकरम् ।२३।

— संस्कृतविभागाध्यक्षः
हि० प्र० विश्वविद्यालये





एकाङ्कम्

# क्रान्तिकारिशिरोमणिः चन्द्रशेखर आजादः

| | |
|---|---|
| जन्म | लब्धवीरगतिः |
| २२ जुलाई १९०६ | २७ फरवरी १९३१ |

ले० गणेश प्रसाद मिश्रः प्राचार्यः

उ० प्र० मीरजापुर जनपदस्थ श्रीमती भागीरथीट्रस्ट आदर्श संस्कृत महाविद्यालयीयः ।

(संस्कृतसाहित्यजगति वाग्देव्या अनेके वरदपुत्राः सञ्जाताः, येषां यशःशरीरमद्यापि सरस्वती — समाराधन — तत्पराणाँ विदुषां मुखारविन्दै मुंहुर्मुहुरनुगीयते । श्री चन्द्रशेखर आज़ाद-जन्म विषये बहूनि वत मतान्तराणि

सन्ति । स्थान विषयेऽपि भ्रान्तिरुत्पद्यते । केचिदुत्तरप्रदेशस्य उन्नाम जनपदस्य बदरका ग्रामं स्वीकुर्वन्ति । केचित् मध्यप्रदेशस्य–झाबुआ जनपदसमलङ्कृतं भावरा ग्रामं मन्यन्ते अन्ते प्रधानतया तस्य भावरा ग्राम एव जनि: सुनिश्चिता । मया शंकर सुल्तानपुरी महोदय लिखित क्रान्तिकारी "चन्द्रशेखर आजाद" पुस्तकाबनेका घटना: संस्कृते पटकथारूपे वर्णिताः । कथानाकमिदमल्पमेषसामपि कृते सुकर स्यादित्यैव मनसि अवधार्य प्रस्तूयते। अनेकेषु स्थलेषु सुबोध दृष्ट्या सन्धयोऽपि न कृताः । आशासे मल्लिखितमिदं नाटकं सर्वेषा साहित्यरसोपेतानां कृते रुचिकरमवश्यमेव भविष्यति ।)

— लेखकः

## मङ्गलाचरणम्

राज्यं परित्यज्य गतो वनं यः
कन्दादिभिः प्रीतमना दयालुः ।
तत्याज पत्नीं जगतो हिताय
तं राघवेन्द्रं सततं नमामि ।१।

## प्रथमदृश्यम्

(ततः प्रविशति सीतारामः तस्य पत्नी जगरानी च ।)

सीतारामः- अहो रमणीया खलु बेला । उपवने विकसितपुष्पेषु रसपानमत्ता द्विरेफाः- भविष्ये त्वद्गर्भाद् भाविनः प्रसन्नचेतसः शिशोः सूचनां निर्दिशन्ति ।

पत्नी ।–प्राणवल्लभ ! अहमपि भारतमातुः–परतन्त्रतावेणीं मोचयितुम् एतादृशमेव पुत्ररत्नं वाञ्छामि । (गच्छति पत्नी)

(पटाक्षेपः)

(प्रतिवेशिनी प्रविश्य)

प्रतिवेशिनी—महत् सौभाग्यं महत् सौभाग्यं तत्र भवतां गृहे एकेन अद्वितीयेन बालकेन जन्म गृहीतम् ।

सीताराम :— (ईषद्विहस्य) भगवत इयम् अनुकम्पा। (अञ्जलिं बद्ध्वा) अहं भगवन्तं प्रति कृतज्ञतां ज्ञापयामि।

(पटाक्षेपः)



(उपविष्टः सीतारामः)

प्रतिवेशीदामोदरश्च

सीतारामः- दामोदर ! नवजातशिशोः ग्रहनक्षत्रादिकं विचारयितुं गत्वा मत्पुरोहितम् आकारय।

दामोदरः- यद्भवान् आज्ञापयति। इत्युक्त्वा बहिर्गच्छति, पुनः पुरोहितेन सह प्रविशति।

सीतारामः- (शिरो ऽवनमय्य) प्रणमामि श्रीमन्तं पुरोहितम्।

पुरोहितः- सीताराम। कथमहमत्र आहूतः।

सीतारामः- श्रीमन्। अद्य देवद्विजादीनां तत्र भवतां च प्रसादात् मद्गृहे बालकः जातः' तस्य कथं ग्रहनक्षत्रादिकम् इति विचारयतु भवान्।

(पुरोहितः पञ्चाङ्गमुद्घाट्य)

पुरोहितः- सीताराम ! तव पुत्रस्य जन्म वृश्चिक लग्ने जातम्। अष्टमस्थाने गुरुर्विद्यते अतः :—

स्थान हानिकरो जीवः स्थान वृद्धिकरः शनिः ॥

इति फलादेशानुसारम् अस्य बालकस्य स्वल्पमेव आयुर्विद्यते। नवमस्थाने भौमेन सह बुधः चन्द्रः सूर्यश्च। अतः पराक्रमशीलोऽपि सन् आयुषः पूर्णतां न प्राप्स्यति। अन्यत् सर्वं शोभनम् अस्य चन्द्रशेखर इति नाम भविष्यति।

अयं महान् देशभक्तः, स्वाभिमानी, निर्भयः परमतेजस्वी च भविता इत्युक्त्वा जन्माङ्गं निर्माय सीतारामाय प्रदर्शयति–

८

शु ९ ७

६

के
१०

५ शु

११
श

सू चं
४ बु

१२

मं रा

३ गु

१ २

ीतारामः- (पुरोहिताय दक्षिणां दत्वा) प्रयच्छन्तु आशीर्वाद राशीन् श्रीमन्तः

ुरोहित :—मन्त्रार्थाः सफलाः सन्तु पूर्णाः सन्तु मनोरथाः ।
आंग्लशत्रु-विनाशोऽस्तु स्वतंत्रा जननी भवेत् ॥

इत्युक्त्वा पुरोहितः गच्छति ।

पटाक्षेपः

८

(ततः मित्रैः सह प्रविशति चन्द्रशेखरः ।)

एकः- भो शेखर ! तुभ्यं किं क्रीडनकं रोचते ?

ोखर :- मित्र ! मह्यम् तु केवलं युद्धमेव रोचते । (इत्युक्त्वा लघुभुशुण्डीं काष्ठनिर्मितां भूमौ वपति ।

द्वितीय :—त्वया इदं किं क्रियते ?

चन्द्रशेखर :- यथा बीजेषु उप्तेषु क्षेत्रे शस्यानि भवन्ति तथैव वपितायां लघु-भुशुण्ड्यां लघुभुशुण्डयो भविष्यन्ति । ताभिर्देशद्रोहिणां शत्रूणां विनाशः करिष्यते । सर्वे हसन्ति

पटाक्षेपः

(उपविष्टः सीतारामः तस्य पत्नी जगरानी च । मित्रैः सह गायन् प्रविशति चन्द्रशेखरस्तमनु सर्वे गायन्ति ।)

वन्दे भारत जननीं नित्यम् ।

समारुह्य बलिवेदीं सर्वैर्वीरैर्गीतिर्गेया ।

विजयपताकामुत्तोलयितुमाज्ञा शीघ्रं देया ।३।

आङ्गलशासकानां गुटिकाभिः किं जननि ? त्वं भीता ?

आत्मा क्वापि न पश्यति तात । श्री हरिणा वै गीता ।४।

प्राणाः यान्तु सन्तु वा काये वीरा दृढा हि मर्तुम् ।

समागत्य भारतभूभागे रता जन्म सफलं कर्तुम् ।५।

स्वातन्त्र्यं समवाप्य जगत्यां याति पूर्णता कृत्यम् ।

वन्दे भारतजननीं नित्यम् ॥

माता-(जगरानी) पुत्राः । विजयिनो भवत ।

पिता-(सीतारामः) स्वतन्त्रा भवतु भारत जननी इति मे शुभकामना । यूयं च सफलतां व्रजन्तु नतशिरसा आशीर्वादं गृहीत्वा गच्छन्ति ।

( पटाक्षेपः )

वाराणस्याः राजमार्गे क्रान्तिकारिभिः मित्रैः सह दृश्यते चन्द्रशेखरः ।

चन्द्रशेखरः- क्रान्तिकारिणः बारद्वयं

मित्राणि :- जीवन्तु शरदां शतम् ,,

चन्द्रशेखरः- भारतमाता ,,

मित्राणि :- विजयताम् ,,

चन्द्रशेखर :- आङ्गलशासकाः ,,

मित्राणि :- मुञ्चन्तु भारतम् ,,

आरक्षिणः प्रविशन्ति, क्रान्तिकारिणः पलायिताः, द्वौ भयों वा सहचरा।
आरक्षिणः तान् गृहीत्वा न्यायालयं गच्छन्ति । तत्र उपविष्टः दण्डाधिकारी
आरक्षिणः सर्वैः सह चन्द्रशेखरं गृहीत्वा तत्र गच्छन्ति ।

दण्डाधिकारी :- (शेखरमुद्दिश्य) तव किं नाम ।

चन्द्रशेखर :- आजाद इति

दण्डाधिकारी :- तव पितुः किं नाम ?

चन्द्रशेखरः- स्वतन्त्रः

दण्डाधिकारी :- कुत्र गृहं विद्यते ।

चन्द्रशेखरः- कारागार एव गृहम् ।

दण्डाधिकारी :- (आरक्षिणं प्रति) अल्पवयस्कत्वात् अयं कारागारे वसितुं न योग्यः । अतः पंचदशवार वेतसो दण्डिका अस्य पृष्ठे पातयन्तु ।

आरक्षी :- व्रज दण्डं स्वीकर्तुम् ।

चन्द्रशेखर :- नास्ति मे चिन्ता दण्डानाम् ।

(निगडं दृष्ट्वा)

चन्द्रशेखर :- कथं मां बध्नासि ? अत्र अहम् स्थितोऽस्मि देहि दण्डम् ।

(जनता आरक्षिणा दण्ड्यमानं चन्द्रशेखरं साश्चर्यं पश्यति । पीडास्वर-स्थाने विजयतां भारतमाता । (भारत माता की जय महात्मा गान्धी विजयताम् । महात्मा गान्धी की जय) वेतसो दण्डेन दण्डितस्य चन्द्रशेखरस्य शरीरे रक्तबिन्दवो दृश्यन्ते किन्तु शेखरः आह हसि कण्ठ— स्वर— स्थाने वन्दे मातरम् इत्येव वदति । अन्तिमेन दण्डेन मूर्छितः भवति । अन्ते वियुज्यते अधिकारिभिः ।

(पटाक्षेपः)

जना, समाचार— पत्रे चन्द्रशेखरस्य वृत्तं पठन्ति ।

एकः- सुहृदः ! एतस्य साहसकृत्यस्य कृते चन्द्रशेखरस्य अभिनन्दनं भवितव्यम् ।

सर्वे :- शोभनम् ! शोभनम् ! अत्यावश्यकम् । आवश्यकमेव अभिनन्दनं भवितव्यम् ।

पटाक्षेप:

(मुख्यासने समुपविष्टश्चन्द्रशेखर:)

नागरिक :- चन्द्रशेखरस्य माल्यार्पणं कुर्वन् तस्मै अभिनन्दनं समर्पयति।

सर्वे :- चन्द्रशेखर आजाद: । चन्द्रशेखर आजाद: ।

सर्वे :- जीवतु शरदां शतम् । जयतात् जयतात् ।

(मित्रैः सह चन्द्रशेखर: प्रविशति)

मित्रम् :- चन्द्रशेखर ! त्वं तु एतादृश: स्थूलशरीर: सञ्जात: यत् त्वद्हस्ते सर्वकारेण मणिबन्धे योजयितुं विशिष्ठ निगड बन्धस्य व्यवस्था करणीया भविष्यति।

चन्द्रशेखर :- (क्रुद्ध्यन्) मूर्ख ? कथमेवं ब्रवीषि। चन्द्रशेखरस्य मणिबन्धे निगडबन्धनं सर्वथा असम्भवम् । शरीरं सहस्रधा भवेत् किन्तु जीवन्तं शेखरं न कोऽपि वन्दीकर्तुं समर्थ: । मित्राणि। श्रृण्वन्तु भारतीया वयं भारतमातु: स्वातन्त्र्याय सर्वदा कटिबद्धा भवेम। मायं सततं वन्दनीया: । अत: सर्वैरादरेण दृष्टव्या: । सततं कार्यरता: सर्वे स्वलक्ष्यं सफलं कुर्वन्तु

यस्य जन्म भवेद् बन्धो। मरणं तस्य निश्चितम्
आत्मनस्तु न नाशोऽस्ति ज्ञात्वा यातु रणाङ्गणे ।६।

(प्रविशति जननी)

जननी :- वत्स ! शेखर ! भोजनवेला अतिक्रामति अत: गृहं गत्वा भोजनं कुरु।

चन्द्रशेखर :- मात: । कृशरं मेऽधिकं रोचते । अतः अहमद्य कृशरमेव खादिष्यामि।

जननी :- तदेव पचितम् । चल।

चन्द्रशेखरो भोक्तुं गच्छति

(पटाक्षेप:)

(काशी विद्यापीठं पठितुं प्रविशति शेखरः-प्रणमति प्राध्यापकम् ।)

प्राध्यापकः— चन्द्रशेखर, तव रुचिः पठने न दृश्यते । तत्र किं कारणम् ।

चन्द्रशेखरः ! भो गुरो ! मदीयमेकमेव लक्ष्यं विद्यते । तद् विद्यते आङ्गलशासकेभ्यः भारतमातुः मुक्तिः । अतः अध्ययनादिषु क्वापि शान्तिः सुखं वा न प्राप्यते । अत्र मया प्रतिज्ञायते—

कार्यं वा साधयामि, देहं वा पातयामि ।

इत्युक्त्वा बहिर्निर्गच्छति ।

(पटाक्षेपः)

## द्वितीय दृश्यम्

रुग्णकक्षे आजादः सहचारिणश्च प्रविशन्ति (रुग्णः कासति)

आजादः- त्वां वन्दे । अहं भवदीयाँ शुश्रूषां कर्तुं वाञ्छामि ।

रुग्णः- किं तव नाम ?

आजादः- चन्द्र शेखर आजाद इति । किं तव नाम अहमपि श्रोतुं शक्नोमि ।

रुग्ण :- रामकृष्ण शर्मा नामाहम् ।

आजाद :- इदं शचीन्द्र नाथ सान्याल लिखितं पुस्तकं ते ददामि अस्य "बन्दी जीवनम्" इति नाम । इयुक्त्वा तस्मै पुस्तकं ददाति ।

(दत्वा) अहं क्रान्तिकारि- सदस्यान् विधातुमिच्छामि ।

सहचारिणः- सदस्यतां स्वीकर्तुं वयं तत्पराः । इत्युक्त्वा दलं संघटितं दलं विस्तारयितुं रंगूनतः पेशावर– पर्यन्तं क्रान्तिकारि-पत्राणि वितरितानि केचित् लाहौरं गत्वा भगत सिंहस्य यशपालस्य च हस्ते क्रान्तिकारिभाषोपेतं पत्रं दत्तवन्तः । वाराणस्यां स्वयमाजाद एव पत्रं वितरितवान् विद्यालयेषु छात्राणाम् अध्यापकानां उपस्थिति पंजिकायां छलमाश्रित्य पत्राणि, स्थापितानि ।

(पटाक्षेपः) क्रमशः

# राष्ट्रवीरः श्रीयुत सूरतसिंह वैद्यः

— श्रीमती सरला शर्मा
अध्यापिका



हिमालयपुत्रेषु ये स्वनामधन्याः सन्ति, तेषु जाज्वल्यमाननक्षत्र-वत् एकोऽस्ति स्वनामधन्यः श्री सूरतसिंह वैद्य महाभागः। "राष्ट्रवीर" उपाधिना विभूषितोऽयं "वैद्य जी" इत्यनेन अभिधानेन सर्वसाधारणैः जनैः संबोध्यते। भारतीयस्वाधीनतायै अनेन वीरेण निजयौवनस्य अधिकांशभागो कारागार एव प्रतिवाहितः।

अस्य महानुभावस्य जन्म तत्कालीनसिरमौररियासतस्य राजगढ़जनपदस्थिते कटोगड़ा ग्रामे अभवत्। अस्य पिता श्री देवी सिंहः, सबलः संगीतप्रियः कृषकः आसीत्। तदानीं अत्र शिक्षायाः न काऽपि व्यवस्था आसीत्। सर्वत्र अज्ञानान्धकारेण समग्राः दिशाः आच्छादिताः अभूवन्।

चिटकस्य 'फागू' नामकस्थाने आर्य समाजकार्यकर्त्ता महाशय सहीरामेण स्थापिता एका संस्कृतपाठशाला 'गुरुकुलफागू' नाम्ना कथंचिदपि स्थानीयबालकानां शिक्षापूर्तये सहायका आसीत्। स्वाभाविकरूपेण बालः सूरतसिंहोऽपि पठनाय तत्र प्रेषितः संस्कृतपाठशालायां गुरुरूपेण अलंकुर्वाणो विख्यातस्य वैदिकविदुष श्री श्रीनिवास शास्त्रिमहाभागस्य शिष्यत्वेन अनेन निजपरिश्रमेण च गुरोः कृपा स्नेहं च प्राप्तम्। तत्र अनेन 'प्राज्ञ' परीक्षा समुत्तीर्णा। अनन्तरं आयुर्वेद शास्त्रमधीतुं ऋषिकेशं प्रति गतवान् तत्र च अनेन आयुर्वेदाचार्य उपाधिः अधिगता। कुशाग्रबुद्ध्या परिश्रमेण च आयुर्वेद शास्त्रमधीत्य असौ जनतायां प्रसन्नोऽभूत। अत्यल्पकालेनैव अस्य विशुद्धं यशो सम्पूर्णहिमालयभूभागे प्रथितो बभूव।

तदानीं भारतः पराधीनः आसीत् । पराधीनतायां सुखं कस्य वा स्यात् । एष देशः कथं स्वतन्त्रोभवेदति चिन्ता अहर्निशं अस्य मनसि आसीत् । तदपि अयं अवसरं प्रतीक्षमाण तिष्ठन्नास्ते ।

सर्वप्रथमं अनेन रियासतीय अत्याचाराणां विरोधाय पर्वतीय यूनां संगठनं कृतम् । अस्य संगठनक्षमता अपि अद्भुता एव आसीत् । क्षेत्रस्य सम्पूर्णोऽपि जनः अस्य वाण्या आन्दोलितो भूत्वा प्राणानपि त्यक्तुं उद्यतोऽभूत् ।

सन् १९४२ ईशवीये वर्षे पुण्यवलः सिरमौर नृपस्य अप्रत्यक्षरूपेण च क्रूर आंगलानां विरोधकरणाय पझोता आन्दोलनं समारब्धम् । श्री सूरतसिंह वैद्यः अस्य आन्दोलनस्य मुख्य नेता प्रवक्ता च आसीत् । अस्य सर्वेऽपि सहयोगिन प्रायः अशिक्षिता एव आसन् अतः सर्वमपि पत्रादि व्यवहाराणां उत्तरदायित्वं अस्यैव स्कन्धयोः आसीत् ।

आन्दोलनं निरस्त्री कर्तुं सिरमौरराज्ञा निजसेना प्रेषिता परं अयं वीरः तदापि निर्भीक एव अतिष्ठत् सेनया अस्त भवन डाइनामाइटद्वारा भूमिसात् कृतम्, परं स्वातन्त्र्यभावनां दलितुं शक्ता नाभवत् ।

अनेन, युवकसूरतसिंहः अन्यग्रामीणवीरैः सह आरक्षिभिः ग्रहीतः । तथा कथितन्यायाधीशेन असौ आजीवनकारागारस्य दण्डेन दण्डितः । निजक्रान्तिकारिवीरैः सह अनेन पंच वर्षादपिअधिकं सततं कारागारकष्टं असहत् । यदा भारतो स्वतन्त्रो जातः तदा वैद्यः महाभागः द्वाभ्यां मित्राभ्यां सह कारागारात् मुक्तोऽभवत् ।

कारागारे निवसन् वैद्य महाभागेन उर्दू भाषायाः अध्ययन कृतम । संस्कृतसाहित्यस्य तु अयं परमविद्वान् एव आसीत् । चिकित्सकः सन् संस्कृत भाषायाः उपरि अस्य पूर्णाधिकारः आसीत् गीतायाः तु अयं अधिकारी— प्रवक्ता एव आसीत् । न केवलं प्रवक्ता अपितु तदनुसारेण जीवनस्य अधिष्ठाता अपि आसीत् । राजर्षिजनकवत् जीवनं प्रति अस्य समता दृष्टिरासीत् ।

मूलतः श्री वैद्यः कविहृदयः लेखकश्च आसीत् । कारागार लिखिता तस्य कविता—

मेरी प्यारी जेल ने, हंसना हमें सिखा दिया-
रोना हमें मना किया। तसलों की ठनका कार ने,
बेड़ियों की झनकार ने मरना हमें सिखा दिया।

अद्यापि ग्रामीणक्षेत्रेषु एवंमेव गीयते। पहाड़ीभाषायामपि तस्य अनेका: गद्यपद्यरचना: साहित्यस्य शोभां आवहन्ति।

हिमाचलस्य निर्माता श्री यशवन्तसिंह परमार: तस्य अभिन्न मित्र:— आसीत्। अद्य हिमाचल प्रदेशस्य यत् स्वरूपं दृश्यते तस्य निर्माणे डा० परमारेण सहैव श्री सूरतसिंहस्य नामाऽपि स्वर्णाक्षरे लिखितोऽस्ति श्री वैद्य: विधानसभाया: सदस्यतां अलंचकार। अनेन हिमाचल खादी बोर्डस्य अध्यक्षता अपि अलंकृता। विधानसभा सदस्य रूपेण अनेन निजव्यवहारेण आदर्शपरम्परा स्थापिता। खादी अध्यक्ष रूपेण अनेन या—या परम्परा स्थिरीकृता स्ता: अद्यापि परवर्तिभि: आदर्शसंहितारूपेण गृह्यन्ते। तस्य जीवनं सर्वेषां कृते प्रकाश स्तम्भवत् अद्यापि दिशानिर्देशस्य कार्यं करोति।

विगतवर्षे वैद्य जी, अशीतिवर्षाधिक्यजीवनं प्रपूर्य परम सायुज्यं प्राप्तवान्। शरीररूपेण असौ अद्य अस्माकं मध्ये नास्ति परन्तु तस्य शिक्षा, तस्य कार्याणि, तप: त्यागश्च अस्मान् निर्दिशतीति। इत्येव तस्य महानता इति—

— ग्राम-चमेजी, पत्रालय-रड़ू घाटी,
तहसील—राजगढ़ ज़िला सिरमौर
(हि. प्र.)



# अवश्यमेव भोक्तव्यम्

योगेश कुमार शर्मा



एका पुरातनी कथा वर्तते । कस्मिश्चिद् ग्रामे महदकालोऽपतत् । तत्रत्यानां जनानां जीवनान्यपि संकटं प्राप्नुवन् । उदररक्षानिमित्त वृक्षाणां पत्राणि खादितानि । पत्राण्यपि समाप्तिं गतानि । बुभुक्षावशात् मृगयां कुर्वन् एकस्याः नद्याः तटे एकं मकरं दृष्टवन्तः । सर्वे तस्य मांसं स्वपात्रेषु निधाय गृहं गतुमारब्धवन्तः । तस्मिन्नेव ग्रामे एकः ब्राह्मणः सपत्नीक प्रतिवसति स्म । तौ शाकाहारिणावास्ताम् ब्राह्मणी स्वपतिमपि किंचित् खाद्यमानेतुं प्रेरितवती । ब्राह्मणः अर्धमृतस्य मकरस्य समीपं गत्वा दृष्टवान् यत् स तु येन केन प्रकारेण अङ्गानि चालयति । सः मकरस्येमां दशां द्रष्टुं नाशक्नोत् । शनैः शनैः सः तस्य मुखपार्श्वे गतवान् दयाभिभूतः ब्राह्मणः बुभुक्षितोऽपि प्राणवतः मकरस्य मांसं गृहीतुं नाशक्नोत् म्रियमाणः मकरः तं बुभुक्षितं दृष्ट्वा तमसि मांसं नेतुं कथितवान् परं सः तथाकर्तुं न स्वीकरोति । मकरः तं दयाभिभूतं दृष्ट्वा तस्मै पुरस्कारस्वरूपं द्वे रत्ने (मुद्राविशेषं) यच्छन् अवदत् यत् त्वं एताभ्यां धनवान्

भविष्यसि परं त्वं एकं रत्नं मां निवर्तयिष्यसि तदैव मकरस्तु मृतः ब्राह्मणश्च मकरात् प्राप्ताभ्यां रत्नाभ्यां महतीं 'समृद्धिं' प्राप्तवान्।

मकरः द्वितीयंजन्म एकस्य राज्ञः गृहे अलभत । शनैः शनैः सोऽपि राजसत्तामलभत्। एकदा स राजा स्वरक्षकान् मृगयार्थमादिष्टवान्। रक्षकाः महत्प्रयत्नानन्तरम् कमपि पशुं नालभन्। राजाज्ञानिषेध भयवशात् ते नदीतीरात् एकं नरशवं गृहीत्वैव राजानं गतवन्तः। ते तं शवं पचित्वा राजानं समर्पितवन्तः। तन्मांसं तस्मै अतीवारोचत्। राजा प्रधानरक्षकमाहूय तादृशमेव मांसमानेतुं पुनरादिष्टवान्। राजा एकां सूचीमपि तस्मै दत्तवान् यस्यां तेषामेव मकरभक्षकाणां नामान्यासन् ये पूर्वजन्मनि तस्य मांसमखादन्। सः क्रमशः तानाहूय हत्वा च तेषां मांसमखादत्। एकस्मिन्दिने ब्राह्मणस्यापि तत्रैव उपस्थितिः संजाता यस्मै सः पूर्वजन्मनि रत्ने दत्तवान्। राजा पूर्वप्रतिज्ञानुसारं तस्मात् एकं रत्नमयाचत्। ब्राह्मणोऽवदत्—"न हि श्रीमन्! तत्तु मया मकरायैव दातव्यम्" इति। राजा अवदत्—"अहमेवासौ मकरः, आनय मम रत्नमिति।" परस्मिन्दिने ब्राह्मणः तं रत्नमानीय राज्ञे समर्पयत्। राजा तस्य ब्राह्मणस्य आर्जवेन प्रभावितः तं रत्नमपि सहर्षं तस्मै प्रदत्तवान्। ब्राह्मणः तल्लब्ध्वा आनन्दातिरेकं प्राप्य च राज्ञः साधुवादं कृत्वा गृहमगच्छत्।

"अवश्यमेव भोक्तव्यं कृतं कर्म शुभाशुभम्। अपि च पञ्चतन्त्रे"—

त्रिभिर्वर्षैः त्रिभिर्मासैः त्रिभिर्पक्षैः त्रिभिर्दिनैः ।
अत्युग्रपुण्यपापानामिहैव फलमश्नुते ॥

— द्वारा लेखराम शर्मा
राजकीय संस्कृत महाविद्यालय,
सोलन (हि० प्र०)
पिन—१७३२१२

★

# काश्मीरकूटम्

प्रो. हरिश्चन्द्र रेणापुरकरः गुलबर्गा



भूस्वर्गो ऽसौ भरतजनपदस्योत्तमाङ्गं मनोज्ञं
दीर्घं सारस्वतविलसितं काव्यसाहित्यकेन्द्रम् ।
क्षेमेन्द्रादिप्रवरकविमूर्धन्यजन्मस्थली च
कश्मीरं सम्प्रति विधिवशाद् दुःखसिन्धौ निमग्नम् ।१।

कश्मीरेऽपि प्रियभरतभूशीर्षभूते प्रदेशे
शोच्या जाता स्थितिरतितरां पापकूटप्रबंधात् ।
विच्छेतुं तं भरतविषयाद् घोरदुष्कृत्यजातैः
पाकः सम्प्रेरयति सततं द्रोहिकश्मीरयूना ।२।

तेनाक्रान्तो भरतविषयः पूर्वमासीत् त्रिवारं
तत्रात्यन्तं विफलघटनैः खण्डिताशैश्च पाकैः ।
शस्त्रैः सज्जा भ्रमितयुवकाः प्रेषिता घातहेतो—
र्दत्वा तेभ्यो विकटविकरालास्त्रशिक्षां च वित्तम् ।३।

कश्मीरे मुस्लिममतजुषः प्रायशः सन्ति लोकाः
पाकिस्ताने भवतु विलयस्तस्य तस्मादितीव ।
तैके यत्नाः प्रखरसमरास्तेन नूनं कृतास्त्रिः
लोकैर्व्यर्थं विहितमखिलं लोकतन्त्रैकनिष्ठैः ।४।

जात्यन्धान् मुस्लिमयुवजनान् शस्त्रसज्जान् विधाय
हिंसाहत्यादिकसममहाभीषणैर्घोरकृत्यैः ।
कृत्वाऽशान्तिं प्रियभरतभू मौलिभूतं प्रदेशं
त्यक्त्वा हिंदून् गमयितुमिव कूटकूटं व्यधायि ।५।

जात्मन्धान् मुस्लिमयुवकान् शस्त्रसज्जान् विधाय
हिंसाहत्यादिकसममहाभीषणैर्घोरकृत्यैः ।
कृत्वाऽशान्तिं प्रियभरतभू मौंलिभूतं प्रदेशं
त्यक्त्वा हिन्दून् गर्मायनुमिव क्रूरकूटं व्यधायि ।५।

कश्मीरैः मुस्लिमबहुदलैः पाकशस्त्रास्त्रसज्जै —
श्चारैः स्पष्टं बहुकृतिपरैर्घातिता नैकलोकाः ।
पाकोद्घोषैर्नगरसरणौ यात्रया सञ्चरद्भि —
र्दग्धमस्त्रैर्वीणिकभरतभूर्मानकेतु नृंशसैः ।६।

हिन्दूनां मन्दिरमठगुरुद्वारपूजास्थलानि
दुष्टैर्ध्वस्तान्यपि च सकलं लुण्ठितं वित्तजातम् ।
उच्चैरुत्तोलित इह शठैः पाककेतुः सगर्वं
घोरं चैतद्दुरितमभवत् पश्यतः शासनस्य ।७।

दुष्टातङ्कव्यथितसुजनैर्लक्षशः पण्डितैश्च
भीत्या त्यक्ता निजजननभूर्नन्दनं भूतलस्थम् ।
देवानां भूरहह ! समंभूद् दैत्यभूमिः पुनश्च
शीर्षं नूनं भरतजननैः सङ्कटापन्नमद्य ।७।

केन्द्रामात्यप्रवरदुहिता रूबिया नाम शिष्या
"दोरेस्वामी" इति च विदितो वार्तिमुख्याधिकारी ।
विद्यापीठाधिपतिरपि तैर्बन्धकत्वेन धृत्वा
नानाहत्याकृत इति धृता मोचिताः सापराधाः ९।

पाकेनैवं प्रखरसमरं गुप्तमारब्धमस्ति
सीमाक्षेत्रे प्रचुरपतना स्थापिता तेन सज्जा ।
अणवस्त्राणामपि च रचना भीषणानां प्रवृत्ता
भाव्यं तस्मादवहिततरैर्नायकैः भारतीयैः ।१०।

पाकैः सार्धं खलु दृढतया नायकैर्वर्तनीयं
पाकिस्तानं भरतविषयारातिभूतं सदैव ।
शान्त्या तिष्ठेदिति तु सुतरां नैव तत्कल्पनीयं,
विस्मार्यं नो कथमपि महाभारतं भारतीयैः ।११।

लज्जाहीनैः कुटिलमतिभिः सर्वसङ्केतभिन्नैः
शक्त्याहर्तुं विहितकपटैर्भारतस्योत्तमाङ्गम् ।
कर्तुं दुःसाहसमिह पुनश्चिन्तयिष्येय पाकै-
स्तस्माद् भाव्यं विषयमुखरैरप्रमत्तैश्च लोकैः ॥१२॥

पाकिस्तानप्रकृतिरिपुता घोरवैरानुबन्धो
बाङ्ग्लामुक्त्या विघटनकृतः वद्धलक्ष्यैश्च पाकै—
विच्छेलतु भारतजनपदं वद्धलक्ष्यैश्च पाकै—
नूनं दुःसाहसमिह पुनः कारयिष्यत्यवश्यम् ॥१३॥

इत्थं देशे प्रबलविकरालोग्रवादं प्रचोद्य
हत्यासत्रप्रचुरशिबिराण्येव पाके प्रचाल्य ।
निष्पापाणामगणितजनानां च हत्यां विधाय
पाकैरागस्कृतमिति जगद् बोधनीयं प्रमाणैः ॥१४॥

आङ्ग्लाम्रीकाजनसुविदितं पाकधौर्त्यं हि सद्यो
जात्यन्धान् मुस्लिममतजुषो बोधयित्वा च देशान् ।
पाके सेनाशिबिरनिकरं नूनमाक्रम्य नाश्यं
पाकः सम्यग् भरतमुखरैः पाठनीयश्च पाठः ॥१५॥

कश्मीराख्या कठिनजटिला भीषणोग्रा समस्या
ह्यस्मन्नेतुह्यनुचितमहोदारनीतेर्विपाकः ।
पाकाक्रान्तेः सरलविषयं राष्ट्रसंघं प्रणीय
व्यर्थं चक्रे कुटिलविषयामैक्यकूटाभिलक्ष्यम् ॥१६॥

पाकिस्तानो भरतविषयश्चेति राष्ट्रं विभज्य
सामन्ता ये शतश इह तैर्घोषिता आत्मतन्त्राः ।
संयोक्तुं वा उभयविषयोरेकदेशेन सार्धं
स्वायत्तं वा भवितुमिह तैराङ्ग्लधूर्तैः सहेतु ॥१७॥

कृत्वा तेषां विलयमिह तैर्लौहसारैः पटेलै—
राङ्ग्लानां तत खलु विफलतां प्रापितं कूटजालम् ।
काश्मीरं तु प्रहरणबलाद् भारताद् हर्तुकामै—
राक्रान्तं सम्मिलितमपितद् भारते पाकधूर्तैः ॥१८॥

युद्धं घोरं तुमुलमभवद् देशयोर्दीर्घकाले
पाकिस्तानप्रचुरपृतनायां च भङ्गोन्मुखायाम् ।
अस्मन्नेत्रा सपदि कलहः प्रापितो राष्ट्रसंघं
तेनादिष्टा समरविरतिर्मोचिता नैव भूमिः ।१९।

काश्मीराख्यं भुवनविदितं नन्दनं भारतीयं
पाकिस्तानप्रतिभयकरालोग्रदंष्ट्रान्तरालात्
कृत्वा मुक्तं प्रथममखिलं राहुपाशादिवेन्दुं
गन्तव्याऽऽसीद् भुवनपरिषच्छासनायाभियोक्तुः ।२०।

एषा संस्था यदपि सुतरां स्थापिता विश्वशान्त्यै
रूसाम्रीकात्रिभुवनजयाकांक्षिणोर्देशयो सा ।
स्पर्धाकेन्द्रं प्रबलमभवन्न्यायनिष्ठा न तस्थौ
तन्निर्णीता नहि समभवत् काऽपि लोके समस्या ।२१।

मुख्यामात्यः प्रवरमुखरः श्री जवाहारलालः
आश्वस्तः सन् निशितशायितं राष्ट्रसंघे क्षमाय ।
सिद्धप्रायं भुवनसदसं प्रश्नमेनं निनाय
संसक्तश्च प्रबलविषयस्वार्थसत्ताकुचक्रे ।२२।

कामं सम्प्रेषितमिहदलं प्रेक्षकाणां तथाऽपि
पाकेनागस्कृतमिति समाघोषितेऽप्यत्र नूनम् ।
गन्तुं पाकं नहि निरदिशत् कश्मीराद् राष्ट्रसंसद्
पाकाक्रान्तो भवति सुतरां कश्मिराशस्तृतीयः ।२३।

आक्रान्तेत्थं घुषितमभवद् राष्ट्रसंघेन पाकः
पाकाक्रान्तो भरतविषयो मोच्यते नैव यावत् ।
तत्रस्थानां जनमतपरिज्ञानमप्यस्त्यशक्यं
चत्वारिंशत्समधिकसमापूर्वमुद्घुष्टमेवम् ।२४।

पाकिस्तानाक्रमणविषयं नूनं विस्मार्य बुद्ध्या
हत्राङ्ग्लाम्रीकासदृशविषयैः स्वार्थमात्रैकनिष्ठैः ।
जात्यन्धैर्मुस्लिमजनपदैर्लौकिकेस्लामवादे—
र्न्यायापेतोऽप्यनृतविनयो धार्यते पाकपक्षः ।२५।

पाकामात्यैः स्मरशरणे: सारयित्वाऽऽत्मदोषं
नानामञ्चेष्वविरततयोत्थाप्यतेऽयं विवादः ।
मुस्लीमानां विविधपरिषन्नैकसम्मेलनेषु
प्रश्नोऽयं तैः पुनरपि समुत्थापितो राष्ट्रसंघे ।२६।

प्रस्तावांस्तान् भुवनपरिषत्पारितांल्लङ्घयित्वा
स्वाक्रान्तं कश्मीरजनपदं स्थापयित्वाऽऽत्महस्ते ।
चित्र ! पाको भुवनसमितिं साभियोगं प्रयाति
ह्यान्ताराष्ट्रीकरणघटनं तस्य मोघं विधेयम् ।२७।

यूनो रक्षापरिषदि निषेधाधिकारं प्रयुज्य
कश्मीरं भारतजनपदे रक्षितुं नैकवारम् ।
रूसेनासीद् भृशमुपकृतं किन्तु भिन्नं सदद्य
किं तत्कुर्यादिमितवदशायां न शक्यं प्रवक्तुम् ।२८।

जात्यन्धा मुस्लिमजनपदाः सत्यपक्षं विहाय
पाकस्यैव प्रबलमपसंस्तंभनं संविदध्युः
आङ्ग्लाम्रीकादिकजनपदा भीषणोस्लामवादं
प्रत्युद्बुद्धा अनृतवितथं नैव संधारयेयुः ।२९।

पाकिस्तानो भरतविषयस्याङ्ग भूतेभ्य एव
मुस्लीमेभ्यः कशमिरभुवः स्वात्मनिर्धारणस्य
दातुं सर्वाधिकृतिपरन् भारतं वक्ति चित्र !
प्रत्याख्याय स्वविषयगतान् सिन्धलोकांस्तदेव ।३०।

देशस्यान्तर्गतजनगणायात्मनिर्धारणस्य
दीयन्ते चेदधिकृतिवरास्तर्हि सर्वेऽपि देशाः ।
विच्छिन्नाः स्युः सकलभुवने विप्लवाः संभवेयुः
शिष्टं पाकं ह्यपि न भविता विश्वशान्तिर्विनश्येत ।३१।

कश्मीरं भारतजनपदस्याङ्गभूतं ह्यभिन्नं
कर्तुं देशाद् विघटितमलं कोऽपि शक्तो न लोके ।
पाकैस्त्याज्यो भवति सरलं कश्मिराक्रान्तभागः
इत्थं पाकः सकलभुवनं चापि सम्बोधनीये ।३२।

बाङ्ग्लामुक्ति प्रखरसमरे निर्जिता पाकभूमिः
प्राप्ताश्चास्मान् शरणमिह ते सैनिका लक्षसंख्याः ।
कश्मीरात्प्राक् कितवरिपवे नैव देया अभूवन्
सिम्लासन्धावपि स गणनीयो न साम्यस्तरेण ।३३।

यस्योल्लेखो भवति बहुशः कश्मिरस्य प्रसङ्गात्
सिम्लासन्धिर्नहि स समभूत् कश्मिरार्थं कदाचित् ।
बाङ्ग्लायुद्धे विनितविषयं बन्दिनश्चाधिकृत्य
पाकाध्यक्षै भरतविषयामात्यवर्यैः कृतोऽभूत् ।३४।

प्रस्तावाभ्यां भुवनसमितौ पूर्वनिर्धारितस्य
तस्योल्लेखः कथितसिमलासन्धिपत्रे कृतः किम् ।
येनाक्रान्ताक्रमकविषयौ तुल्यभावावभूतां
निर्णीतः प्राक् पुनरिह समुत्थापितोऽसौ विवादः ।३५।

अस्मद्राष्ट्राहितमतितरां सन्धिनाऽभूदनेन
पाकं ह्याक्रामकमिति समाघोष्य काश्मीरभूमिम् ।
त्यक्तुं रक्षापरिषदि पुरा स्वीकृतौ तौ निदेशौ
व्यर्थीभूतावपि समपदे स्थापितश्चाततायी ।३६।

पूर्वं पाकाधिकृतविषयस्यैव वादो बभूव
सन्धेरूर्ध्वं भवति सकलायाश्च कश्मीरभूमेः ।
सिम्लासन्धौ पुनरपि समुल्लेखनात् कश्मिरस्य
जातोत्साहो मुहुरिह समुत्थापयत्येव पाकः ।३७।

कश्मीराख्यः किमिति विषयः पूर्वनिर्णीतकल्प
सिम्लासन्धौ पुनरिह समावेशितो नैव जाने ।
प्रस्तावौ तौ स्मरणसरणेः सारयित्वाऽनुकूलौ
सिम्लासन्धेः शुकवदिह रारट्यते व्यर्थपाठः ।३८।

कश्मीरे वै भरतविषयस्याङ्गभूतेऽपि पूर्वं
भिन्नः केतुर्भरतविषयात्संविधानं विविक्तम् ।
कश्मीरार्थं पृथगनुमतं भारतीयाश्च तत्र
वस्तुं क्रेतुं ह्यचलविभवं शासनात्सन्निरुद्धाः ।३९।

कश्मीरार्थं पृथगिव विधिर्नायकैर्भारतीयै
मुस्लीमानामनुनयपरः स्वीकृतः संविधाने
तस्मादैक्यं भरतविषयेनैव तेषां न जातं
विश्लिष्टास्ते खलु समभवन् भारताद्ययावत् ।४०।

चत्वारिंशत्समधिकसमा भारतात्कश्मिरस्य
पार्थक्यं रक्षितमिहमुधा नायकैर्भारतीयैः ।
कश्मीरीया मसलिमजना भारतेनैक्यभावं
नैव प्रापुर्हृयपि तु नितरां भिन्नभावं च जग्मुः ।४१।

कश्मीरैक्य भरतविषयेणात्र चेदाचरिष्यन्
कश्मीरं मुस्लिम बहुलराज्यं हि नास्थास्यदेव ।
नैवास्थास्यत् कठिनजटिला कश्मिरीया समस्या
नष्टे मूले भवति सुतरां नैव पुष्पं फलं वा ।४२।

प्रस्तावौ तौ भुवनसदसा पारितौ पूर्वमेव
राष्ट्राकांक्षानुसरणपरौ सर्वमेवानुकूलौ ।
मोक्तुं युक्त्या सुकुशलतया कश्मिरं पाकपाशा—
दस्मद्धुर्यैः किमिव नहि तावद्ययावत्प्रमुक्तौ ।४३।

क्यूबाचीनारबवियतनामाफ्रिकाकोरियाणा —
मन्येषां च प्रचुरविषयानां हि नैकाः समस्याः ।
सम्यक् संसाधयितुमितरैर्यत्नमातिष्ठमाने —
रस्मद्धुर्यैः किमपि फलवत् कश्मिरार्थं कृतं नो ।४४।

यूनोरक्षासमितिदृढसङ्कल्पसर्गानुसारं
मुक्तिः पाकाधिकृतविषयस्यास्ति मुख्या समस्या ।
तद्दायित्वं समुचिततया राष्ट्रसंघेन वोढुं
नूत्ना नीतिः समरसरणिर्भारतेनानुसार्यं ।४५।

— पाटीलनिवासा मोहनलाज समीपं, गुलबर्गा ५८५१



# "मूर्तिपूजा भारतीयधर्मस्य मूलम्"

सुरेन्द्रमणि ममगाईं



भारतीयधर्मस्य मूले मूर्तिपूजायाः विशिष्टं स्थानं विद्यते । अत्र साधकैः निज निज इष्टदेवानां मूर्तिरूपेण पूजां विधाय अनेका लौकिकपारलौकिकाश्च सिद्धयः प्राप्ताः । अस्मिन् वैज्ञानिकयुगे उक्तं कथनं कांश्चिज्जनान् अवैज्ञानिकं अन्धविश्वासयुक्तं च प्रतीयेत, परं निश्चित रूपेण साधकैः निजश्रद्धाविश्वासशक्तिबलेन च निर्जीव-मूर्तिषु साकारईश्वरस्य दर्शनं कृतम् ।

मूर्तिपूजायाः विषये शास्त्रेषु अनेकप्रमाणानि विद्यन्ते । काष्ठपाषाणस्वर्णरजतआदिधातूनां मूर्ति विरच्य श्रद्धाविश्वासपूर्वकं ये पूजयन्ति अर्चयन्तिच तेषु भगवान् विष्णुः प्रसन्नो भूत्वा सिद्धि प्रयच्छति । यस्य देवस्य पूजा येन भावेन क्रियते तथैव तद्वदेव सिद्धिरपि जायते । निजश्रद्धाभावानुसारेणैव जनो फलं च लभेत श्रुतिस्मृतिपुराणइतिहासेषु च सर्वत्र मूर्तिपूजायाः विधानं दरीदृश्यते । वेदेषु विष्णुः 'सहस्र पादः' सहस्रशीर्षाः इत्यनेन अभिधानेन उल्लिखितोऽस्ति । लिङ्गार्चनतन्त्रे कथितं यथाः —

"वरं प्राणपरित्यागः शिरसो वापि कर्तनम् ।
अनभ्यर्च्य न भुञ्जीत भगवन्तं त्रिलोचनम् ॥"

मूर्तिपूजायाः परम्परा न केवलं भारतवर्षे अपितु समग्रसंसारे यत्र-तत्र-सर्वत्रैव विभिन्नरूपेण निज २ जातिसाम्प्रदायपरम्परा-मविकृत्य पश्यामो वयम् । उत्तरी अफ्रीकायाः प्राचीन 'इजिप्त' मिश्रदेशे 'असिरिश' 'आशिस' नाम्नोः स्त्रीपुरुषयोर्लिङ्गानि अद्यावधि पूज्यन्ते

शिवसदृश 'अशिरसस्य' मस्तके सर्पं, हस्ते च त्रिशूल तथा च अङ्गे व्याघ्रचर्मं शोभते । असौ एपिस नामकस्य वृषभस्य उपरि स्थितोऽस्ति । तस्मिन्नेव देशे वृषभ सदृश एक वृक्ष भवति यस्य पत्राणि प्रतिदिनं तानुपरि पूजावसरे अर्प्यन्ते । दुग्धेन च स्नापयन्ति अस्माकं देशे यथा 'काशी' पवित्रस्थानं मन्यते तथैव तत्र 'मेमाफस' नामकं स्थानं पवित्रं विद्य

'डेहोमी' इत्याख्यअघोर पन्थिनो मनुष्यभक्षिणो जनाः 'लेप' नाम्नः काष्ठलिगं नद्याः तटे अवस्थाप्य त पूजयन्ति । उत्तरी अरब क्षेत्रे विभिन्नजातिसमूहः पुरुषस्त्रियोर्चिन्हं पूजयति । कुदृष्टि निवारणाय द्वारेषु अनयोश्चिन्हानि च उत्कीर्णानि ।

'ग्रीस' यूनान आदिदेशेषु अद्यापि लिंगपूजा अवाधरूपेण क्रियते। 'वेकस' 'प्रयेरास' शिवस्यवमस्ति । एरिक्स' विनसश्च देवी अथवा गौर्याः मन्दिरौ स्तः । इटली देशस्य रोमनगरे अद्यापि लिंगपूजा भवति । आयरलैण्ड देशे ग गृहाणां कपाटेषु देव्याः मूर्तयः शोभन्ते। स्काटलैण्डस्य 'ग्लासको' नगरे सूर्य मन्दिरस्य आभ्यन्तर भागे स्वर्ण पत्र विघटिता लिङ्गमूर्तिः शोभते । फ्रांस सदृश विकसितदेशेऽपि सौभाग्याय, सुदर्शनभर्ता प्राप्यते रायोग्यवृद्धये च स्त्रियः स्त्री चिन्हस्य पुरुषाश्च पुरुषचिन्हस्य दर्शनानि कुर्वन्ति ।

अरबदेशे मुहम्मदस्य जन्मनः प्रागेव 'लातमनात अल्लात' तथा च अल्लुजात नामक महादेव देव्यश्च पूज्यन्तेस्म । मक्का' नामक पवित्रतीर्थस्थले सगअस्वद' अथवा मक्केश्वरस्य पूजायाः परम्परा अद्यापि दृष्टिगोचरा भवति मक्कायाः 'जम्-जम्' कूपेऽपि लिङ्ग मूर्तिः वर्तते । फिनिशिया देशे 'बाल' नाम्नः स्त्री रूपिणीं सर्पिणीं जनाः पूजयन्ति । इजरायलदेशे, यहूदीजनानां प्रतिष्ठिता लिंगमूर्तिः विद्यते यस्या स्पर्शानन्तरमेव जनाः शुभकार्याणि प्रारम्भते ।

जापानी जनाः यद्यपि बौद्ध धर्मावलम्बिनः सन्ति परं तेऽपि लिङ्ग पूजां कुर्वन्ति । तत्र देशे 'साइस' नगरे सूर्य-लक्ष्मीसंज्ञको लिङ्गौ पूज्येते । ईरानदेशे मृतिकांतल प्रदीप्तज्वालामयलिंगस्य पूजाविधान अस्ति ।

नास्त्यत्र सन्देहस्य यत् प्राचीनसमये सम्पूर्णसंसारे, भारतीयधर्मः निज वैशिष्ट्येन विद्यमानमासीत । 'अम्बष्ठ' निषाद तुल्यं 'शक' 'यवन' 'चीन' आदिजातयोऽपि ब्राह्मणादिवर्णैरेव समुत्पन्नाः सन्ति, मनुस्मृतेः दशम् अध्यायः अस्य स्पष्टं, प्रमाणं अस्ति ।

यावत् पर्यन्तं, मूर्तीनां, वेदमन्त्रादिभिः मन्दिरेषु प्राण प्रतिष्ठा न भवति तावत् पर्यन्तं हाटनगरेषु मूर्तिकारा जनाः तान् विक्रेतुं प्रभवन्ति । एषा धार्मिकी मर्यादा विद्यते, परम्परा च अस्ति । परन्तु यदा मन्दिरेषु तासां प्राणप्रतिष्ठा वेदादिमन्त्रैः अभिजायते तदा मूर्तीनां विक्रय वर्जनीयं अधार्मिकं च भवति न कोऽपि तान् विक्रेतुं शक्यते । प्राण प्रतिष्ठां बिना मूर्तयः देवक' 'मह्मक' 'विष्णुक' 'शिवक' आदि भिन्न भिन्न सम्बोधनेन सम्बोध्यन्ते ।

विलक्षणोऽयं अस्माकं देशः । आस्तिकानां तु वार्ता एव का, नास्तिकैरपि अत्र मूर्तीनां पूजा क्रियते । सम्भवतः एषा परमविभूतीनां एव कृपा अस्ति । यत् अस्मिन् घोरभौतिकयुगेऽपि भारतीयाः मूर्ति-पूजनं कृत्वा शान्तिं सुखं च लभन्ते । एवं समस्तमानवमात्रस्य कल्याणाय निजदैनिकप्रार्थनासु श्लोकमिमं पठन्ति --

सर्वे भवन्तु सुखिनः सर्वे सन्तु निरामयाः ।
सर्वे भद्राणि पश्यन्तु मा कश्चिद् दुःखभागभवेत् ॥

— इति —

— राजकीय उच्च विद्यालय बाम्बीधार,
तह० राजगढ़ जिला सिरमौर
(हि० प्र०)





ग्रन्थसमीक्षा

## 'सन्धिदर्शनम्X'

डा. रूपनारायणपाण्डेय:



। विश्वसंस्कृतिललामभूताया भारतीयसंस्कृते: प्राणभूतानां वेदानां सरलतयाध्ययनार्थं महर्षिभिर्वेदाङ्गानि प्रणीतानि । वेदाङ्गेषु व्याकरणस्य प्राधान्यं वर्तते । संस्कृते व्याकरणस्य विश्वविश्रुतो ग्रन्थोऽस्ति पाणिनिसूत्रम् (अष्टाध्यायी वा) पाणिनिसूत्रे कात्यायनस्य वार्तिकानि, पतञ्जलेर्महाभाष्यम् काशिकादयश्च ग्रन्था: विराजन्ते । अष्टाध्यायीसूत्रम् विहाय विषयक्रमम्‌चा-नुगम्य विद्वद्वरैरूपावतार:, प्रक्रियाकौमुदी, सिद्धान्तकौमुदी मध्यसिद्धान्तकौ-मुदी, लघुसिद्धान्तकौमुदी चेत्यादयो ग्रन्था: पाणिनीयव्याकरणस्य प्रबोधाय प्रकाशन्ते । व्याकरणपरिज्ञानस्य परम्पराद्वयम (अष्टाध्यायं क्रम: प्रक्रिया

---

X सन्धिदर्शनम् , रचयिता-डा० चल्ला, लक्ष्मीनारायणशर्मा ।
प्रकाशक:—भारतमुद्रा, पुरनाट्टुकरा, तृशूर् ६८०५५१
मूल्यम् — २५/- पृ० सं. — ७०+६, प्रथमं प्रकाशनम्—जून, १९९१

ग्रन्थक्रमो विषयक्रमो वा) आधुनिकानां कृते सुन्दरं न वर्तते । तैस्तत्र क्लेशोऽनुभूयते । एवं विचार्य व्याकरणविद्भिराङ्ग्लभाषया हिन्दीभाषया स्वमातृभाषया चानेकानि पुस्तकानि विरचितानि संस्कृतव्याकरणस्य सुबोधाय । संस्कृतव्याकरणस्य ज्ञानं संस्कृतभाषयैव करणीयमिति विचार्याधुनिकरीत्या कैश्चिद् विद्वद्भिः प्रयत्यते । अस्मिन्नेव प्रयत्ने डा० लक्ष्मीनारायण शर्मणा सन्धिदर्शनं नाम पुस्तकं व्यरच्यत ।

सन्धिकोशात्मके लघुग्रन्थेऽस्मिन् अकारादिक्रममवलम्ब्य सर्वेषां सन्धीनां सापवादं पाणिनिसूत्रसङ्केतेन सह विवरणं विद्यते । प्रथमे दर्शने (विभागे) स्वरसन्धेः, द्वितीयेऽनुस्वारसन्धेः, तृतीयेविसर्गसन्धेः, चतुर्थे च हल्सन्धेः सोदाहरणं विश्लेषणं शोभते । ग्रन्थादौ – आमुखं, प्रकाशकीयं शुभाशंसा च, ग्रन्थान्ते चैकपृष्ठात्मकं परिशिष्टं सन्ति ।

आमुखे ग्रन्थकृता यथा स्वयमेवाभिहितम्–'यद्यपि पाणिनीयाध्ययनं विना सन्धिज्ञानस्य पूर्णता न सम्भवति, तथापि तत्पूर्वसोपानरूपेण सन्धिदर्शनमिदं छात्रानुपकरिष्यतीति विश्वसिमि ।' इति वचनं सर्वथा सत्यमेव । यैः पाणिनीयां परम्परामाश्रित्य नैवाधीतम् तेषां कृते सुगमतया सूत्रनिर्देशपूर्वकं सम्यक्तया सन्धिज्ञानार्थं ग्रन्थस्यास्य महत्युपयोगिता वर्तते । अनायासं छात्रैः कुत्र कथं वा सन्धिकार्यं भवेदिति ज्ञातुं शक्यतेऽस्य ग्रन्थस्य साहाय्येनैकस्मिन्नेव क्षणे । दृश्यतामेकमुदाहरणम्–अः + अ ओ, रामः + अस्मि-रामोऽस्मि रामस् अस्मि इत्यत्र सू० ससजुषोरुः इति रुत्वम् । सू. अतोरोरप्लुतादप्लुते-ऽति रोः उत्वम् । सू. आद्गुणः इति । उकारस्य ओंकारः । सू. एङः पदान्तादति इति पूर्वरूपम् । अप, पुनः + अपि–पुनरपि । पुनर् इति रेफान्तमव्ययम् ।

१ (सं. पृ. २६)

अस्मिन् ग्रन्थेऽकारादिक्रमेण सर्वाणि सन्धिस्वरूपाणि परिश्रमेण प्रदर्शितानि । ग्रन्थस्य नूतने संस्करणे केचन परिष्काराः अपेक्ष्यन्ते— सूत्राणि वार्तिकानि च निर्देशपूर्वकं देयानि । २. अष्टादशे पृष्ठे 'सं + यन्ता-संयन्ता, संय्यन्ता' इत्यादिषु स्थलेषु अनुनासिकत्वं कथं भवतीति निर्देष्टव्यम् । ३ चतुश्चत्वारिंशत्तमे पृष्ठे 'पूः + ओखति — पूरोखति' इत्यत्र 'रो रि' इति सूत्रस्योल्लेखो नापेक्ष्यते । ४. सप्तषष्टितमे संस्कृतशब्दस्य सन्धिकार्यं प्रदर्श्येत । सन्धिकोशात्मकं ग्रन्थं विलोक्यापि संस्कृतशब्दस्य सन्धिकार्यं कोऽपि नावगच्छेदिति खलु न प्रशंसनीयमस्ति ।

यद्यपि ग्रन्थे द्वित्वलोपप्लुतविधयो न दर्शिता: सन्ति 'संस्करोति' इत्यादिषु सकारद्वये एकस्य लोप: कथं भवतीत्युक्तं चेत्, ग्रन्थस्य गरिमा संवर्धेत। सर्वै: संस्कृतज्ञैर्विशेषेण छात्रैश्च ग्रन्थ: सङ्ग्राह्य:, पठनीयश्च। मन्ये ग्रन्थकारोऽग्रेऽपि सरलमार्गेण संस्कृतव्याकरणज्ञानाय नूतनान् ग्रन्थान् प्रणीय संस्कृतस्य सरलतां प्राकाश्यं नयेत्। जयतु संस्कृतं संस्कृतिश्च।

— प्रवक्ता, प्र. ना. रा. इ. रामनगरम्, वाराणसी





# पाठका: प्रार्थ्यन्ते

मान्या: !

नववर्षारम्भो जात: नववर्षशुल्क: प्राप्य:। पत्रप्रेषणेनापि वार्षिकशुल्कप्रेषणार्थं प्रार्थना कृता किन्तु स्वल्पैरेव महानुभावै: शुल्कप्रेषणं कृतम्। अत: सविनयं प्रार्थ्यते यत् शीघ्रमेव शुल्कप्रेषणेन सहायता कार्या।

— सम्पादक:







# दिल्ली संस्कृत अकादमी समाचारा

## द्विदिवसीयं वैदिकसम्मेलनम्

६४-४-१९९३ तः २५-४-९३ पर्यन्तं सम्मेलने ऽस्मिन् "वैदिक-वाङ्मये द्यावा-पृथिवी-विचारः" विषयमिमं अधिकृत्य चर्चा जाता। स्थानमासीत्—वेदसंस्थानम्, सी-२२ राजौरी गार्डेन, नव देहली। सम्मेलनमिदं श्रीमतां कुलानन्दभारतीयानां मुख्यातिथित्वे, डा. के. पी. ए. मेनन्महोदयानां विशिष्टातिथित्वे, डा. मण्डनमिश्रमहोदयानां मध्यपक्षत्वे, डा. दयानन्दभार्गवानां सम्पूर्णसम्मेलनाध्यक्षत्वे डा. अभयदेवशर्मणां सान्निध्ये च सम्पन्नम्। अत्र चतुर्विंशतिशोधलेख वाचनं जातम्। आकाशपृथिविविषयकवैज्ञानिकदृष्टिकोणप्रकाशनमपि कतिपयशोधलेखेषु कृतमभूत्। आधुनिकपर्यावरणप्रदूषण बिषये ऽपि बहुभिः प्रकाशः पातितः। तद्दूरीकरणोपायाः अपि वैदिकाधिकारमाश्रित्य प्रस्तुताः समापनसमारोहे डा. विद्यानिवासमिश्रोऽवोचत यत् वेदाः जड़राशिर्नास्ति वेदाः प्रकाशराशिरस्ति परन्तु तदज्ञानाय चित्तशुद्धिः परमावश्यका। अकादमी सचिवः श्री कृष्णसेमवालः सर्वेभ्योऽपि धन्यवादम्—व्याहरत्।



## १९९२–९३ संस्कृतछात्रवृत्तिसमारोहः

अकादम्याः संस्कृत छात्र वृत्ति योजना १९८८-८९ वर्षे प्रारब्धा। ३४२५ रु केवलं छात्रवृत्तिद्वयं तदानीं प्रदत्तमभूत्। १९९२-९३ वर्षे नवमकक्षातः एम. ए. पर्यन्तं तथा पूर्वमध्यमातः आचार्यकक्षा यावत सर्वयोगरूपेण २४८ छात्रेभ्यश्च १,१२,२०० रु. छात्र वृत्तयः प्रदत्ताः। दिल्यां संस्कृतभवने एतत् छात्रवृत्ति प्रदान-

समारोहो: जात: । छात्रवृत्तिराशिप्रदान भारतीयप्राशासनिक सेवाया: वरिष्ठ अधिकारिभि: श्री सेवारामशर्मभि: कृतम् ।

श्रीशर्मणा स्वकीयोद्घाटनभाषणे भणितम् श्री जवाहरलाल नेहरू महाभागस्य कथनं पुरत: स्थापयता "यावदियं शुभा संस्कृतभाषा लोके स्थास्यति तावत् भारतस्य मूलमहिमा अक्षुण्णा सुदृढा च भविष्यति । केवलं राजनयिकउद्देश्यपूर्तये एव नास्या: गुणगानं कार्यमपितु नि:स्वार्थं भावेनैषा सेव्या ।"

मुस्लिमशासनकालेऽपि दाराशिकोह: संस्कृतस्य विद्वानासीत् शाहजहानस्य पत्नी संस्कृतरचनाभि: प्रभाविता आसीत् । डा. मण्डनमिश्रस्तथा च श्री के. पो. ए. मेनन् महाभाग इमौ विशिष्टातिथित्वेनोपस्थितावास्ताम् ।



# हिन्दुसेवा प्रतिष्ठानान्तर्गतसंस्कृतविभागः

बेंगलूरु । उल्लिखितसंस्कृतविभागान्तर्गतमत्र २६-४-९३ तः ८-५-९३ तिथियावत् संस्कृतप्रशिक्षणवर्ग: प्राचलत् अत्रत्यवैशिष्ट्यम् :-

१. अहोरात्रम् अखण्डं संस्कृतवातावरणम् ।

२. संस्कृतसम्भाषणशिविरसञ्चालनस्य प्रत्यक्षशिक्षणम् ।

३. भाषाशिक्षणक्षेत्रे आविष्कृतानाम् अत्याधुनिकपद्धतीनां तन्त्राणां च परिचय: प्रत्यक्षप्रयोगश्च

४. संस्कृतज्ञानाभिवृद्धे: भाषापरिष्कारस्य च निमित्तम् उपायानां चिन्तनम् ।

५. संस्कृतकार्यस्वरूपस्य समग्र: परिचय: ।

६. संस्कृतसंस्कृतिसम्बद्धा: अन्ये बहवो विषया: ।



# सम्पादकीयम्

## आचार्यविश्वनाथशास्त्रिमहाभागानां
## ९६ तमं जन्मदिनम्

नाभास्थपञ्जाबप्रदेशसंस्कृतप्रकादमी पञ्जाबप्रदेशस्य, सम्मतानुसारन्तु समस्तभारतस्य प्रख्यातविदुषां आचार्यश्रीविश्वनाथशास्त्रिमहाभागानां ९२ तमं जन्मदिनसमारोहायोजनमकार्षीत् इति चिरात्किमपि शुभकार्यं पञ्जाबप्रदेशस्य संस्कृतजनैर्विहितमिति मन्ये ।

एवं विधत्यागतपोमूर्तिभूताः, युगप्रवर्तकाः महात्मानः कमपि प्रदर्शनं, स्वागतं, सम्मानम्वा नेच्छन्ति । एवं विधापूर्वविभूतीनां स्वागतं सम्मानम्वास्माकं स्वीयमान भवति सनिश्चयमग्रिमसन्ततयश्चानेन काममप्यनिर्वचनीय प्रेरणां, बलं क्षमताञ्चाप्नुवन्ति । अनेकैः पिप्पलादैः कणादैश्च सुरवाक् सेविता । युगानन्तरमपि तेऽद्य सादरं जीवमाना एव सन्ति ईदृग् विधा एव सन्ति - आचार्यविश्वनाथाः । स्वजीवनस्य सुखं तृणवत् त्यक्त्वा सर्वमपि जीवनमेतैः संस्कृतप्रसारकार्याय समर्पितम् । विभिन्नमन्त्रिणामधिकारिणां, राज्यपालानां विश्वविद्यालयाधिकारिणां, सविधे– संस्कृतविदुषां दलानादाय एते संस्कृतप्रचारध्वजं सर्वदान्दोलयामासुः । केन्द्रीयसंस्कृतायोगासदस्यत्वेनाभूतपूर्वकार्यमेभिः भारतस्य कोणानुकोण गत्वा सम्पादितम् । अद्भुतमश्रीसरस्वतीसंस्कृतमहाविद्यालयो योऽद्य विशालवटवृक्षरूपं धारयति सोऽपि धनेन, सेवया, निःस्वार्थभावेन एतेषां कृपया एव नात्र कोऽपि सन्देहः । दिव्यज्योतिषः एते आजीवनसंरक्षका अभूवन् ।

दिव्यज्योतिः परिवारः कामयते प्रार्थयते च भगवन्तं भूतभावनं भवं चिरायुष्यमेतेषां स्याद्येन स वेदघोष. सत्यं भवतु "पश्येम शरदः शतम् ।"

— केशव शर्मा

✻ ✻ ✻ ✻ ✻ ✻ ✻ ✻ ✻ ✻ ✻ ✻ ✻

मुद्रकः प्रकाशक :—
भारतीमुद्रणालय भारती विहार, मशोबरा - शिमला १७१००७ (हि. प्र.)
स्वामीः– श्रीमती आचार्य रुक्मकुमारी शर्मा,
दूरभाष : [78459
8-200]

मई १९९३ ज्येष्ठ २०५० — वर्षम् – ३७ अङ्कः ८

वार्षिक मूल्यम् रु० ६०

R. N. 6384/57 ल – 33/एस. एम. / 10/91

# संस्थान के प्रकाशन

१. फलादेश कल्पतरुः (मूल संस्कृत में)
हिन्दी अंग्रेजी टीका सहित ४० वर्ष के अनुसन्धान और अनुभव पर आधारित जातकफल कहने का अनुपम ग्रन्थ ... मू. ७०-००

२. संस्कृत कोशवाङ्मयम् (संस्कृत में)
संस्कृतकोशसाहित्यपर अनुसन्धानपूर्ण विवेचन ... मू. १७५-०

३. झञ्झा (संस्कृत में)
शेक्सपीयर के द टैम्पेस्ट नाटक का सचित्र रूपान्तर ... मू. ५०-००

४. हिमाचलप्रदशे संस्कृतस्य प्रसारो विकासश्च (संस्कृत में)
हिमाचल में संस्कृत के प्रसार विकास की विस्तृत कहानी ... मू. ५०-००

५. वैजयन्ती (हिन्दी काव्य)
नवीन प्राचीन विचारधाराओं का गीतिमय समन्वय ... मू. १५-००

६. सूनृता (संस्कृत काव्य)
आधुनिक गीतों में गुम्फित अनुपम उपहार ... मू. २५-००

७. शक्तिसौरभ (हिन्दी में)
संस्कृत लेखिकाओं का इतिहास ... ... मू. १५-००

८. विचारामृत (हिन्दी में)
आचार्य जी के विभिन्न विषयों पर जीवनोपयोगी लेख दो भाग मू. १५-००

९. पथ्यापथ्यविनिर्णय
सं. हिं. टीका सहित आयुर्वेद का दुर्लभ ग्रन्थ ... मू. २०-००
( डाकव्यय सर्वत्र पृथक् )

१०. सरिता
(अभिनव सं. कथानिकाएं) — ... मू. ५०-००

११. हिमानी
(संस्कृत काव्य हिन्दी अनुवाद सहित) — मू. १००-००

सम्पर्क सूत्र :—

सचिव, **संस्कृत शोध संस्थान**
भारती विहार मशोबरा
शिमला १७१००७ (हि. प्र.)

# दिव्यज्योतिः

संस्कृतस्य सचित्रमासिकम्



## स्व. श्री पतञ्जलि शास्त्री

भारतीयसर्वोच्चन्यायालयस्य प्रथममुख्यन्यायाधीशः संस्कृतायोगस्य च प्रथमाध्यक्षः। अस्य कार्यकाले संस्कृतोत्थानाय महत्त्वपूर्णकार्याणि प्रारब्धान्यासन्।

शिमला जून, १९६३

वर्षम् ३७ अङ्कः ६

# दिव्यज्योतिः

संस्थापितम् १९५६
प्रधानसम्पादकः—
आचार्य केशव शर्मा



संस्थापकाः तथा
आद्यसम्पादकाः
आचार्यश्रीदिवाकरदत्त
शर्माणः,
राष्ट्रपतिसम्मानिताः


(पत्रमिदं हि०क० सं० भा० अकादमी प्रदत्तानुदानसाहाय्यम् । पत्रिकागत-मुद्रणदोषाणां सम्पादकीयनीति-विषये च अकादमीदायित्वं नास्ति )

हिमाचल प्रदेश—पंजाब-हरियाणा-जम्मूकश्मीर · मध्य प्रदेश-राजस्थान—महाराष्ट्र उत्तरप्रदेश शासन-स्वीकृत केन्द्रशासनपुर-स्कृतं सचित्रं संस्कृतमासिकम् ।

## पत्रस्य उद्देश्यानि तथा नियमाः

सरलसरससुबोध-साधनैः सर्वस्मिन् संसारे संस्कृतस्य प्रसारः, साहित्यान्तर्गतानां सकलकलानां समन्वेषणं, संसारस्य हितसम्पादनम्, एवं लौकिक - अलौकिकस्वातन्त्र्यस्य प्राप्तिः ।

"दिव्यज्योतिः" प्रतिमासं पञ्चदशतारिकायाम् (आङ्गलमानेन) प्रकाशितं भवति

पत्रस्य वार्षिकमूल्यं ५० रु० अर्धवार्षिकं २५ रु० एकस्याङ्कस्यच रु० ४/५० भवति ।

वर्षारम्भः अक्तूबरमासतः भवति ग्राहकः कस्मादपि मासाद् भवितुं शक्नोति । ग्राहकैः, "सम्पादक, दिव्यज्योतिः, भारती विहार, मशोवरा, शिमला-१७१००" इति संकेते धनादेशेन वा. शु. प्रेषणीयम् ।

——

## विषयानुक्रमः



पूर्वाङ्कादनु

## क्रान्तिकारिशिरोमणिः चन्द्रशेखर आजादः

जन्म — लब्ध वीरगतिः

२ जुलाई १९०६ — २७ फरवरी १९३१

(आजादः व्यायामं करोति ततः प्रविशन्ति क्रान्तिकारिणः)

आजादः- मित्राणि । दायस्य पोषणाय भरणाय, प्रचाराय, प्रसाराय, शस्त्रक्रयणाय च अर्थस्य आवश्यकता विद्यते । मया तु निरशनेन बहूनि दिनानि व्यतीतानि, किन्तु सर्वे मत्सहचारिणस्तु भोजनं विना दलसंघटने कथं समर्था भविष्यन्ति (ततः पण्डित राम प्रसाद विस्मिल्लः, राजेन्द्र लाहिड़ी, अशफाक उल्ला, शचीन्द्र नाथ बख्शी, रोशन सिंह मन्मथ नाथ गुप्त राम कृष्णखत्रिप्रभृतयः प्रविशन्ति ) उपविश्य ।

रामप्रसादः- दलाय धनं प्राप्तुं राजनैतिकम् लुण्ठनादिकं कर्तव्यम् ।

सहचारिषु एकः- अनेन लुण्ठनादिकार्येण अस्माकं समक्षं महत् संकटम् उपस्थास्यति आङ्ग्लशासकैः कदाचिद् ज्ञातं भवेत् तर्हि सर्वं विदितमेव भविष्यति ।

द्वितीय :- सर्वकारः न जानीयात् । अतः ग्रामेषु धनाढ्यानां परिवारेषु लुण्ठनादिका क्रिया सफला भविता ।

(सर्वे गच्छन्ति)

(बिस्मिलनेतृत्वे रात्रौ द्वादशवादने फतेहपुरस्थे कस्यचिद् धनाढय परिवारस्य गृहे लुण्ठनार्थं प्रविशन्ति क्रान्तिकारिणः ।

गृहस्वामी स्वपत्न्या, पुत्रेण च सह निःशङ्कं स्वपिति । पुत्रः पंचवर्षीयः जागर्ति ।

पुत्रः- भो मातः ? अहं जलं पास्यामि ।

माता :- (जागरणस्य अभिनयं कुर्वन्ती पतिं प्रति) हे द्वितीय कुम्भकर्ण ? अपि शृणोषि । अयं धर्मपालः जलं पास्यति । अत आनीय पातुं तस्मै जलं प्रदेहि ।

गृहस्वामी :-कथं मां जागरयसि । भोजनं तु पचवारं करोषि । शरीरमपि साक्षात् ताटका सदृशम् । पुत्राय जलं दातुं न समर्था । त्वमेव गच्छ । अहं स्वपिमि (पुनः स्वपिति)

माता :- (जलम् आनीय पुत्राय ददाति) पुत्र, पिब जलम् ।

(क्रान्तिकारिणः जागृतं गृहस्वामिनं दृष्ट्वा पलायन्ते)

(पटाक्षेपः)

(पुनः उत्कोचग्राहिणः गृहे प्रतापगढ़जनपदे शस्त्रधारिणः क्रान्तिकारिणः प्रविशन्ति, उत्कोचग्राही तान् दृष्ट्वा) कथं यूयं समागताः ?

बिस्मिल्लः- (भुशुण्डीं प्रदर्शयन्) देहि सर्वं धनं यद् जनानां रक्तशोषणं कृत्वा गृहे समागतम् ।

उत्कोचग्राही :- (तारस्वरेण) शृण्वन्तु प्रतिवेशिनः। मदीये गृहे दस्यवः प्रविष्टाः। रक्षन्तु। रक्षन्तु।

ततः प्रतिवेशिनः- अन्ये ग्रामीणा जनाश्च तत्र समायान्ति। क्रान्तिकारिणः पलायिता केवलं चन्द्रशेखरः एकया स्त्रिया अपहृतं स्वलघुभुशुण्डीं ग्रहीतुं तत्र स्थितः।

क्रान्तिकारी :- कथम् अद्यापि नायातः चन्द्रशेखरः।

(ततः प्रविशति चन्द्रशेखरः)

एकः सहचरः- (दृष्ट्वा) कथय। कुत्र स्थितः ?

चन्द्रशेखर :- एकया स्त्रिया अपहृता मे लघुभुशुण्डी। तामेव ग्रहीतुं स्थितः।

अन्य :- किं स्त्रियाः हस्तात् आत्मानं मोचयितुं त्वम् असमर्थः ? सा त्वया हन्तव्या आसीत्।

चन्द्रशेखर :- कस्यामपि स्त्रियाम् अहं हस्तं न उत्थापयिष्यामि इति मे प्रतिज्ञा।

पटाक्षेपः

ततः आरक्षिण अधिकारिणो वेशं गृहीत्वा रामप्रसाद विस्मिल्लः, अन्ये च आरक्षिणां वेशं स्वीकृत्य केषाञ्चिद् गृहे प्रविशन्ति।)

धनिक :- (आरक्षिणः दृष्ट्वा) भवताम् अत्र आगमनस्य किं प्रयोजनम् ?

रामप्रसाद विस्मिल्ल :- अहमारक्षिणामधिकारी, एते मदधीनस्था आरक्षिणः।

मया ज्ञातं यत् त्वया दस्युकर्मलिप्ततया बहूनि धनानि, आभूषणादीनि च अपहृतानि। अतः वयम् अपहृतवस्तूनामन्वेषणं (तलाशीं) करिष्यामः। (आरक्षिणं प्रति) किं पश्यथ यूयम् गृहं प्रविश्य विलोकयन्तु सर्वाणि वस्तूनि।

आरक्षिण:- यद् आज्ञापयन्ति श्रीमन्तः। इत्युक्त्वा धनिकस्य गृहं प्रविश्य सर्वाणि धनानि, आभूषणादीनि च अपहृत्य गच्छन्ति।

आरक्षिण :- यद् आज्ञापयन्ति श्रीमन्तः ।

इत्युक्त्वा धनिकस्य गृहं प्रविश्य सर्वाणि धनानि, आभूषणादीनि च अपहृत्य गच्छन्ति ।

(पटाक्षेपः)

क्रान्तिकारिणां प्रवेशः

रामकृष्ण खत्री :- चन्द्रशेखर, एको महात्मा उदासीन साधूनामध्यक्षः अस्ति स स्व- समृद्धिरक्षणाय कमपि योग्यशिष्यमन्विष्यति । अतः त्वमेव तस्य शिष्यत्वं स्वीकुरु ।

चन्द्रशेखर :- अहं तत्परोऽस्मि, ततश्चन्द्रशेखरेण सह गाजीपुरं गच्छति । (उपविष्ट उदासीसाधूनामध्यक्षः ततः रामकृष्ण खत्री चन्द्रशेखरेण सह प्रविशति)

रामकृष्ण खत्री :- (अध्यक्षं प्रणम्य) महात्मन् ! एष मत्सहचरो भवतः सर्वतः साहाय्यं विधास्यति । (चन्द्रशेखरं प्रति) चन्द्रशेखर ! अस्य महात्मन आज्ञापालनं धनसंरक्षणम् अन्यं परिचर्यादिकं च सुष्ठु विधेयम् ।

चन्द्रशेखर :- न चिन्ता कार्या । अहं पूर्णरूपेण स्वकार्यं करिष्यामि ।

रामकृष्ण खत्री :- शोभनम् । (ततः प्रस्थितः)

(कौशेयवस्त्रं परिधाय प्रविशति चन्द्रशेखरः)

चन्द्रशेखर :- (मनसि) अहम् अस्य महात्मनः शिष्यत्वं तु स्वीकृतवान्, किन्तु मे सहचराः क्रान्तिकारिण इदानीं कुत्र सन्ति, किं कुर्वन्ति, तेषां भोजनस्य जलपानस्य च का व्यवस्था इति विचिन्त्य मनसि शान्ति न लेभे । अतः अहं सर्वं परित्यज्य वाराणसीं गन्तुमिच्छामि । (इत्युक्त्वा कौशेयवस्त्रं तत्रैव निस्सार्य वाराणसीं प्रति प्रस्थितः ।)

(मित्रैः सह चन्द्रशेखर उपविष्टो दृश्यते)

रामप्रसाद विस्मिल्ल:- चन्द्रशेखर ! साम्प्रतं दलसंघटनाय धनस्य महती आवश्यकता वर्तते ।

चन्द्रशेखर :- अहं तु अहर्निशं बद्धपरिकरोऽस्मि ।

रामप्रसादविस्मिल्ल :— साधु शेखर । साधु ।

चन्द्रशेखर ! तव स्फूर्तिम्, उत्साहं निर्भीकतां च दृष्ट्वा तुभ्यं "पारद" "क्विक सिलवर" इत्यस्य उपाधिं वितरामि

चन्द्रशेखरः भवतो मयि महती अनुकम्पा इत्युक्त्वा विनीतः सन् उपाधिम् गृह्णाति ।

(पटाक्षेपः)

(मित्रैः सह चन्द्रशेखरः)

रामप्रसादः- साम्प्रतम् अस्माभिः रेल गन्त्र्यां प्रविश्य राजकीयकोषस्य लुण्ठनं कर्तव्यम् ।

चन्द्रशेखर :- कथमेतद् भविष्यति ।

(रामप्रसाद विस्मिल्लः चन्द्रशेखरस्य कर्णे किञ्चित् मन्त्रयति)

रामप्रसादविस्मिल्ल :- स्वकार्यं कर्तुं गच्छन्तु सर्वे ।

सर्वे प्रस्थिताः

(काकोरी स्टेशन - प्रतीक्षालये शचीन्द्रः)

राजेन्द्रः, अशफाकः चन्द्रशेखरश्च । सर्वे यात्राप्रमाणपत्रं (टिकटं) क्रीणन्ति । गन्त्री शाहजहांपुरतः (लखनऊ) लक्ष्मणपुरं प्रति प्रस्थिता । सर्वे प्रविशन्ति ।

शचीन्द्र :- अशफाक ! आभूषणमञ्जूषा कुत्र विद्यते ?

अशफाक :- (निरूप्य) सा तु काकोरी - प्रतीक्षालय एव विस्मृता

ससंभ्रमं शचीन्द्र - राजेन्द्रौ उभयत अवरोधकयन्त्रमाकार्षयतः, गन्त्री स्थिता सर्वे गन्त्री संरक्षकस्य (गार्डस्य) । समीपं गत्वा राजकीयकोषं लुण्ठन्ति । शचीन्द्रः विद्युत प्रकाशं लघुभुशुण्ड्या अग्रेण स्फोटयति सर्वत्र अन्धकारः सञ्जायते ।

शचीन्द्र :- (गन्त्र्याः संरक्षकं प्रति) (गार्डं प्रति) त्वया अहं परिज्ञातः।
अतः त्वाम् अहं हन्मि।

संरक्षक .- भीतः सन्, अहं शपथं करोमि, न क्वापि रहस्यं कथयिष्यामि।

(ततः शचीन्द्रः हिंसातः विरमति।
सर्वे धनराशिं नीत्वा काकोरीवने पलायिताः)

(पटाक्षेपः)

सर्वे जनाः समाचारपत्रे काकोरीवृत्तं पठन्ति

एक :- किं ज्ञातं गन्त्र्यां लुण्ठनं केन कृतम्?

द्वितीय :- अहं तु किमपि वक्तुं न शक्नोमि? अत्र "इण्डियन डेली टेलीग्राफ नामके" समाचारपत्रे केवलमिदमेव लिखितं यत् "काकोरी समीपे भीषणं लुण्ठनम्"।

तृतीय :- प्रतीयते यत् क्रान्तिकारिणामेव इदं कृत्यं विद्यते।

द्वितीय :- यदि एवं तर्हि बहुसाहसं कृतम्।

पटाक्षेपः

तृतीय दृश्यम्

चन्द्रशेखर आरक्षिभ्यः स्वात्मानं संगोप्य झांसीस्थस्य रुद्रनारायणस्य अध्यापकस्य गृहं प्रस्थितः।

चन्द्रशेखर :- अहं तु झांसी गत्वा रुद्रनारायणस्य गृहे स्थास्यामि।

(रुद्रनारायणगृहे प्रविश्य रुद्रनारायणाय प्रणमति)

रुद्रनारायणः विजयीभव, चन्द्रशेखर! त्वं तारारनद्याः समीपे साधुवेषं स्वीकृत्य वस तत्र न कोऽपि त्वां ज्ञास्यति।

चन्द्रशेखर :- यद् भवान् आज्ञापयति।

(इत्युक्त्वा साधुवेषं स्वीकृत्य तत्र वसति)

चन्द्रशेखर :- (स्वमनसि) अत्रापि अहं शान्तिं न लेभे। अत इतो गमिष्यामि (गच्छति)

(ततः खनियाधाना-नरेशः श्री खलकसिंहः, रुद्रनारायणश्चन्द्रशेखरश्च प्रविशन्ति, तत्र मित्राणि च आयान्ति)

रुद्रनारायण :- राजन् ! युवको ऽयं क्रान्तिकारिः विचारोपेतः, प्रदम्यसाहसीच ।

खलकसिंह :-किं लक्ष्य भेदनमपि जानासि ?

चन्द्रशेखर :- जानामि । लक्ष्यभेदनाय अवसरं देहि ।

मित्रम् :- साम्प्रतं विरमतु ।

चन्द्रशेखरः- कथम् ।

अन्यत् मित्रम् :- प्रथमे परिचये भवता इदं दुष्करं कार्यं न शोभते । इदानीं भगवान् दास महौर एव लक्ष्यभेदनं करिष्यति । भगवान् दास । लक्ष्य भेदनाय उत्तिष्ठ ।

भगवानदास माहौर :- शोभनं शोभनम् इत्युक्त्वा समुत्थाय लघुभुशुण्ड्या दूरस्थं दारुपक्षिणं भिनत्ति ।

(सर्वे साश्चर्यं विलोकयन्ति)

पटाक्षेपः

(चन्द्रशेखरेण सह रुद्रनारायणस्य प्रवेशः)

रुद्रनारायणः—चन्द्रशेखर ! अहं तव छायाचित्रमङ्कितु मिच्छामि ।

चन्द्रशेखर :- मुहूर्तं विरमतु यावत् श्मश्रु सुव्यस्थितं करवाणि । (इत्युक्त्वा श्मश्रुं सुव्यस्थितंकरोति)

साम्प्रतमङ्कित करोतु चित्रम्

रुद्रनारायण :- तत्परो भव ।

चन्द्रशेखरः-तत्परोऽस्मि । (अङ्गुष्ठतर्जनीभ्यांश्मश्रुं सुव्यस्थितं करोति ।) (रुद्रनारायणः छायाचित्रयन्त्रे काबुंरपरिधानं लुंगी सहितं शेखरमङ्कितं करोति)

पटाक्षेपः

(कानपुरे गणेश शंकर विद्यार्थिनः समीपे चन्द्रशेखरस्य प्रवेशः)

चन्द्रशेखर:- (प्रच्छन्नवेषः) प्रणम्यते भवान् ।

गणेश शंकर विद्यार्थी :- (दृष्ट्वा) प्रणमामि प्रणमामि एतदासनम्, उपविशतु । (द्वावपि उपविशतः)

चन्द्रशेखर :- अपि कुशली भवान् ?

गणेशशंकर विद्यार्थी :- अहं तु कुशली । भवदीया कीदृशी स्थितिः ? भवत्कार्ये का प्रगतिः ? इति सविस्तारं वर्णयतु ।

चन्द्रशेखर :- प्रगतिस्तु विद्यत एव किन्तु धनादि-सहयोगं विना तादृशी प्रगतिर्न विलोक्यते यादृशी अपेक्षिता चास्ति ।

(तदैव गणेशशंकर विद्यार्थिनः समीपे लाहौरतः भगतसिंहस्य पत्रमायाति । पत्रमुद्घाट्य वाचयति :—

गणेशशंकर विद्यार्थी :— अत्र सर्वं कुशलं, भवतां कुशलं समीहे । मित्र ? अहं भवद्भिः प्रकाशितायां "प्रताप" पत्रिकायां कार्यं कर्तुं विचारयामि । यदि भवेत् कापि सूचना अवश्यं प्रेष्या ।

भगतसिंहाय गणेशशंकरः पत्रं लिखति । (वाचयन्)

मित्र शीघ्रमेव कानपुरमागत्य पत्रिकाकार्यं सम्पादनाय ।

(इति लिखित्वा भगतसिंह समीपे प्रेषयति पत्रम् )

एकतश्चन्द्रशेखरेण सह गणेशशंकरस्य प्रवेशः द्वितीयभागात् भगतसिंहस्य प्रवेशः, उभौ गले मिलतः ।

गणेशशंकर :- त्वम् अत्र आगत अतो मदीये मनसि महती प्रसन्नता । साम्प्रतं प्रतापपत्रिकायाः सम्पादकत्वम् अङ्गीकरोतु । भगतसिंह! त्वं पण्डितेन सह मिलितुं समुत्सुकः, अतः (चन्द्रशेखरं लक्ष्यीकृत्य) अयमेवक्रान्तिदेवः चन्द्रशेखर आजादः ।

(भगत सिंह :- चन्द्रशेखरं हृदयेन संयोजयति ततो बटुकेश्वरोऽपि तत्र आगच्छति ।

बटुकेश्वर :- नमस्कारः नमस्कारः ।

चन्द्रशेखर :- वन्दे मातरम् ।

भगतसिंह :- वन्देमातरम् ।

पटाक्षेपः क्रमशः

# "अहमपि संस्कृतं पठिष्यामि"

— डा. लेखराम शर्मा, प्राध्यापक



हिमांशुः वर्धापनानि, वर्धापनानि; हरीश !

हरीशः त्वमपि वर्धय त्वमपि बर्धय ।

हिमांशुः हरीश ! दशम कक्षा एव बाधा आसीत् मे जीवने । अधुना त्वहं नैव बिभेमि ३५% अङ्का अपि मे कृते ५३% समानाः सन्ति ।

हरीशः मां तु ६५% अङ्का अपि नैराश्यकरा एव भान्ति । परं प्रयतिष्ये महाविद्यालये अधिकार्थम् ।

हिमांशुः अयि ! त्वं कस्मिन् महाविद्यालये प्रवेशं वाञ्छसि ?

हरीशः समीपस्थे सरकाघाट इति नामधेये ।

हिमांशुः नैव नैव कदापि नैव । किं त्वं न जानासि यत् तत्र सर्वे ग्राम्या एव विद्यार्थिनः सन्ति । ते च आज्ञाकारितां शिष्टतामनुशासन-परायणतां युवक युवत्योः पारस्परिक शिष्टताञ्च अद्यापि उच्चादर्शत्वेन अनुपालयन्ति ते तु रूढिवादिनः । अहं तु दिल्ली नगरे कस्मिन्नपि महाविद्यालये प्रवेशाय यतिष्ये । यत्र आधुनिकतायाः प्रभावः अद्यत्वे उत्कर्षमपि पारयति । युवकाः युवतयश्च पारस्परिकमैत्र्यादि सम्बन्धेषु पाश्चात्यान् अनुकुर्वन्ति ।

हरीशः प्रथमं तावत् ३५% अङ्कधारकः त्वं तत्र प्रवेशमिच्छन् दिवास्वापं पश्यसि यतोहि जनसङ्कुले तस्मिन् नगरे योग्यताक्रमेण एव विद्यार्थिनः प्रवेशं लभन्ते । यथा

कथञ्चित् यस्मिन् कस्मिन् अपि निम्नस्तरीये महाविद्यालये चेत् प्रवेशः तदापि व्यर्थमेव प्रचुर व्यय तत्र भविष्यति। अपरत्र आधुनिकतायाः प्रभावस्तत्र त्वाँ उच्छृंखलतां प्रेरिष्यति। अतः तत्र न गन्तव्यम्।

हिमांशुः त्वं तावत् रूढिवादी अधुना तु विद्यार्थिभिः आधुनिकैर्भाव्यम्।

हरीशः आधुनिकैर्भाव्यम्! का नाम आधुनिकता? अनाज्ञाकारिता, उच्छृंखलता, अश्लीलता, धूम्रपानं, सुरापानं, अन्येषाञ्च मादकद्रव्याणां प्रयोगः क्लबेषु च नरनार्यो पति-पत्नी अतिक्रमेण युगलनृत्यं, स्त्रीणामपि धूम्रसुरापानं, वेश-भूषायामर्धनग्नता इत्येव किं आधुनिकता? अन्यच्च छात्रा-भि रर्धवार्षिकपरीक्षाः न दातव्याः, कक्षायाञ्च नवमे-नवमे दिवसे गमन येन उपस्थितिपञ्जिकानाम न बिलुप्येत, क्षुरबलेन अनुकरणं, गुरुजनावज्ञा किमेषा आधुनिकता? उत् मातृ—पितृवञ्चनमाधुनिकता। हिमांशु! मित्रत्वेन भणामि यत् नैतद् आधुनिकत्वं परं एतत् सर्वमपि पशुत्वम्। न हि न हि पशुत्वादपि परं यत् किञ्चित्। अतः अहं कदापि एतादृशेषु महाविद्यालयेषु गमनं न समर्थयामि गमिष्यामि च। एकतः आधुनिकता-याः अभिमानिनः कथयन्ति यत् युवानः सम्भोगादि करणाद् न रोद्धव्याः प्राकृता सम्भोगइच्छा अपरतश्च उद्घोषयन्ति एडस्, एडस् इति। ब्रह्मचर्यं कुण्ठाकरं भवति मृत्योः करणञ्च शिक्षयन्ति धिगेतान् अशानि-साक्षरान्।

हिमांशुः हुं त्वं सत्यं वदसि। महानगरेषु सम्भवतः एडसादिकं अधिकं वर्तते। अहमपि तत्र न गमिष्यामि भवतु। श्वः आवां सरकाघाट महाविद्यालयमेव प्रवेशार्थं गमिष्यावः।

(अग्रिमे दिवसे उभावपि यथानिश्चितं महाविद्यालयं गच्छतः तत्र तौ प्रविवरणपुस्तिकां क्रीत्वा प्रवेशप्रपत्रपूरणे संलग्नौ भवतः। किञ्चित् कालानन्तरम्—

हरीशः हिमांशु! त्वमपि संस्कृतविषयं पठ।

हिमांशु:- ह ह ह हा । संस्कृतम् ! पण्डित जी ! किं महाविद्यालयेषु अपि पठ्यते । मित्र ! संस्कृतं तु विद्यालयेषु, संस्कृत महाविद्यालयेषु च पाठ्यते न तु महाविद्यालयेषु मा कस्मापि अन्यस्मै एवं कथय अन्यथा उपहासविषयो भविष्यसि ।

हरीश: अनड़वान् खलु त्वम् । किं न पश्यसि प्रविवरण पुस्तिकां यत् तत्र संस्कृतमपि ऐच्छिक विषयेषु लिखितम्

हिमांशु :- (विलोक्य साश्चर्यम्) एतत् स्खलनं स्यात् । आगच्छ आचार्यं महोदयं प्रक्ष्याव: ।

उभौ गच्छत: तत्र हिमांशु आचार्यं प्रति - श्रीमन् ! किं संस्कृतमपि महाविद्यालयेषु पाठ्यते ?

आचार्य :- अथकिम् । कस्मादशंका ?

हिमांशु :-मृतभाषा खलु एषा ।

आचार्य :- (कोपमभिनीय कठोर स्वरेण) क: एवं वदति ?

हिमांशु :- सर्वेऽपि आधुनिका: ।

आचार्य :- मृता खलु अवश्यमेव मृता! (इत्यर्धोक्त एव हिमांशु: सदर्पं वदति )

हिमांशु :- हरीश ? अपिश्रुतम् ? यथार्था आसीत् खलु मे आशंका

आचार्य:- (तीव्रतर स्वरेण) मूढ ! अर्धोक्ते एव अभिभाषसे वदामि खलु यत् मृत प्रायास्ते ये संस्कृतं मृतभाषां मन्यन्ते । अपि जानासि यत् अद्यापि देशे संस्कृतभाषाया: लक्षश: अध्येतार: सहस्रशश्च विद्वांस: सन्ति । सम्पूर्णानन्दसंस्कृत-विश्वविद्यालय, का. सि. दरभंगा विश्वविद्यालय, श्री-लालबहादुर केन्द्रीयसंस्कृतविद्यापीठप्रभृतय: चत्वार: संस्कृतस्य स्वतन्त्रा: विश्वविद्यालया: सन्ति । विश्वेश्व-रानन्दवैदिकशोधसंस्थानहोशियारपुर (पञ्जाब विश्वविद्यालयाधीनम् ) राष्ट्रीयसंस्कृतसंस्थानदिल्ली

प्रभृतयः अनेकानि संस्थानानि देशे संस्कृतसेवार्थं सन्ति । सर्वेषु च भारतीयविश्वविद्यालयेषु एवं विंशति अधिकेषु विदेशीयेषु विश्वविद्यालयेषु संस्कृतस्य अध्ययनम् अध्यापनं शोधकार्यञ्च प्रचलति देशे शतशः संस्कृत-महाविद्यालयाः सन्ति यत्र प्राच्य पद्धत्या संस्कृतानुरागिणः शास्त्रिणः, आचार्याः च शिक्षां लभन्ते अनेके संस्थानाः अद्यापि वेदमन्त्राणां उच्चारणं शिक्षयन्ति । हिमाचल प्रदेशे तु उच्च विद्यालयं यावत् अनिवार्यत्वेन संस्कृतं पाठ्यते सर्वाधिक शान्तिप्रियश्च अयं प्रदेशः ।

हिमांशु :- परं श्रीमन् संस्कृतस्य प्राचीना एव ग्रन्थाः अद्यापि पाठ्यन्ते न कोऽपि नूतनः ग्रन्थः ग्रथितः अस्यां भाषायाँ द्वित्रिशतकेषु ।

आचार्य :- न हि नहि पुत्रक ! एवं मा वद अद्यापि अनवरत रूपेण संस्कृतभाषायां साहित्यरचना क्रियते (१) । महात्मा-गान्धि चरितम्, जवाहरलालनेहरो चरितम् -इन्दिराचरित-महाकाव्यम्, राजीवसौरभम्, ईशुभागवतम्, दशमेश-चरितम्, राष्ट्रपथप्रदर्शनम्, तर्जनी हिमानी इत्यादयः अतीव आधुनिकग्रन्थाः अतीव-सरल - संस्कृते ग्रथिताः सन्ति । शतशः सरसानि - मनोरञ्जकानि च नाटकानि प्रतिदिनं लिख्यन्ते । (२) रेडियो रूपकाणि प्रसार्यन्ते अपरञ्च शृणु यत् कुरान् इत्याख्यस्य ईस्लाम धर्मग्रन्थस्य पद्यानुवादोऽपि कृतः एकेन प्रकाण्डविदुषा सत्यदेववर्मणा । तथापि त्वं कथं वदसि यत् संस्कृत-भाषायां अधुना काव्यरचना न भवति ।

हिमांशु :- श्रीमन् ! मम अभिप्रायस्त्वेष यत् संस्कृत भाषायां पत्र-पत्रिकादिकं साहित्यं नैव उपलभ्यते ।

आचार्य :- अतीव अज्ञोऽसि । हिमांशु ! अद्यापि संस्कृतभाषायां, दिव्यज्योतिः (शिमलातः) विश्वसंस्कृतम् (होशियारपुरतः) संस्कृतामृतम् (दिल्लीतः) दूर्वा म प्र तः विश्वभाषा (वाराणसीतः) लोक संस्कृतम् (पाण्डिचेरीतः) प्राच्यज्योतिः

(कुरूक्षेत्रत:) पुराणम् (वाराणसीत:) जनरल आफ अमेरिकन ओरियण्टल सोसायटी (अमेरिकात: । हार्वर्ड जनरल आफ एशियाटिक सोसायटी (पू. ए स. ए) एवं किल षष्ठिमिता: संस्कृतपत्र - पत्रिका: शोधपत्रिकाश्च नित्यश: प्रकाशन्ते। अपि जानासि यत "चन्दामामा" २ पत्रिका संस्कृतभाषायामपि प्रकाश्यते।

हिमांशु :- किं संस्कृतभाषासाहित्यसम्मेलनादिकमपि भवति ?

आचार्य :- अथ किम्। प्रथमं तावत् "अखिल भारतीय प्राच्यविद्या सम्मेलनम्" सप्तति: वर्षेभ्य: निरन्तरं वर्षं द्वयान्तर आयोज्यते यस्य षट्त्रिंशततमं सम्मेलनम् मई मासे, १९९३ तमे वर्षे पूनानगरे भविष्यति एतदतिरिक्तं विश्वस्तरीयाणि सम्मेलनान्यपि आयोज्यन्ते। गतवर्षे "विश्वसंस्कृतसम्मेलनम् 'सिंहस्थ पर्वोपरि उज्जैन (म. प्र.) नगरे आयोजितमासीत्। अन्यच्च 'अखिलभारतीयदर्शनपरिषत्" तथा वैदिकपरिषत् प्रभृतय: परिषद: काले काले सम्मेलनानि आयोजयन्ति। "आदिशंकराचार्य" "चन्द्रशेखर आजाद" प्रभृतीनि चलचित्राणि अपि संस्कृते निर्मिता न सन्ति। हिमांशु! वद अधुना। किं मृता संस्कृत भाषा अमृता वा।

हिमाँशु :- अमृता, अमृता, अमृता खलु।

आचार्य :- संस्कृतस्य मरणं तु भारतीयसंस्कृतेर्मरणम्। एषा एव सा भाषा यस्या: व्याकरणम् अतीव समृद्धं सुव्यवस्थितं प्रयोगयोग्यं च। येन सा कदापि विकृतिं न लभते। अन्यच्च किं श्रुतं त्वया यत् संस्कृतभाषा 'कम्प्यूटर' संगणकस्य कृते सर्वाधिकोपयोगिनी इति काप्यूटरकै: समुद्घोषितम्।

हिमांशु :- अपि सत्यम् ?

आचार्य :- परमं सत्यम्।

हिमांशु :- परं पौरोहित्यं परित्यज्य का उपयोगिता संस्कृतभाषाया: ?

आचार्यः- मूर्ख ! न केवलं पौरोहित्यं अपितु एषा भाषा 'शीलं परं भूषणम्" "वसुधैव कुटुम्बकम्" "आत्मनः प्रतिकूलानि परेषां न समाचरेत्", सत्यात् परं नास्ति धर्मम्". "आचारः परमो धर्मः" इत्यादिरूपेण नैतिकतां पाठकेषु आकण्ठं सम्भृणोति । "मातृ देवो भव", "पितृदेवोभव", माता-पिता को देव तुल्य मानें) आचार्य देवो भव, इत्यस्य शिक्षिकापि संस्कृतभाषा एव अपरञ्च धर्म, दर्शनं, इतिहासः, राजनीतिः, संगीत, आयुर्विज्ञानं, विज्ञानं च किमस्ति भुवि यन्नास्ति संस्कृते ।

हिमांशु :- किं विज्ञानमपि तत्रास्ति ?

आचार्यः- कथं न । ज्योतिर्विद् कथयति यत् अमुकतिथौ, अमुक वासरे, अमुक काले चन्द्रग्रहणं सूर्यग्रहण वा भविष्यति । तदा तदैव तस्मिन्नेव काले घटयति. किमेतद् नास्ति खगोल विज्ञानम् । अपरञ्च ज्योतिषज्ञः विनापि रक्तपरीक्षणं कृत्वा जन्म-पत्रिकायां 'नाड़ी' नाम्ना शीर्षकेण मनुष्यस्य रक्तवर्ग लिखति । परीक्ष्यते चेत् सत्यापितो भवति किमेतदपि नास्ति विज्ञानम्, योग विद्यापि किं विज्ञानाद् बहिरस्ति, किं आयुर्वेदे विज्ञानन्नास्ति ।

हिमांशु :- तथापि प्रशासनिकाधिकारी भविष्यामि इति चेत् कस्यापि इच्छा स्यात् । तदा महाविद्यालये संस्कृतविषयमधीत्यापि भवितुं शक्यते न वा ।

आचर्यः- निःसन्देहम् । यतोहि प्रशासनिक (I. A. S., H. A. S.) परीक्षासु संस्कृतमपि अन्यविषयसमकक्षमेव विषयमस्ति । वैशिष्ट्यं च लभन्ते संस्कृतज्ञाः यतोहि संस्कृतज्ञानां 'हिन्दी" अपि शुद्धा वशवर्तनी च भवति । अन्यविषयपाठकानां "हिन्दी"—लेखन विधिः अतीव त्रुटिपूर्णा भवति । या तत्र अनिवार्या भवति । अतः एव अद्य अनेके संस्कृतज्ञाः प्रशासनिकअधिकारेषु नियुक्ताः सन्ति । ममापि श्री मोहनगुप्तः, (आई. ए. एस.) आयुक्त म. प्र. श्रीयुत के. सी. शर्मा सचिवः हि. प्र. पाणिग्रही आई. ए. एस.

आकाशवाणी दिल्ली- श्रीयुत् लक्ष्मीकान्त एच ए. एस. ए. आर. ओ. मण्डी हि. प्र. परिचिताः संस्कृतज्ञाः प्रशासनिक-राजनीतावपि संस्कृतज्ञाः श्री लालबहादुरशास्त्रीवत सफलाः भवन्ति ।

हिमांशु :- प्रतिबोधितोऽस्मि, प्रतिबोधितोऽस्मि ।

आचार्य :- अन्यदपि शृणु । महाविद्यालयीय शिक्षायां विद्यार्थिभिः त्रयः चत्वारः वा विषयाः पठितव्याः । मन्ये कस्यचिद् विद्यार्थिनः रुचिः कस्मिन्नपि विषयविशेषेऽस्ति । तदा स तं विषयं उच्चाध्ययनार्थं स्नातकोत्तरश्रेण्यां पठतु नाम । स्नातकमध्ययनं यावत् स संस्कृतविषयमपि ऐच्छिकरूपेण पठतु । येन स अधिकाङ्क प्रापणे समर्थः स्यात् ।

हिमांशु :- श्रीमन् ! संस्कृते अधिकाङ्काः कस्मात् मिलन्ति । किं संस्कृतं प्रति छात्रान् आकृष्टुं प्राध्यापकाः जानन्त एवं कुर्वन्ति ?

आचार्य :- मा. मा. मा. एवं मा वद । संस्कृतविषयोऽतीव रुचिकरोऽस्ति । अत एव तत्र विद्यार्थिनः अधिकाङ्कान् लभन्ते । रुचिकरत्वात् माधुर्यत्वात् चैव इयं भाषा महापुरुषैः मुक्तकण्ठेन प्रशंसिता ।

हिमांशु :- अथ केन ?

आचार्य :- न केवलं एकेन अपितु पौरस्त्यैः पाश्चात्यैश्च बहुभिः । यथा:-

(i) "प्रत्येकः बालकः संस्कृताध्ययनार्थं सन्धि लभेत । यतोहि संस्कृतशिक्षणेन न केवलं राष्ट्रस्य सांस्कृतिकं ऐक्यं साध्यते अपितु प्रान्तीयभाषायाः सौन्दर्यमपि वर्धेत ."

(भूतपूर्व राष्ट्रपति श्री वेंकटरमण)

(ii) बालेषु संस्कृताभ्यासः प्रेरणीयः दूरदर्शनस्य माध्यमं संस्कृताध्यापनाय उपयोजनीयम् । विविधक्षेत्रेषु संशोधन-निरतैः शास्त्रज्ञैः संस्कृतगतविज्ञानस्य ज्ञानं सम्पादनीयम् । (राष्ट्रपति डा. शंकरदयाल शर्मा)

(iii) The Sanskrit language, what ever be its antiquity is of a wonderful structure more perfect than the Greek more Copious than the latin and more exquisitely refined than either. — सर विलियम जोन्स

(iv) प्राणिनीय व्याकरणं मानवीयमस्तिष्कस्य यादृश आदर्शं प्रत्युपस्थापयति तादृशं कस्मिन्नपि देशे केनापि अद्यावधि न प्रत्युपस्थापितम् । — प्रो. मोनियर विलिअास

हिमांशु :- ब्राह्मणेतरैरपि पठितुं शक्यते इयं भाषा उत् पण्डितैरेव ?

प्राचार्य :- मूढो ऽसि हिमांशु ! त्वं सत्यमेव मूढोऽसि । अपि पृच्छसि यत् ब्राह्मणेतरैरपि पठितुं शक्या इयं भाषा इति । संस्कृतस्य ज्ञातारः विद्वांसश्च यवना अपि सन्ति किमुत राजन्यानामन्येषाञ्च कथा । मौलाशी यवनेन महाभारतस्य अनुवादः फारसीभाषायां कृतः । हाजीइब्राहीमेण अथर्ववेदस्य अनुवादः फारसी भाषायां कृतः खुमान नामधेयः जन्मान्धः यवनः संस्कृतभाषायाः आशुकविः आसीत् । तेन एकदा ग्वालियरनगरे गतेन सप्तशतमितेषु श्लोकेषु रात्रावेव एकः ग्रन्थो लिखितः । अद्यापि डा० मोहम्मद इसरायल खां गाजियाबाद नगरे संस्कृताध्ययनाध्यापने शोधकार्ये च संलग्नः । पण्डित गुलामदस्तगीर "विश्वभाषा" इति ख्यातायाः संस्कृतत्रैमासिक्याः पत्रिकायाः सम्पादक अस्ति एवमेव. कोलब्रुकः, मेक्समूलरः, राथः, वोथलिंकः, वेबरः, हाग, मेक्डोनल प्रभृतयः यूरोपीयाः संस्कृतस्य प्रकाण्ड विद्वांसः अभूवन् । अनेके सिक्ख विद्वांसः संस्कृतसेवायां निरताः सन्तिः । सरदार गुरुमुख सिंहेन पञ्जाब-विश्वविद्यालयसंस्कृतविभागतो योगवासिष्टमाधारीकृत्य शोधकार्यं कृतम् । डा० जीतसिंह खोखरः पञ्जाब प्रदेशे नाभा नगरस्थे संस्कृतमहाविद्यालये संस्कृतं पाठयति । पटियाला विश्वविद्यालये संस्कृतस्य प्राध्यापकाः सिक्खाः अपि सन्ति । काशी नगर्याः भूतपूर्व महाराजा डा विभूति नारायसिंहः (राजन्यः) अद्यापि "विश्वसंस्कृत प्रतिष्ठानस्य" अध्यक्षः अस्ति । अनेके अनुसूचितजातीयाः संस्कृतस्य विद्वांस अध्यापकाः प्राध्यापकाश्च सन्ति । अत नैवं शोचनीयं यत् संस्कृतं केवल ब्राह्मणैरेव पठ्यते इति ।

हिमांशु : श्रीमन् ! धन्यवादः शतशः धन्यवादः । अद्य खलु प्रतिबोधितोऽस्मि । अधुना तु अहमपि संस्कृतं पठिष्यामि ।

द्वारा:—राजकीय महाविद्यालय, सरकाघाट हि० प्र०

# शारदापञ्चकम्

धीरेन्द्र झा, दरभंगा



जगदम्ब दयामयि ! देवनुते,
हतभक्तमनोगततापलते ।
धृतपुस्तबरे कविवृन्दमते,
चरणौ शरणं भवतान्मम ते ।१।

अमरीकबरीभ्रमरीनिकरै-
रतिरञ्जित - गुञ्जित - मञ्जुपदाम् ।
जगदीशगिरीशशचीशनुताम्,
कलये सदये हृदये भवतीम् ।२।

मरमातमकले कलहंसगते
यत् मानस मानस नाह रते ।
मनुजा मनुजाय परा कलिते,
कविता विततां सरसां वृणुते ।३।

सुमनोभिरलं सुमनोभिरिहाञ्चित,
अम्बपदानुतदावितता ।
तनुषे तनुजे मयि चेन्न दयाँ,
वत कास्य गतिर्भविता नु तदा ।४।

स्तव पुष्पमिदं बहुवर्णततम् .
सरवं शिवदं बुधभृंगयुतम् ।
तव पादपयोजयुगे जननि ।
लसतां धीरेन्द्र कृतं स्तवनम् ।५।

संस्कृतनगरम्, छपकी।
लक्ष्मीसागरम्, दरभंगा—८४६००४ (बिहार)



# भीषणां स्फोटकाण्डम्

प्रा. हरिश्चन्द्र रेणापुरकरः



राष्ट्रस्यैक्यं कुशलमभयं शान्तिसौख्यादिकं च
नूनं कृत्स्नं भवति सुतरां सङ्कटाकीर्णमद्य ।
यस्माच्छम्भोरशुभविकटौ भीषणोग्रौ करालौ
हस्तौ मन्ये प्रियभरतभूमर्मभागं प्रपन्नौ ॥१॥

श्रीसम्पन्ना भरतविषयस्यार्थिकी राजधानी
यावत्पारं नहि गतवती जातियुद्धार्णवस्य ।
तावज्जाता पुनरपि महामुम्बयी मन्दभाग्या
तीव्रोग्रस्य प्रबलविकटातङ्कवादस्य लक्ष्यम् ॥२॥

वज्रापातः खलु समभवन्मोहमय्यामनभ्रः
शैलो ज्वालामुख इव चिरात्प्रास्फुटदुग्रचण्डम् ।
भूकम्पो नु प्रबलविकरालोग्ररूपो बभूव
किंवाऽऽप्लावः प्रलयपिशुनः प्रावहद् वृष्टिहीनः ॥३॥

वर्षेऽस्मिन् द्वादशतमतिथौ मार्चमासेऽपराह्णे
स्वल्पे होराद्वितयसमये मोहमय्यां दिवैव ।
अत्युग्रा भीषणतममहाधातुका नाशकाश्च
विस्फोटाः षोडशपरिमिता नैकभागेष्वभूवन् ॥४॥

कालग्रस्ताः सपदि शतशस्तेषु लोका निरीहाः
विच्छिन्नाङ्गा गणनरहिता भूरिसंख्याश्च विद्धाः ।
संख्याहीना भवननिचयाः भूमिसात्सम्बभूवु—
रुध्वस्तं च द्रविणममितं ह्यञ्जसो रूप्यकाणाम् ॥५॥

अंशानां तद् विनिमयगृहं व्योमचुम्ब्युच्चहर्म्यं
ध्वस्तीकर्तुं विपणिसमये लोकसम्मर्दकाले ।
जालमैर्निम्नास्थिततलगृहे स्थापितस्फोटकेन
नष्टा लोका अपि च शतशः कारयानानि तत्र ।६।

येरेण्डीयाप्रथितभवने वायुयानालये च
जातः स्फोटः प्रबलविपुलो येन नष्टा बभूवुः ।
नैके लोका अपि च शतशस्तुङ्गहर्म्याणि पेतु—
रोमानाख्यः प्रथितधनकोषश्च भस्मी बभूव ।७।

वर्लीक्षेत्रे तदनु समभूत्पारपत्रालयेऽपि
तीव्रः स्फोटो विपुलजनसंहारकारी करालः ।
उद्ध्वस्तानि प्रचुरवसयानानि हर्म्याणि तेन
दूरोत्क्षिप्ता अपि च बहवो मानवा च्छिन्नदेहाः ।८।

प्लाझा = सेनाभवननिकटं सेञ्च्युरीनामहट्टे
सीराकाराख्ये पथिकभवने चैव सेण्टारनाम्नि ।
स्फोटा जातास्तदनु विकटा भीषणा माहिमेऽपि
संक्षुब्धैवं भरतविषयस्यार्थिका राजधानी ।९।

चण्डास्फोटः श्रुतिविवरभिद् वह्निकाण्डः प्रचण्डः
धूमौघश्च प्रचुरविकटः सर्वतो नेत्रघाती ।
तेनोद्भ्रान्तैर्भयकवलिते विद्रुतं लोकवृन्दै—
र्नो जानद्भिः किमिति सहसा मोहजालावलीढैः ।१०।

हाहाकारः करुणरुदितं दीनदुःखार्तनादः
त्राहि त्राहि प्रतिदिशमभूच्छिन्नगात्रार्तरावः ।
हर्षोल्लासप्रचुरनगरी दुःखशोकालयोऽभू
दासीदित्थं परमविकला दुःस्थितिर्मोहमय्याः ।११।

उच्छेत्तुं भारत जनपदस्यार्थतन्त्रं समूलं
लोकानां शासकजनगणे पूर्णमास्थां निहत्य ।
सर्वक्षेत्रेष्वमितमहतीमव्यवस्थां विधातुं
नूनं कूटं विरचितमभूद्भारतस्यारिसार्थैः ।१२।

अस्यात्यन्तं प्रबलतमविस्फोटकाण्डस्य पृष्ठे
भाव्यं केनाप्यतिबलवता शत्रुराष्ट्रेण नूनम् ।
शङ्कासूचिर्ध्वनयतितरां पाकमेवामनूनं
तस्यालक्ष्यप्रबलविपुलं घोरवैरानुबन्धम् ।१३।

आस्वातन्त्र्याद्भारतविषयस्योत्तमाङ्गं जिहीर्षुः
पाको हत्याहननविकटक्रूरकृत्यान्यकार्षीत् ।
युद्धं वारत्रयमपि समारोपयद् भारतेऽसौ
पञ्जावे प्रेरयति दशकाद् भीषणातङ्कवादम् ।१४।

पञ्जावे कश्मिरजनपदे भीषणातङ्कवादं
प्रोत्साह्य यत्रास्थिरतमदशामव्यवस्थां विधित्सोः ।
पाकस्यैवाजननसमयाद्भारतस्योग्रशत्रो —
विस्फोटानां प्रभवतितरामासुरं घोरकार्यम् ।१५।

आर्डीयक्साभिधवरमहाभीषणं शीघ्रदाह्यं
चण्डस्फोटं निरविशयितं घातुकं द्रव्यमेनत्
व्यक्तिः कर्तुं प्रभवति कथं नैककोटिव्ययेन
कूटस्यास्य प्रभवतितरां सूत्रधारो हि पाकः ।१६।

जात्यन्धान् मुस्लिमयुवजनान् भारतद्रोहपूर्णान्
सन्नाहभास्याधुनिकबलवद्हेतिभिर्घातिहेतोः ।
पञ्जाबे कश्मिरजनपदे प्रेषयित्वाऽद्ययाव —
ज्जाल्मैरन्ने प्रथितनगरी ध्वंसलक्ष्यं व्यधायि ।१७।

उद्योगानां प्रमुखनगरीं राष्ट्रवाणिज्यकेन्द्रं
विश्वख्याता भरतविषयस्यार्थिकी राजधानी ।
बुद्धया हत्याहननविकटध्वंसलक्ष्यं हि चक्रे
भीतिग्रस्तं विकलविकलं येन राष्ट्रं भवेद् वै ।१८।

कूटस्यास्य प्रभवतितरां योजनाबद्धसूत्रं
नोचेत्कार्यान्वितिरपि यथार्थं न शक्यास्ति तस्य ।
स्फोटास्त्राणां नियतसमये स्थापनार्थं नियुक्तैः
क्रीतैः स्पष्टीकृतमिह जनैः सापराधैर्निबद्धैः ।१९।

तेषां साक्ष्यः प्रकटितमभूदस्य कूटस्य केन्द्रं
पाकिस्ताने विदितनगरं नूनमासीत् कराची ।
तस्मिंस्तेषां किल समभवन् भारतीयाः सहायाः
चौरव्यापारिण इह जना मेमनाः दावुदाद्याः ।२०।

विस्फोटास्त्रप्रचुरनिकरं कोटिशो रूप्यकाणा—
मत्रानेतुं सुनिपुणतया चाप्रमादं प्रयोक्तुम् ।
यन्त्रभूता भरतविषयद्रोहिण सन्ति देशे
तस्माद् भाव्यं प्रमुखमुखरैः सावधानैश्च लोके। ।२१।

राष्ट्रद्रोहाचरितदनुजा दावुदा मेमनाद्याः
पाकं प्राप्ताः परमकुशलं घोरनाशं विधाय ।
इत्येतत्तत् परममयशो राष्ट्रचारप्रणाल्या
नूनं लज्जास्पदमतितरां भारतायास्ति सर्वम् ।२२

आर्डीयक्सोपमवरमहाभीषणस्फोटकानां
ठाणे-मुम्बापुरपरिसरे भूरिमात्रोपलब्धेः ।
गांभीर्यं भीषणपरिणतिर्न नमस्यानुमेये
राष्ट्रस्यैक्यं भवति नितरां संशयग्रस्तमद्य । ।२३

पूर्वो रक्षासचिववरमः श्रीपबारो जुघोष
यल्लाहोरे निकटशिविरे स्फोटकास्त्रप्रशिक्षा ।
आसीद्दत्ता नियतमिति तैर्घोषणीयः समेत्य
पाकिस्तानो भुवनसदसा राष्ट्रमातङ्कवादि ।२४

मुम्बय्यां भारतजनपदस्यार्थवाणिज्यकेन्द्रे
कृत्वा घोरं प्रबलविकटं मर्मघातिप्रहारम् ।
पाकेनास्मत्प्रियभरतभूविप्रतीपं करालं
युद्धं ह्येयाप्रकटविकटं नूनमारब्धमस्ति ।२

अस्माकं तु प्रमुखमुखरा शान्तिमन्त्रं जपन्तः
पाकप्रोत्साहितमतितरां भीषणातङ्कवादम् ।
स्पष्टं दृष्ट्वा ह्यपि कथयितुं नोत्सहन्ते भयार्ताः
दैवायत्ता भवति सुतरां भारतस्याद्य रक्षा ।२

स्मार्यो वीरो लघुजनपदो नूनमिस्त्रायिलाख्यो
यन्नाशार्थं विहितशपथा नैकमुस्लीमदेशाः
विद्युद्गत्या शिबिरनिकरान् नूनमाक्रम्य तेषा—
मेकेनैव प्रचुरपृतना नाशयित्वा परास्ता: ।२७।

प्रोत्साह्याम प्रतिभयमहाभीषणातङ्कवादं
नानाहत्याहननदुरितान्यद्य यावद् विधाय ।
ध्वस्तीकर्तुं प्रमुखनगरीं स्फोटकैरस्य कूटं
नूनं घोरा भवति परमा पाकपापस्य काष्ठा ।२८।

किन्त्वस्माकं शिखरमुखरा: स्वार्थमात्रैकनिष्ठाः
एतद्घोरं प्रकटविकटातङ्कणादस्य खड्गम्
अस्मद्राष्ट्रोपरि च सततं लम्बमानं ह्युपेक्ष्य
क्षुद्रस्थानासनकलहिता नैव दत्तावधाना: ।२९।

कार्यं नूनं किमपि बलवत्सारवद्भारतेन
नोचेद्देशः पुनरपि भवेत्खण्डितश्छिन्नभिन्न: ।
सर्वै: पक्षैर्निजदलगतान् क्षुद्रभेदानपास्य
पाक: सम्यक् परमबलवत्पाठनीयं च पाठन् ।३०।

देशे दीर्घं प्रबलविकरालोग्रवादं प्रचोद्य
विस्फोटास्त्रै: पुनरिह महाघोरनाशं च कृत्वा ।
पाको नूनं भवति विकटातङ्कवादीह राष्ट्रं
ह्येवं विश्वं विषयमुखरैर्बोधनीयं प्रमाणै: ।३१।

तथ्यं त्वेकं स्मरणसरणे: सारणीयं न धुर्यै —
र्यत्प्रश्नोऽयं भवति नियतं देशयोर्नैव जात्यो: ।
हिन्दूभिर्मुस्लिमजनगणै: स्थेयमत्रैव सार्धं
मन्तव्या नो भरतविषयद्रोहिणी पूर्णजाति: ।३२।

— पाटिल निवास गुलबर्गा



# “करोलशैल शिरसा नमामः”

प्रेमलाल गौतम



सुतुङ्गशिखरे अधित्यकायाम्
ग्रामीण – ग्रामा स्तुवन्ति यत्र ।
मुह्यन्ति कान्तिः खलु पादपानाम्
करोलशैलं शिरसा नमामः ।१।

विभान्ति परितस्तरवो विशाला:
तूनाम्रकेलास्तालास्तमाला: ।
अनन्तपुष्पाणि च भांति यत्र
करोलशैलं शिरसा नमामः ।२।

आधारभूतः खलु जीवनानाम्
दाता जलानां च त्राता जनानाम् ।
हिमान्वितो यस्य किरीटदेश:
करोलशैलं शिरसा नमामः ।३।

दुरूहभागेषु सरित्तटेषु
गायन्ति गीतं विटपाः वनानि ।
मृग – मर्कटफेरुसंयुतम्
करोलशैलं शिरसा नमामः ।४।

फेनान्वितान् यस्य जलप्रपातान्
दृष्ट्वा जनाः तान् मुग्धा भवन्ति ।
हरन्ति लोलाऽश्विनी पयस्विनी
करोलशैलं शिरसा नमामः ।५।

जगदीश्वरो यः सर्वेश्वरो यः
विश्वेशाखिलेशसर्वोन्नतो यः ।
संरक्षको यः सततं नराणाम्
करोलशैलं शिरसा नमामः ।६।

– राजकीय संस्कृत महाविद्यालय
सोलन, हिमाचल प्रदेश ।

—

शिशुगीतम्

# कः किं सूचयति ?

— अभिराजो डा. राजेन्द्र मिश्रः

★

कः सूचयति कपोतं कमलं
खः कथयति खद्योतम् !
गः सूचयति गवाक्षं गरुडं
घः घण्टां घनपोतम् !!

चः सूचयति चक्षुषो चटकां
छः छत्रं ननु छागम् !
जः जनार्दनं जननीं ब्रूते
भः भर्भरं सुवाद्यम् !!

टः टङ्कं टिट्टिभकं तनुते !
ठः ठक्कुरं नरेशम् !
डः डमरुं डिण्डिमं डिम्भकं
ढः ढक्कां प्रमथेशम् !!

तः तनयं तनुते तथागतं
थः थूत्कृतमनभीष्टम् !
दः दर्पणं सूचयति दशनं
धः धनुर्धरं श्रेष्ठम् !!

नः नक्तं नगपतिहिमालयं
पः पनसं च पताकाम् !
फः सूचयति फलं ननु फणिनं
बः बर्हिणं बलाकाम् !!

भः भक्तं सूचयति भवानीं
मः मन्दिरं पवित्रम् !
यः यज्ञं रः रथं रसालं
लः लूताञ्च लवित्रम् !!

वः वत्सकं वटं शः शशिनं
षः षट्पदं षडास्यम् !
सः सज्जनं सारसं तनुते
हः हंसं सदुपास्यम् !!
क्षः क्षुरकं त्रः त्र्यम्बकदेवं
ज्ञः ज्ञानिनं प्रसूते !
गायं गायं सुमधुरगीतं
शब्दान् शिशुः वृणीते !!

## कुतो न्वागताः पयोदाः ?

अम्ब ! कुतो न्वागताः पयोदाः ?
अम्ब, कुतस्त्य इमे पयोदाः ??
केन निर्मिताः केन वर्धिताः
केन विविधवर्णाऽनुरञ्जिताः
केन नभसि सञ्चिताः पयोदा ?
जननि ! कुतस्त्या इमे पयोदा ?
क्षणे शशाः क्षण एव सैरिभाः
प्लवगसिंहगजराजसन्निभाः
इन्द्रजालमनुगताः पयोदाः !
जननि ! कुतस्त्या इमे पयोदाः ?
द्रुतगत्या धावन्ति नदन्ति
सहसैते वर्षन्ति पृषन्ति
चपलाभिस्सङ्गताः पयोदाः !
जननि ! कुतस्त्या इमे पयोदाः ?
क्वनु गोपितं तदम्बुनिधानम् ?
कियत्स्थायि ननु कियत्प्रमाणम् ?
केन साधु परिचिताः पयोदाः ?
जननि ! कुतस्त्या इमे पयोदाः ?
जलदो जननान्तरे भवेयम्
लोकमिमं वृष्ट्या सुखयेयम्
उपकुर्वन्त्यभिमताः पयोदाः !
अम्ब ! कुतो न्वागताः पयोदाः ??

— संस्कृत विभागाध्यक्षः
हिमाचल प्रदेश विश्वविद्यालय। शिमला-५



# डा० जगन्नाथ-पाठकाय वाचस्पति-पुरस्कार:

के. के. बिडला फाउंडेशनप्रन्यासेन दीयमानेषु पुरस्कारेषु संस्कृत-साहित्यकाराय देयो वाचस्पतिपुरस्कार: ऐषमो रणवीर केन्द्रीय संस्कृत विद्यापीठस्य जम्मूस्थस्य प्राचार्याय वरिष्ठकवये डा. जगन्नाथपाठकाय प्रदीयेतेति हर्षास्पदं वृत्तम्। पंचाशत्सहस्रमुद्रात्मकोऽयं पुरस्कार। संस्कृतस्योत्कृष्टरचनामाधृत्य तत्प्रणेत्रे प्रदीयते। १९८३ वर्षे प्रकाशितं डा० पाठकस्य मृद्वीकाख्यं संस्कृत-काव्यमस्मै पुरस्कारायार्हतामभजदिति निर्णायकमंडलेन सूचितम्। प्रथितस्य संस्कृतकवे: डा० जगन्नाथपाठकस्य काव्यसंकलनानि 'कापिशायनी', 'पिपासा' इत्यादीनि सुविदितानि संस्कृतविद्वत्सु। अन्यापि काचन काव्यकृतिरनुपदमेव प्रकाशयिष्यते इत्यपि सूचनाऽधिगता। 'दिव्यज्योति:' सप्रमोदं वर्धापयति कविवर्यम्।



# श्रीराधाकान्त-रथाय सरस्वती-संमान:

के. के. बिडला फाउंडेशन प्रन्यासेन प्रथितसाहित्यकाराय प्रतिवर्षं 'सरस्वती-संमान:' (भारतीयभाषासु) हिन्दीसाहित्यकाराय व्यास संमान:, राजस्थानीय-हिन्दीसाहित्यकाराय बिहारी — पुरस्कार:

संस्कृतविदुषे च वाचस्पतिपुरस्कारः प्रदीयते। ऐषमः उडियाभाषायाः कवये श्रीराधाकान्तरथाय सरस्वतीसमानः तल्लिखित श्रीराधाख्यम्' उडियामहाकाव्यमाधृत्य प्रदत्तः। श्रीरथः आई. ए. एस. सेवाया अधिकारी आसीत्। उडीसाराज्यमुख्यसचिवादि - पदान्यधिष्ठत्य सेवानिवृत्तोऽयम् उडियाभाषाया विद्वान् कविश्चास्ति सरस्वतीसंमानो हि देशस्य मूर्धन्यतमः पुरस्कारो यतो ह्यस्मिन् त्रिलक्षमुद्रामितोऽर्थराशिः समर्प्यते।

## पं० पट्टाभिरामशास्त्रिणां स्वः प्रयाणम्

अतीव शोकसंतप्ताः सर्वे संस्कृतसेविनो दुःसंवादमिममाकर्ण्य यदस्मिन् वर्षे ऋषिपंचमीदिवसो देशस्यास्य शास्त्रज्ञेन, वेदमीमांसा-साहित्यव्याकरणाद्यखिलविद्याविशारदेन मूर्धन्यपदाधिष्ठितेन विदुषा वञ्चितानस्मान् सर्वान् कृतवानिति। मीमांसाकेसरी विद्यासागरः पं० पटाभिरामशास्त्री गतान् कतिपयवर्षान् बाराणस्यां निवसन्नभूत्। तमिलनाडुप्रान्ते कांचीपुर्यन्तर्भुक्ते पैलशूरग्रामे १९०८ ई. वर्षे जनिं लब्धवताऽनेन मीमांसान्यायसाहित्यादिविविधविषयाणां वैदुष्य म० म० चिन्नस्वामिशास्त्रिसदृशानां विदुषां सकाशादर्जितं, काशीहिन्दूविश्वविद्यालये प्राध्यापकपदं च प्रथमतो धारितम्। तदनन्तर यथा यथाऽस्य वैदुष्यख्यातिर्देशे प्रसृता, अनेन बहून्युच्चपदानि विविधदेशेष्वधिष्ठितानि। १९५४ ई. वर्षे जयपुरस्य महाराजसंस्कृतकालेजस्य प्राचार्यपदमलंकृतवताऽनेन महाविद्यालयस्यास्य सर्वतोमुखी श्रीवृद्धिः कृता। जयपुरपुरन्दरेण 'विद्यासागर' इत्युपाधिनाऽयं समानितः। १९६२ वर्षे सोऽयं कलिकाताविश्वविद्यालये मीमांसाविभागाध्यक्षत्वमंगीकृत्य तत्र गतः। तदनन्तरं वाराणसेयसंस्कृतविश्वविद्यालये स्वीचकार प्रकृष्टमाचार्यपदम्। १९७४ ई. वर्षे विश्रामग्रहणानन्तरमप्ययं वाराणस्यां निवसन् प्राच्यविद्याशोधकेन्द्रस्य संचालनं कुर्वन्नभूत्। अस्मिन्नेव वर्षे भारतशासनेन पद्मभूषण' संमानेन सोयमलंकृतोऽभूत्। उत्तरप्रदेशसंस्कृत - अकादम्या लक्षमुद्रात्मकपुरस्कारेण, कांचीपीठशङ्कराचार्येण "शास्त्ररत्नाकर" मानोपाधिना, वर्धमानविश्वविद्यालयेन डी. लिट. इत्युपाधिनाऽयमलंकृतः। वाराणसेयविश्वविद्यालयेनाप्यस्मै सर्वोच्च उपाधिः प्रत्तः।

देहल्यां चिकित्सां कारयन्नयमभूत्, यत्रायमस्मान् त्यक्त्वा ब्रह्मसायुज्यं प्राप्तवान् । एतेषां विद्वद्वर्याणामनेके शिष्याः सर्वस्मिन्नपि देशे प्रसृताः सन्ति । मीमांसासाहित्यादिविषयाणामनेके ग्रन्था पंडितप्रकाण्डेनानेन व्यलेखिषत । १६८१ वत्सरे एतेषां सेवायामभिनन्दनग्रन्थस्य समर्पणं तत्कालीनप्रधानमंत्रिण्या श्रीमतीन्दिरागांधिमहाभागया कृतमभूत् । जयपुरं प्रत्येषां विशिष्टः स्नेहोऽभूत् । जयपुरीयैः संस्कृतविद्वद्भिर्महाराजसंस्कृतकालेजप्राङ्गणे शोकसभामायोज्य पं० पट्टाभिरामशास्त्रिभ्यः प्रभूतसंमानसमृद्धा भावपूर्णा शोकांजलयः समर्पिताः । सितम्बरमासस्य प्रथमो दिवस एवंविधंशोकवृत्तान्तमानीतवानिति खिन्ना सर्वेऽपि संस्कृतज्ञाः संस्कृतजगतः सेयमपूरणीया क्षतिरिति सर्वेऽनुशोचन्ति वियोगमेतेषां विद्वन्मूर्धन्यानाम् ।



## श्रीजीवन्यायतीर्थस्य स्वर्गारोहणम्

सुमहतः शोकस्य समाचारो यद्वङ्गप्रदेशीयो विख्यातो विद्वान् लेखको नाटककारश्च श्रीजीवन्यायतीर्थमहाभागः २८ अक्टूबरदिवसे दिवमारुरोह अयं सुचिराद्रुग्णोऽभूत् । चौबीस परगना - प्रान्तस्योत्तरभागे निवसता पं० श्रीजीवेन १०३ वर्षस्यायुरधिगतम् अयं भारतविश्रुतो मनीषी विगतस्य युगस्य अग्रणीर्लेखको ऽभूत्, विविधकाव्यनाटकनिबन्धग्रन्थादिरचनया चानेन संस्कृतसाहित्येतिहासे समुल्लेखनीयं स्थानमधिगतमासीत् । अनेन प्रणीताः शताधिका ग्रन्था अद्यावधि प्रकाशमुपयाताः । बहवस्तु अद्याप्यप्रकाशिता एव सन्ति । ✶

## पं० गौरीनाथशास्त्रिणां स्वर्गारोहणम्

विश्रुता विद्वन्मूर्धन्याः पं. गौरीनाथशास्त्रिणः कलिकातायां स्वाधीनतादिवसस्य संध्याकाले कैलासवासिनः संजाता इति भृशं सन्तापकः समाचारः । ८७ वर्षवयस्कैः पं० गौरीनाथशास्त्रिभिः कालिकात्तास्थसंस्कृतकालेजस्य प्राचार्यपदं, संपूर्णानन्दसंस्कृतविश्वविद्यालयस्य कुलपतिपदम्, एवं बहूनि पदानि समलंकृतानि, बहवो ग्रन्था विलिखिताः, भरतनाट्यशास्त्र - संस्कृतकथादीनामनेकेषां ग्रन्थानां वङ्गभाषायामनुवादो विहितः, अनेके शिष्याः संस्कृतविद्वांसो विनिर्मिताः । तेषां सभाजनं राष्ट्रपति - संमानेन, विविधैः पुरस्कारैर्विरुदैश्चानुष्ठितो भारतसर्वकारेण, संस्कृतविद्वत्समाजेन च । एवं विधस्य विदुषः प्रयाणं संस्कृतभारत्या अपूरणीयक्षतिरिति संतप्तेन मनसा समर्प्यते तस्मै विनीतः श्रद्धाञ्जलिः ।

# देल्ही संस्कृत – अकादम्याः १९९१-९२ वर्षीयाः उपलब्धयः

१. सम्मेलनानि

(क) अखिल-भारतीय-संस्कृत-कविसम्मेलनम् । (ख) अखिल-भारतीय-त्रिदिवसीय-संस्कृतपत्रकार-सम्मेलनम् ।

(ग) स्थानीय-संस्कृत-कविसम्मेलनम् ।

(घ) श्लोक संगीत-सम्मेलनम् ।

(ङ) द्विदिवसीय-वैदिक-सम्मेलनम् ।

२. संगोष्ठ्यः

(क) ज्योतिषशास्त्रस्य प्रामाणिकता । (ख) संस्कृत काव्यगोष्ठी

(ग) भारतीयसन्दर्भे संस्काराणां महत्त्वम्

(घ) संस्कृतशिक्षक-संगोष्ठी (ङ) संसाराय वैदिकायुर्वेदस्य योगदानम् (च) वेदेषु-इतिहासतत्त्वानि सन्ति न वा । (छ) पण्डितराज-जगन्नाथस्य साहित्ये राष्ट्रियभावना । (ज) कालिदास-साहित्ये स्त्रीणां महत्त्वम् (झ) बाल्मीकि-रामायणे मानवीय-चेतना (ञ) राष्ट्रियैकतायां भारतीय-भाषाणां योगदानम् ।

३. परिचर्चा

(ट) धर्मस्य शाश्वतमूल्यानि राजनीतिश्च (ठ) संस्कृतस्य पंजाबीभाषाया उपरिप्रभावः (ड) वर्तमानसन्दर्भे बौद्धधर्मस्य प्रासंगिकता (ढ) धर्मस्य वर्तमानयाथार्थ्येन सह कथं समन्वयः स्यात् ।

४. परिसंवादाः

(त) जैनसंस्कृतवाङ्मये स्त्रीपुरुषयोः समानता (द) ज्योतिषविज्ञानस्याधारे सूर्यचन्द्र-ग्रहणविवेचनम् ।

५. सम्मानाः

(प) संस्कृतसेवासम्मानः (फ) विद्यालयीय-संस्कृत-सेवासम्मानः (ब) अकादमीसहयोगिसम्मानः ।

६. प्रतियोगिताः

(य) संस्कृतश्लोकसंगीतप्रतियोगिते ।

१. विद्यालयस्तरीया ।

२. महाविद्यालयस्तरीया ।

(र) श्लोकोच्चारणप्रतियोगिता । १. विद्यालयस्तरीया ।

(ल) संस्कृतनाट्यप्रतियोगिते । १. विद्यालयस्तरीया । २. महाविद्यालयस्तरीया ।

(व) संस्कृत-भाषण-प्रतियोगिताः ।

१. संस्कृतविद्यालयस्तरीया ।

. सामान्यविद्यालयस्तरीया ।

३. महाविद्यालयस्तरीया च ।

(श) नवोदितसंस्कृतकविप्रतियोगिता । (ष) श्लोकान्त्याक्षरीप्रतियोगिते । १: संस्कृतविद्यालयस्तरीया । २. संस्कृतमहाविद्यालयस्तरीया ।

(स) संस्कृतश्लोकसंगीतसन्ध्या प्रतियोगिते।

१. कनिष्ठवर्गस्तरीया।

२. वरिष्ठवर्गस्तरीया।

७. पुरस्कारः

(ह) संस्कृत-शिक्षक-पुरस्कारः।

(क्ष) अखिलभारतीय-मौलिकसंस्कृतसाहित्यरचना पुरस्कारः।

(त्र) संस्कृतप्रतिभापुरस्कारः।

८. अध्ययनाध्यापनकार्यक्रमे

(क) संस्कृताध्ययनप्रशिक्षणशिविरम्।

(ख) संस्कृत-अध्ययन-केन्द्रयोजनाः।

९. प्रकाशनसहयोगः

(क) पाण्डुलिपिप्रकाशनसहयोगः।

१०. राष्ट्रस्तरीयकार्यक्रमेषु-संस्कृत-अकादमी-योगदानम्।

११. प्रकाशनादि

(क) संस्कृतमंजरी प्रकाशनम् (ख) महावुद्धवत्यु महाग्रन्थस्य प्रथमद्वितीयभागयोः प्रकाशनम् (ग) अकादमी-विवरणिका-प्रकाशनम्।

१२. टेलीफिल्म योजना

१३. संस्कृत स्तोत्रटेपयोजनायाम्

१. वर्णात्मक-भगवती-सुप्रभाती-सुप्रभातम्। २. हनुमत्सुप्रभातम्।

१४. समारोहाः

(क) प्रतियोगिता-पुरस्कारवितरण-समारोहः।

(ख) महाबुद्धवत्थु प्रथमभाग–लोकार्पण–समारोहः।

(ग) भीमशतकम् काव्य-लोकार्पण-समारोहः ।

(घ) संस्कृतसाहित्य सेवासम्मान-समारोहः (१९९०-९१ वर्षीय)

(ङ) अकादमीसहयोगेन प्रकाशितानां संस्कृतग्रन्थानां लोकार्पणसमारोहः ।

(च) संस्कृतमंजरीपत्रिका लोकार्पणसमारोहः

(छ) संस्कृतदिवसमारोहः ।

१५. संस्कृतपत्र-पत्रिका-विज्ञापनसहयोगः

अकादमीपक्षतः समायोजितानां समेषां कार्यक्रमाणां संस्कृतज्ञैः संस्कृतानुरागिभिश्च महती प्रशंसा कृता कार्यक्रमेषु समागतः जनसम्मर्दस्तेषां समुत्साहोऽकादम्यैः पाथेयरूपी विद्यते। येनाकादम्याः समे कर्मचारिणः द्विगुणेन समुत्साहेननिष्ठया च कार्यसम्पादने प्रवृत्ताः भवन्ति, अकादम्याः विकासाय सम्बर्धनाय च अस्याः समितिरपि धन्या । यस्याः मार्गदर्शनमस्मान् कृतार्थीकरोति ।

— श्रीकृष्ण सेमवालः
सचिवः

❀❀❀❀❀❀❀❀❀❀❀❀❀❀❀❀❀❀❀❀❀❀❀❀

## पाठकाः प्रार्थ्यन्ते

मान्याः !

कृपया वार्षिकशुल्कमविलम्बं प्रेष्यताम् । पत्रप्रेषणेनापि वार्षिकशुल्कप्रेषणार्थं प्रार्थना कृता किन्तु स्वल्पैरेव महानुभावैः शुल्कप्रेषणं कृतम् । अतः सविनय प्रार्थ्यते यत् शीघ्रमेव शुल्कप्रेषणेन सहायता कार्या ।

— सम्पादकः



# [सं]पादकीयम्

## संस्कृतसम्मेलनानि

यद्यपि भारतवर्षे यत्र तत्र संस्कृतसम्मेलनानि जायमानानि सन्ति । [तथा]पि भारतस्य केचन प्रदेशास्तादृशा: सन्ति यत्र न तत्कृते प्रयासा क्रियन्ते । [अत]: प्रार्थ्यते यत्भारतस्य प्रतिप्रदेशं प्रतिमासं सम्मेलनद्वयमपि चेदायोजित[ं] [स्या]त् तेन प्रशासनस्य ध्यानं संस्कृतं प्रति समाकृष्टं भवति । गणतन्त्र-[दिव]सेऽद्य खलु संस्कृतमालक्ष्य संस्कृतज्ञानां कल्याणाय च सर्वमिदमावश्य[कम]् । अथ यत्र सम्मेलनानि भवन्त्यपि तत्रापि संस्कृतज्ञा केवलमात्र [उप]स्थितिमेव स्वीयामावश्यकीं मन्वाना: न किमपि कार्यरूपेण पश्चात् [कुर्व]न्ति सम्मेलनेषु पारितप्रस्तावमालक्ष्य यदि संस्कृतज्ञै: स्व स्व प्रदेशेषु [वा] कार्यरूपेण चेन्न किमपि क्रियते चेत् सम्मेलनानां नास्ति कोऽपि [ला]भ: । आशासे संस्कृतज्ञा: स्वाध्याय करिष्यन्ति । नेतारश्चापि न ये [सं]स्कृतस्यावश्यकतां समुद्घोषयन्ति परन्तु कार्यरूपेण न किमपि कुर्वन्ति ।

## क्व वर्तते एकता संस्कृतज्ञेषु ?

संस्कृतप्रचाराय अ० भा० संस्कृतसंगठनेन भाव्यमस्ति । सन्त्यपि [कानि]नि अ. भा. संस्कृतसंगठनानि तान्यपि पूर्णत: क्रियाशीलानि न सन्ति । [एवं] विधसंगठनेभ्य: संस्कृतज्ञै: पूर्णसाहाय्यं दातव्यमस्ति तदैव संगठनानी-[मा]नि सफलानि भवितुमर्हन्ति । यदि संस्कृतज्ञानां सहयोगस्तत्र सर्वेषां न [भ]वेच्चेत्तदा कथं किल संस्कृतोत्थानस्य संस्कृतज्ञानामुन्नते: वा स्वप्न: [स]ाकारो भवेत् ?

किमु संस्कृतज्ञा. विचारयिष्यन्ति - गाम्भीर्येणात्र करिष्यन्ति च [कि]मपि स्वसंरक्षणाय एव संस्कृतन्तु देवीवाक् सा स्वरक्षाकरणे स्वयं [स]मर्था ।

— केशव शर्मा

❀ ❀ ❀ ❀ ❀ ❀ ❀ ❀ ❀ ❀ ❀ ❀ ❀

[मु]द्रक: प्रकाशक :—
[भ]ारतोमुद्रणालय भारती विहार, मशोबरा - शिमला १७१००७ (हि. प्र.)
स्वामी:– श्रीमती आचार्य रत्नकुमारी शर्मा,
दूरभाष : [78459 / 28-200]

जून १९९३ आषाढ़ २०५० — वर्षम् – ३७ अङ्क: ६
वार्षिक मूल्यम् ५० रु०

# संस्थान के प्रकाशन

# दिव्यज्योतिः





संस्कृतस्य सचित्रमासिकम्



सेयं धन्या क्षमादेवी धन्यं तन्निर्मितञ्च तत् ।
साहित्यं यत्र सर्वत्र देशगौरव-वर्णनम् ॥
धन्या तस्याः सुता दिव्या चार्वङ्गी च वरानना ।
नीलावती महादेवी संस्कृतस्य सुरक्षिका ॥

शिमला जुलाई, १९९३
वर्षम् ३७ अङ्कः १०

# दिव्यज्योतिः

संस्थापतम् १९५६

प्रधानसम्पादकः—

आचार्य केशव शर्मा



संस्थापकाः तथा आद्यसम्पादकाः

आचार्यश्रीदिवाकरदत्त शर्माणः,

राष्ट्रपतिसम्मानिताः

(पत्रमिदं हि० क० सं० भा० अकादमी प्रदत्तानुदानसाहाय्यम् । पत्रिकागत मुद्रणदोषाणां सम्पादकीयनीति-विषये च अकादमीदायित्वं नास्ति)

हिमाचल प्रदेश - पंजाब–हरियाणा - जम्मूकश्मीर मध्य प्रदेश राजस्थान महाराष्ट्र उत्तरप्रदेश शासन–स्वीकृतं केन्द्रशासनपुर संस्कृतम्– संस्कृतस्य सचित्रं मासिकम् ।


## पत्रस्य उद्देश्यानि तथा नियमाः

सरलसरस सुबोध-साधनैः सर्वस्मिन् संसारे संस्कृतस्य प्रसारः, साहित्यान्तर्गतानां सकलकलानां समन्वेषणं, संसारस्य हितसम्पादनम्, एवं लौकिक - अलौकिकस्वातन्त्र्यस्य प्राप्तिः ।

"दिव्यज्योतिः" प्रतिमासं पञ्चदशतारिकायाम् (आङ्ग्लमानेन) प्रकाशितं भवति ।

पत्रस्य वार्षिकमूल्यं ५० रु० अर्धवार्षिकं २५ रु० एकस्याङ्कस्य च रु० ४.५० भवति ।

वर्षारम्भः अक्तूबरमासतः भवति ग्राहकः कस्मादपि मासाद् भवितुं शक्नोति। ग्राहकैः, "सम्पादक, दिव्यज्योतिः, भारती विहार, शिमला-१७१००" इति संकेते धनादेशेन वा शु. प्रेषणीयम् ।

# विषयानुक्रमः

# भाषाविज्ञानशतकम्

— धीरेन्द्र झा. संस्कृतनगरम्, छपकी:



"मानवीयविचाराणां प्रकटीकरणाय या,
द्वारभूतास्ति तां विज्ञा:, भाषामत्र वदन्ति हि ।१।"

जिसके द्वारा मानवीय आचारों और विचारों का प्रत्यक्षीकरण एवं अभिव्यक्ति करते हैं उसे भाषा के नाम से अभिहित किया जाता है। अर्थात् भाषा ही वह प्रत्यक्ष साधन या माध्यम है जिस से सभी अपने मनोभावों (सुख, दु:ख, राग एव द्वेष) को अभिव्यक्त करते हैं।

वदित्वा च लिखित्वा च विचारप्रकटीक्रियाम् ।
भाषणं चापि लेखं च क्रमश: कथयन्ति तम् ।२।

इसके माध्यम से ही लिखकर, बोलकर और भाषणादि कार्यों एवं विचारों का संपादन होता है।

व्याकृते नियमान् धृत्वा, पूर्वमक्षरसंस्तुति: ।
तेभ्य: स्यात् शब्दरचना, शब्दैर्वाक्यं भवेदिह ।३।

भाषा के विकसित होने के क्रम में व्याकरण, अक्षर, शब्द और वाक्य की रचना हुई। प्रथमत: व्याकरणानुसार अक्षर का निर्माण, द्वितीयत: अक्षरों से शब्द तथा शब्दों से वाक्यनिर्माण हुआ।

"समूह एव वाक्यानां लेखस्य भाषणस्य च ।
रूपं गृह्णाति च पुनस्तद्विभागो द्विधा भवेद ।४।

वाक्यों के समूह जब लेख और भाषण का रूप लेते हैं तब उसके गद्य एवं पद्य दो भेद होते है।

"गद्यपद्य विभेदेन द्वयोः सङ्घो यदा भवेत् ।
साहित्यं तदिह प्रोक्तं यस्य व्याख्याऽप्रसंगिका ।५।

गद्य और पद्य का संघ ही साहित्य कहा जाता है ।

"पूर्वमावश्यकं चास्ति अतएव समासतः ।
प्रथमं कथनं चास्य, क्रियते बुद्धिमत्तरैः ।६।

ग्रन्थ के प्रारंभ में लेखक का प्राक्कथन आवश्यक माना गया है अतः विद्वानों द्वारा निर्धारित नियमों का अनुसरण करता हुआ प्रस्तुत लघुकाय पुस्तक का उपर्युक्त प्राक्कथन लिख रहा हूं, शेष निर्णय नीर-क्षीर विवेक हेतु विद्वत्जनों पर ही छोड़ता हूं ।

"सर्वे जानन्ति ज्ञातारः मातुरावश्यकता यथा ।
कुतूहलञ्च भाषाया, उत्पत्यै नरयोस्तथा ।७।

मानव जीवन में जिस प्रकार माता आवश्यक है उसी तरह भाषा की उत्पत्ति हेतु मानव के हृदय में कौतूहल आवश्यक तत्त्व है । भाषा की उत्पत्ति तब हुई जब दो तत्त्वों प्रकृति और पुरुष का आविर्भाव हुआ । उनमें अपने आपको जानने की इच्छा जागी । ऋग्वेद में इस विचार के बीज सन्निहित हैं—

"द्वाः सुपर्णा सयुजाः सखाया समानं वृक्षमभिषष्वजाते ।
तयोरन्यः पिप्पलं स्वाद्वत्त्यनश्नन्नन्योऽभिचाकशीति ।।
(ऋ० १-१६४-२०)

"अस्तित्वमनिवार्यं स्यान्न्यूनान्न्यूनमिदं स्मृतम् ।
अविहायावश्यकतां, शब्दैर्वाक्यैश्च यत्पुनः ।८।

शब्द नित्य है इसका कभी विनाश नहीं होता है । भाषा उपयुक्त समय पाकर मानव के अवस्फुरण से उत्पन्न होती है शास्त्रों में "तेने ब्रह्म हृदाय आदि कवये मुह्यन्ति यत् सूरयः" आदि के द्वारा उपर्युक्त मत का दर्शन होता है । अर्थात् मानव भाषा को अपनी आवश्यकतानुसार परिवर्तित और परिमार्जित करता है ।

'इङ्गितानां ध्वनीनां च नियुक्तिस्तदनुस्मृता ।
अनुमानं पूर्णतायां भाषायां भवति ध्रुवम् ।९।

संकेतित ध्वनियों की उत्पत्ति से भाषा का वैभव और सौष्ठव बढ़ता है।

पृथक् पृथक् प्रदेशानां भाषाभेदस्य कारणम् ।
जलवाय्वोर्विभेदाद्धि भाषाविज्ञानिनोऽवदन् ।१०।

अलग-अलग प्रदेशों में विभिन्न भाषा होने का कारण जलवायु की भिन्नता को भाषावैज्ञानिकों ने मुख्य कारण माना है।

विविधानां हि जातीनामेकस्थानेऽपि जन्म चेत् ।
स्थानस्य परिवृत्यात्तु भाषा भिन्ना भवन्ति वै ।११।

एक ही स्थान पर जन्म लेने वालीं जातियों के निवास स्थान में परिवर्तन हो जाने पर शनैः शनैः उनकी भाषा में भिन्नता आ जाती है।

श्लेगल यूजिन वर्नोफौ फ्रांसिस वांप ग्रिम्मकौ ।
रोमनश्चैव हम्बोल्टे बहुभिरेवमादिभिः ।१२

श्लैगल, यूजिन, बर्नाफ, फ्रॉसिस, वांप. ग्रिम्मक, और हुम्बल्टो आदि भाषावैज्ञानिकों ने भाषाविज्ञान की मूल उद्भावना की।

योरोपीयभाषाज्ञानवेतृभिः पण्डितैर्जनै ।
भाषाश्च विविधा बुद्धा, भाषिणां भेदतस्तथा ।१३।

यूरोपीय भाषावैज्ञानिकों ने अनुसंधान करके विश्व की अनेकानेक भाषाओं और उनके भेदों की जानकारियां एकत्र की। जिसके आधार पर उन्होंने भाषावंशों का वर्गीकरण किया।

प्रथममार्य वंशञ्च द्रविडश्च सामीयकम् ।
सिदियन हैमेटिक वाण्टुः सामुद्रिकाम्बरीषिका ।१४।

जिनमें आर्य, द्रविड़, सामीय, सिदियन, हैमेटिक, वाण्टु सामुद्रिक और अम्बरीषिक ये प्रमुख भाषा वंश हैं जिसके अन्तर्गत संसार की समस्त भाषाओं का समायोजन हो जाता है।

तथा विभक्ता तेषां च वंशानामावलिर्यथा ।
अष्टधा कथिता सा तु क्रमशोऽत्र विलिख्यते ।१५।

इस तरह मुख्यतः भाषावैज्ञानिकों ने विश्व की समस्त भाषाओं को आठ प्रमुख वंशों में विभक्त किया है।

आर्यवंशः प्रथमः स्यात् द्रविड़ं च द्वितीयकम् ।
सामीयवंशस्तृतीयः त्यूरेनीय तुरीयकः ।१६।

हैमेटिकः पंचमः स्यात् सामुद्रिकश्च षष्टकः ।
बांटु वंशः सप्तमा स्याद्, अम्बरीषीय चाष्टमः ।१७।

ये प्रमुख वंश है—(१) आर्यवंश (२) द्रविड़ वंश (३) सामीवंश (४) त्यूरेनीय (तूराबी) (५) हैमेटिक (६) सामुद्रिक (७) बांण्टु (८) अम्बरीषीय ये आठ विश्व के भाषावंश है ।

भाषावंश बिभाग सिद्धान्तः

"पाश्चात्य भाषाविज्ञानाँ भाषावंशविभेदके ।
तथामतानि भिन्नानि ऐकमत्यं भवेदिह ।१८।

पाश्चात्य भाषावैज्ञानिकों के उपर्युक्त मतों पर एकमत होकर हम भाषाविज्ञान का अध्ययन करेंगे ।

अन्यस्याः किल भाषायाः एकया भाषया सह ।
सम्बन्धः खलु शब्दानां, ध्वनि साम्यञ्च वै भवेत् १६

उपर्युक्त भाषाओं में पर्याप्त शब्द साम्य और ध्वनि साम्य देखने को मिलता है ।

तिसृणांमधिकानां च भाषाणां बहु शब्दकाः ।
किञ्चित् साम्यं तु मत्प्राप्ताः, नैव चैका भवन्तितत् ।२०।

तीन-चार भाषाओं के मध्य तुलना करने पर हमें भाषाओं में परस्पर साम्य देखने को मिलता है । किन्तु मात्र शब्द अथवा ध्वनि साम्य के आधार पर हम इन्हें एक भाषा वंश के रूप में वर्गीकृत नहीं कर सकते हैं ।

"व्याकृतेरनुकूलाहि निरुक्तिर्धातुकादिषु ।
एकता यदि पूर्णा स्यात् तदैक्यं संभवेदिह ।२१।

भाषा व्याकरणानुकूल, धातुओं की निरुक्ति आदि से युक्त परस्पर सुसंबद्ध हो तभी उनमें परस्पर ऐक्य का होना संभव है ।

"भिन्नानां खलु भाषाणां शब्दानां वै समासतः ।
सूची प्रकाश्यते चैक्यं, विचारात्स्यात् प्रमाणितम् ।२।

विभिन्न भाषाओं का साम्य और वैषम्य प्रदर्शित करने हेतु एक सूची प्रस्तुत है—

| संस्कृत | फारसी | यावनी | लैटिन | अंग्रेजी |
|---|---|---|---|---|
| \| | \| | \| | \| | \| |
| नाम | नाम | ओनाम | नामेन | नेम |
| आप | आव | हाइडर | ऐक्वा | वाटर |
| पितर | पिदर | पीटर | पेटर | फादर |
| मातृ | मादर | मेटेर | मेटेर | मदर |
| न | न | ने | ने | नो |
| शत | सद | एकेटन | सैंटम | हण्ड्रेड |
| विंशति | विस्त | वीकती | जंशी | टुएंटी |

(क्रमशः)

— संस्कृत नगरम्, छपकी।
लक्ष्मीसागरम्, दरभंगा–८४६००४



# "मुक्तकदशकम्"

— डा० लेखराम शर्मा
पी० एच० डी० दर्शनाचार्य



मिथ्यावचोभिस्तु विलोक्य सौख्यं
सत्यं महार्घं न अपेक्षणीयम् ।
सौख्यं अनित्यं ननु वंचकानां
दृष्ट्वा न याहीह महान्धकूपम् ।१।

छलैरनेकैश्च समीक्ष्य मोदं
शुभ्रो हि पन्था: न अपेक्षणीय: ।
सौख्यं द्विदैनं खलु द्यूतवन्त:
भुक्त्वा हि दृष्टा: नरकं प्रयाता: ।२।

उच्चान्विलोक्य परपीडकान्भो
सेवा परेषां न अपेक्षणीया ।
मानमसत्यं परपीडकानां
न तत्र विश्वासपरो भवेद्वै ।३।

कन्यापितु: प्राध्यं प्रभूतराशिं
कश्चिन्न दृष्टो चिरभुञ्जमान: ।
काकेव लोके ऽस्थिमथोविहाय
जीवं विहन्तुं हि विचेष्टमान: ।४।

वनानि छित्वा निशितैश्च शस्त्रै:
दृष्टो हि लोक: बहुमोदमान: ।
कामं जना: निर्धनतां प्रयाता:
संनाशयन्त्यत्र स्वकीय प्राणान् ।५।

पौरं निवासं बहु इच्छमाना,
कष्टं सहन्ते सततं हि बालाः ।
पश्चात्तपन्ति जननीसमक्षे
सद्यःप्रजाता इव पक्षिवत्साः ।६।

विद्या हि लब्धा परमा उदारा
किं तेन लब्धं न मनुष्यलोके ।
तस्मान्निरीक्ष्य भुवि सावधानाः
विद्याँ विभान्तीं मनसा लभध्वम् ।७।

वत्सैः प्रभूतैः न सुखं कदाचित्
उत्पाद्यमानैः अबुधैः वृथा तैः ।
सिंहस्य वीरः शिशुः सौख्यमेति
वन्यानशेषान्नसु शासमानः ।८।

शब्दैः परोच्चैश्च प्रदूषितैश्च
नानाजनैश्चापि अबाधमानैः ।
बाधर्यमाप्नोति जनोऽसमर्थः
केचिच्च मान्द्यं मनसः प्रयाताः ।९।

विद्याच्युते वीक्ष्य महाधनत्वं
विद्या महार्घी न अपेक्षणीया ।
भूषावृताङ्गीं कुलटां विलोक्य
नार्यः कुलीनास्तु न यान्ति कूपे ।१०।

— राजकीय संस्कृत महाविद्यालय
सोलन, हिमाचल प्रदेश ।



(१६ पृष्ठ शेषांश;)

# पठेयुः स्मेरयुः, सफली भवेयुः

(क) प्राचीनार्य भाषा काल, (२००० ई पू० त: ५०० ई पू० पर्यन्तम्) अस्मिन् काले वैदिकभाषाया पुरातन-संस्कृतभाषायाश्चो द्गमोविकासश्चाभवत् ।

(ख) मध्यकालीनभाषाकाल: (५०० ई. पू. ता १००० ई. पू० प्रयंन्तम्) अस्मिन् काले, पालि-प्राकृत— अपभ्रंश-भाषानाम् विकासोऽसभवत । शिक्षित जनेषु संस्कृतजन-भाषारूपेणासीत् । अस्मिन् काले एवाधिकांशत: प्रमाणिक ग्रन्थानामप्यभवत् सृष्टि: ।

(ग) आधुनिकार्य भाषा काल: (१००० ई. ता अद्यप्रर्यन्तम्) अस्मिन् समये नानाविध प्रदेशी भाष भ्रंश भाषानामा-धुनिकार्यभाषानां विकासोऽभवत । द्रविड़परिवारस्य भाषां परित्यज्य, हिन्दी, मराठी,—गुजराती, बंगला, उड़िया, —असमिया,-पंजाबी,-सिन्धी इत्यादय: सकला: भाषाः अस्मिन् समये विकासं गताः ।

१०. प्र० बाल ! प्रादेशिकभाषासु कै: काव्यसृष्टिःकृता ? कां भाषां विना शिक्षायाः कल्पमेव न भवितु मर्हति ?

उ० श्रीमन् ! ये जना संस्कृतस्य विद्वांस आसन् तैरेव प्रादेशिक-भाषासु काव्यसृष्टिः कृता, संस्कृतभाषां विना शिक्षायाः कल्पनापि न भावतुमर्हति ।

११. प्र० बाला ! १०० ईस्वीत: अद्यपर्यन्तं विदेशीशासकैः काः काः भाषा भारते आनीताः ?

उ० विदेशीशासकैः भारते, तुर्की, अरबी, फारसी, इत्यादयः भाषा भारते आनीता: ।

— संस्कृत विभागाध्यक्ष: डी. ए. वी. कालेज
कोटखाई १७१२०२





पूर्वाङ्कादनु

## क्रान्तिकारिशिरोमणिः चन्द्रशेखर आजादः

जन्म — लब्ध वीरगतिः

२२ जुलाई १९०६ — २७ फरवरी १९३१

(आजादभगतसिंहौ प्रविशतः)

भगतसिंह :- मित्र ! केन उपायेन काकोरी काण्डे बन्दीकृतानां क्रान्तिकारिणां कारागाराद् बहिः पलायनं भवेत् ।

चन्द्रशेखर :- अहं विचारयामि (विचारमुद्रां नाटयन्)

(भगतसिंहस्य कर्णे मन्त्रयति)

भगतसिंह :- साधु । साधु !

(इत्युक्त्वा बहिर्गच्छतः)

पटाक्षेपः

न्यायाधीशः प्रविशति, सचिवः स्वासनादुत्थाय अभिवादनं करोति, स्वकीय आसने समुपविष्टे न्यायाधीशे पत्रावलिं प्रस्तौति सचिवः, (विलोक्य)।

न्यायाधीश :– गुस्टो। बन्दीभूतानां क्रान्तिकारिणां कीदृशः समाचारः।

गुस्टो :- (अञ्जलिं बद्ध्वा) श्रीमन् ! (पत्रावलिं पठति) चतुर्विंशति संख्याका अपराधिनः कारागारे सन्ति। अन्ये अज्ञातकारणाः न्मोचिताः। अशफाकउल्ला - शचीन्द्रबख्शी - चन्द्रशेखरश्च न बन्दीकृताः। दामोदरोऽपि रुग्णत्वाद् विमोचितः शिवलालादपि अभियोगः समाप्तः। वीरभद्रत्रिपाठिनश्चापि अभियोगः समाप्तिं गतः। अभियोगिनामधिवक्तारः पं० गोबिन्दबल्लभ पन्त-श्री चन्द्रभानुगुप्त — मोहनलाल सक्सेना सदृशा बहव आसन्। रामप्रसाद बिस्मिल्ल — राजेन्द्र नाथलाहिड़ी-रोशन सिंह अशफाक उल्लादीनां कृते प्राणदण्डस्याभियोगः — आवितः। शचीन्द्र सान्यालाय आजन्मकारागारस्य मन्मथ गुप्तस्य कृते चतुर्दशवर्षाणि यावत् कारागारवासस्य दण्डो निर्धारितः। योगेश चन्द्र चटर्जी - मुकुन्दी लाल गोबिन्द चरणकर-राजकुमार सिंह रामकृष्ण खत्रिप्रभृतयो दशवर्षाणि यावत् कारागारे वासितुमपराधिनो घोषिताः। विष्णु शरण डब्लिश सुरेशचन्द्रभट्टाचार्याः सप्तवर्षाणि यावद् बन्दीगृहं सेवितुं तत्रभवता समादिष्टाः। भूपेन्द्र नाथ सान्यालरामदुलारे त्रिवेदि-प्रेम कृष्ण खन्नादयः पंचवर्षाणि कारागारे निवसितुं श्रीमता समादिष्टाः।

न्यायाधीशः- शोभनम्। गच्छ स्वनियोगमशून्यं कुरु।

सचिवः- यदाज्ञापयति भवान्। (गच्छति)

पटाक्षेपः

(चिन्तितश्चन्द्रशेखर उपविष्टो दृश्यते)

चन्द्रशेखरः- महत्कष्टम्। महत्कष्टम्। अस्मत्सहचरेषु यद्दुःखमापतितं तस्य कथमपि निराकरणं न सम्भवम्। सप्तदशोत्तरैकोन

विंशतितम ईशवीये दिसम्बरमासस्य सप्तदशतारिकायां राजेन्द्र लाहिड़ी महोदयाय "गोंडा" कारागारे प्राण-दण्डः प्रदत्तः। रामप्रसादविस्मिलल्लाय गोरखपुरे एकोनविंशति तारिकायाँ मृत्युदण्डो दत्तः। रोशनसिंहः प्रयागे, अशफाक उल्ला च फैजावादे प्राणदण्डं प्राप्तवन्तौ। तान् क्रान्तिकारिणः प्रति मदीयः श्रद्धाञ्जलिः प्रदीयते—

प्रतापेन प्रतापस्त्वं रन्तिदेवेन त्यागताम्।
पयोधिना च गाम्भीर्यं समादाय हि ते स्थिताः ।७।

(क्रुद्ध्यन्)

सूर्यः शीतलतां यातु मेरुः प्रविचलेन्नु किम्।
अहं कृतप्रतिज्ञोऽस्मि मोक्तुं भारतमातरम् ।८।

(उत्तिष्ठन्) साम्प्रतमहं दलं संघटयितुं गच्छामि।

(निर्गच्छति)

(पटाक्षेपः)

(ततः प्रविशन्ति भगतसिंह— चन्द्रशेखर — सुखदेव शिववर्मा— विजयकुमार फणीन्द्र नाथ - कुन्दन लालाः)

चन्द्रशेखरः- भगतसिंह, फिरोजशाहजनपदे भग्नावशेषे स्थले क्रान्तिकारिणां सभा सञ्जाता। तत्र समितिः सुसंघटिता।

भगतसिंह।-तस्यां समितौ कियन्तो मुख्यसदस्याः सन्ति।

चन्द्रशेखर।- अत्र ये सप्त क्रान्तिकारिणस्त एव सदस्याः।

भगत सिंह।- शोभनम्! साम्प्रतं हिन्दुस्तान रिपब्लिन एसोसियेशनं "इति स्थाने" हिन्दुस्तान समाजवादी प्रजातान्त्रिक सेना इति सञ्जातम् इति तु भवता पूर्वमेव सूचितम्।

(पटाक्षेपः)

मोरिद्वारि एका सभा समायोजिता तत्र लाला लाजपतरायः सभां सम्बोधयति—

लाजपतरायः- यः सर्वकारः शस्त्ररहितासु प्रजासु जघन्यं निन्द्यम् चाक्रमणं करोति स वस्तुतः सर्वकारो नास्ति । यतः—

"यस्य राज्ये प्रजाः सर्वा आधिव्याधिभिः पीड़िताः ।
स राजा नरकं घोरं याति नास्त्यत्र संशयः"

(ततः आरक्षिण आगत्य लाजपतं दण्डेन ताड़यन्ति तथापि लाजपतः विचलितो न भवति । (क्रुद्धः सन्)

मया उद्घोष्यते यत् मदीये वक्षसि कृतः एकैको दण्ड प्रहारः ब्रिटिश - सर्वकारस्य मृतचैलस्य कृते कीलकं भविष्यतीति ।

पटाक्षेपः

(क्रान्तिकारिभिः सह चन्द्रशेखरस्य प्रवेशः)

चन्द्रशेखरः- महत्कष्टम्, महत्कष्टम् । अद्य अस्माकं मध्ये लोहपुरुषः श्रीमान् लाजपतराय महोदयः न विद्यते अकाल एव काल कवलितः । (साहसं प्रदर्शयन् वीराः । लाजपत महोदयस्य हन्तारम् आरक्षि विभागाधीक्षकं साण्डसं सम्यक् अन्विष्य तस्य दुष्टस्य अवश्यमेव हत्या करणीया ।

क्रान्तिकारिणः- चलन्तु भवन्तः । वयं तत्पराः (सर्वे इत स्ततः अन्विष्यन्ति । आजादः साण्डर्सं विलोकयति । आजादं दृष्ट्वा साण्डर्सः पलायते पलायन्तं साण्ड्र्सं लघुभुशुण्डया चन्द्रशेखरः हन्ति । )

पटाक्षेपः

(ततः भगतसिंहचन्द्रशेखरौ प्रविशतः)

भगतसिंह :- चन्द्रशेखर तव कुत्र गृहं तत्र कति सदस्याः ।

चन्द्रशेखर :- अस्य का आवश्यकता ?

भगतसिंह :- आगामिकाले यदि किमप्यावश्यकं भवेत् तर्हि गृहसदस्याः सूच्या इत्येव प्रयोजनम् ।

चन्द्रशेखरः- किमितिहासे नामोल्लेखनं करणीयम् ? शिलापट्टे मन्नामोल्लेखो भवेदिति अहं कदापि न वाञ्छामि । पारिवारिकसदस्यानाञ्च मत्कृते न किमप्यावश्यकता । भविष्ये

मत्समक्षमेतादृशः प्रसङ्गः कदाचिदपि न वाच्यः। अहमेतादृशस्य यशसो नाम्नो वा अकांक्षी नास्मि। गच्छ विश्रामं कुरु। श्वो विधानसभायामाग्नेयास्त्रं विस्फोटयितुं विरोध पत्रं च पातयितुं सन्नद्धो भव।

(उभौ व्रजतः)

पटाक्षेपः

सर्वे गौरशासकाः विधान सभायां समुपविश्य सार्वजनिकसुरक्षा विषये औद्योगिकविवादनियमे च मन्त्रयन्ति तदैव प्रच्छन्नवेशो भगतसिंहस्तत्र गत्वा अग्नेयास्त्रं विस्फोटयति तदनु बटुकेश्वरो द्वितीयमाग्नेयास्त्रं विस्फोटितवान्। भगतसिंहः "शुस्टर वायसराय मुद्दिश्य- लघु भुशुण्डी चालयितुमुद्यतः। सर्वे सम्भ्रान्ता इतस्ततः पलायन्ते शुस्टरः काष्ठफलकमधस्तान्निलीनो भवति आरक्षिणआगत्य भगतसिंह- बटुकेश्वर दत्तौ बन्दी कर्तुमुद्यताः भगतसिंह बटुकेश्वरदत्तौ-वन्देमातरम्, बन्देमातरम्। जयन्तु क्रान्तिकारिणः। साम्राज्यवादिनां विनाशो भवतु इत्युक्त्वा सदसि विरोध पत्रं प्रक्षिपतः। आरक्षिभिः वन्दीभूतौ कारागृहं नीतौ।

(पटाक्षेपः)

(वाक्कीलकः दुर्गा–सुशीला चन्द्रशेखरश्च प्रविश्य)

वाक्कीलक :- अस्मिन्नभियोगे यदि कश्चित् साधारणः क्रान्तिकारी पलायितः किन्तु न्यायालयेऽधुना एवं समुपस्थापयेत् तर्हि अभियोगश्चालयितुं शक्यते। न्यायाधिकारिभिः भगतसिंहस्य कृते प्राणदण्डो निर्णीतः।

चन्द्रशेखरः- अहमिदमुचितं न मन्ये। सुशीले दुर्गे! महात्मागान्धिनमुपगम्य मदीयं प्रस्तावं श्रावय यदि केनापि प्रकारेण भगतसिंह प्राणदण्डाद् विमुक्तो भवेत्, अभियोगश्च समाप्तिं यातु, तर्हि अहं स्वदलेन सह भवदीयदले समवेतो भविष्यामि सुशीला-अहमेतदर्थं सद्य एव गच्छामि।

दुर्गा :- अहमपि अनया सार्धमेव गच्छामि।

(उभौ गत्वा प्रतिनिवृत्य च)

सुशीला :- भ्रातः ! शेखर महात्मना कथितं यदहमेतदर्थं प्रयतिष्ये किन्तु वचन बद्धो न भवामि

चन्द्रशेखर :- (श्रुत्वा) नास्ति मे कापि चिन्ता ।

बाहौ मेऽस्ति बलं यावत् यावच्छक्तिः कलेवरे ।
शत्रुभिः सह योत्स्यामि तावन्मातृविमुक्तये ॥

सुशीला :- भ्रातः । भारतमातु विजयस्त्वयि एव समाश्रितः । अतः प्रच्छन्न एव दल-सञ्चालनादि कार्यं कुरु ।

चन्द्रशेखर :- सुष्ठु त्वं भणसि ।

पटाक्षेपः

आजाद ।- राजगुरुः भगवान्दासश्च स्वकीयं प्रावार आप्रपदीनादिकं (कोट पैंण्ट) परिधाय प्रच्छन्नवेषः झांसी प्रस्थितः देव-विश्रामस्थाने (पलेट फार्म) आरक्षिभिः सह आरक्षिनिरीक्षकः आजादं विलोकयति आजाद लघुभुशुण्डया फट् इति शब्दं करोति, शब्दं श्रुत्वा विश्वेश्वरः पलायितः ।

टिकटपरीक्षक :-(आजादं सन्दिह्यमानः) महाशय ! यात्रा-प्रमाण-पत्रं (टिकटं) देहि । तत्रैव गुप्तचरोऽपि वर्तते ।

आजाद ।- (गुप्तचरं प्रति) त्वं स्वकीयं कार्यम् अहं स्वकार्यं सम्पादयामि (इत्युक्त्वा टिकटपरीक्षकाय टिकटं दत्वा कस्यचिद् द्विचक्रिकया पलायितः ।)

पटाक्षेपः

(सोहन - यशपाल - सुरेन्द्र - आजादाः प्रविशन्ति)

आजाद ।- सोहन ! नेहरूसमीपमुपगम्यतं ब्रूहि वयं शासनं कर्तुं न वाञ्छामः । अस्माकमयमेव प्रयासः यद् देशो मुक्तो भवेत् ।

सोहन ।- यद् भवानाज्ञापयति । (इत्युक्त्वा) नेहरूसमीपं गच्छति ततः प्रतिनिवृत्य आजादाय रूस गन्तुं पचदशशतानि रूप्यकाणि ददाति ।

आजाद ।- रुप्यकैः मे किं प्रयोजनम् ?

यशपाल ।- गृहाणातु, धनस्य अनादरः न कर्तव्यः । देश हिताय एतद्धनम्, (बलात् आजादाय ददाति ।) (क्रमशः)




# पठेयुः स्मरेयुः, सफली भवेयुः

सुरेश गौतम पङ्किलः



1. प्र० बाला: संस्कृतं कस्य परिवारस्य भाषास्ति ?

उ० श्रीमन् ! संस्कृतं भारतयुरोपीयपरिवारस्य भाषास्ति ।

2. प्र० बाला: ! भारतयुरोपीयपरिवारस्यान्या: का: का: भाषा: सन्ति ?

उ० श्रीमन् ! ग्रीक, लैटिन, आंग्ल, रुसी, फ्रांसीसी, स्पेनी, ईरानी इत्यादयः सर्वाः भारतयुरोपीयपरिवारभाषा: सन्ति ।

3. प्र० बाला: ! का भाषा सर्वासु भाषासु संस्कृतस्य पार्श्ववर्तनी (सन्निकटतमा) वा ?

उ० श्रीमन् ईरानी भाषा सर्वासु भाषासु संस्कृतस्य सन्निकटतमा, पार्श्ववर्तिनीवा ।

4. प्र० बाला: ! अन्या: का: का: भाषा "तत् तुल्या" सन्निकटतरा वा दृश्यन्ते ?

उ० श्रीमन् ! अन्या: लैटिन फारसी इत्यादयः भाषाः अपि यत्र तत्र

| | | | |
|---|---|---|---|
| १. मिलन्ति–यथा | संस्कृतम् | लैटिन | फारसी |
| | अस्ति | एस्त | अस्तु, |

एते समानार्थकाः

५. प्र० बालाः ! युरोपीयभाषाणामैतिहासिकानुशीलनाय शिक्षासंस्थानेषु का भाषा पाठ्यते ?

उ० श्रीमन् ! युरोपीय भाषाणामैतिहासिकानुशीलनाय शिक्षा संस्थानेषु संस्कृत भाषा पाठ्यते ।

६. प्र० बालाः ! संस्कृत भाषया काः काः भारतीया भाषा विकासपथि नीताः ?

उ० श्रीमन् ! हिन्दी, मराठी, गुजराती, बंगला, उड़िया, असमियां, पंजाबी, सिन्धी, इत्यादयः भारतीयाः भाषाः विकासपथि नीताः ।

७. प्र० बालाः ! द्रविड़परिवारस्य काः काः भाषाः संस्कृतभाषया मिलन्ति तत् प्रभाविताः वा ?

उ० श्रीमन् ! तमिल, तेलगु, कन्नड़, मलयालम, एताः द्रविड़ परिवारस्य भाषाः संस्कृतभाषया मिलन्ति च तद् प्रभावानुगच्छन्ति च । आसु भाषासु संस्कृतशब्दाः मिलन्ति ।

८, बालाः ! संस्कृतसाहित्यस्य केन श्लोकेन भारतस्य सीमायाः ज्ञानं भवति ?

उ० श्रीमन् ! उत्तरं यत्समुद्रस्य हिमाद्रेश्चैव दक्षिणम् ।
तद्वर्षं भारतम् प्राहुर्भारती यत्र सन्ततिः ।

संस्कृत साहित्यस्य अनेन श्लोकेन भारतस्य सीमायाः ज्ञानं भवति ।

९. प्र० बाल ! संस्कृत भाषायाः विकास प्रक्रियां वर्णयतु या सहस्राब्देभ्यः किञ्चिद् किञ्चिद् परिवर्तनम् प्राप्याधुनापि सरति ?

उ० श्रीमन् ! संस्कृत भाषाया विकास सरिता निम्न प्रकारेणासरत् !

(शेषांशः पृष्ठे ८)

# शोचनीयम्

आचार्य श्याम लाल शर्मा
व्याकरणाचार्य M.A. Skt.



आत्मचिन्तनशीलानां स्थावरजंगमात्मकसकलप्राणिनां मध्ये मनुष्यस्य श्रेष्ठत्वं इति निश्चप्रचम् । उक्तञ्चापि यत्मनुष्याः "मत्वा कर्माणि सीव्यन्ति ।" अन्यपशुपक्षिकृमिकीटादयो विचारशक्ति-शून्यत्वेन नहि स्वातन्त्र्येण विचरयितुं शक्नुवन्ति । मात्रः मनुष्य एव स्वातन्त्र्य विचारणं कर्तुं शक्नोति पर प्राकृतिकभावनाबाहुल्यवशात् मानवा अपि बहुविधा भवन्ति यथाः—

कवयः, लेखकाः शिक्षकाः चिकित्सकाः, श्रोतारः, वक्तारः प्रवक्तारः आचार्याः, बहुविधनैतृत्वकर्तृकाः नेतारश्च । यतो हि नीतिशास्त्रे-ऽपि समायाति यत् "मुण्डे-२ मतिर्भिन्नाः" ।

परं कतिपयजनाः "किं कर्मकिमकर्मेति कवयो ऽप्यत्र मोहिताः इति वाक्यानुसारेण धर्मतत्वस्य नितान्तगूढतया नामनाविधश्रुतिस्मृति-वाक्यजालविचारपरम्परायां विमुखत्वेन मात्रमद्य जनपथानुसरणमात्र स्व कर्तव्यं मन्यन्ते । समाजे प्राचीनकालात् बहुपति प्रथा लुण्ठनपाटनमारणउग्रवादाऽतन्कवादबलात्कारेण वलियज्ञादिविषयाः प्रमुखीकृत्य स्वार्थपरायणत्वेन "बाबा वाक्यं प्रमाणम्" इति वदन्तः, पुरातनकुरीतिमवलम्ब्यानेकानत्याचारानाचरन्ति । गर्जन्ति च —

यत् —

पीत्वा —२ पुनः पीत्वा यावत् पतति भूतले ।
उत्थाय पुनः पीत्वा स्वर्गलोके महीयते ॥

अन्यच्च— काम क्रोधस्तथा लोभ मोहो मात्सर्यमेव च ।
तमालपत्रं पीत्वा वै सर्वं नाशं गमिष्यति ॥

किम्बहुना—"आत्मवत् सर्वभूतेषु"

"आत्मनः प्रतिकूलानि" वसुधैव कुटुम्बकम्" "सत्यं ब्रूयात्" "प्रियं ब्रूयात्" "स्वाध्यायात् मा प्रमदितव्यम्" आचार्यदेवोभव 'मातृ देवो भव" "पितृ देवो भव" 'मा वद्विषावहै" "सर्वे भवन्तु सुखिनः" हा हन्तः। इत्यादि भावना नहि दृश्यन्ते कुत्रापि

अद्यत्वे वहवः धर्मध्वजिनः स्वकीयं वर्णधर्मं विहाय वेदगर्हितं शास्त्र असम्मतं सद्भिः निन्दितं आचरन्ति "स्वधर्मे निधनं श्रेयः" हा हन्तः ?. इति भावना न दृश्यते कुत्रापि। महाभारतं पञ्चमो वेदः इति सर्वे स्वीकुर्वन्ति । परं न चाङ्गीकुर्वन्ति तत्र संस्थापित. भगवतः श्रीकृष्णस्य कर्मव्यवस्थाम्। यथाः—

ब्राह्मणक्षत्रियविशां शूद्राणां च परंतपः ।
कर्माणि प्रविभक्तानि स्वभावप्रभवैर्गुणैः ॥
(गीतायाम्-१८:४१)

अर्थात्—

The duties of the Brahamna, The Kshatriyas and the vaisyas as well as of the Sudras have been divided according to their inborn qualities, Arjuna.

परं हा हन्तः !

सोचिय विप्र जो वेद विहीना। तजि निजधम, बिषय लय लीना।
सोचिय बयसु कृपन-धनवानू। जो न अतिथि शिव भगति सुजानू॥

सोचिय शूद्र विप्र अवमानी। मुखर मान प्रिय ज्ञान गुमानी।

इत्यत्र विप्रः ब्राह्मणस्य पर्यायो वर्तते। ब्राह्मणः अकस्मात् ? इत्याकाँक्षायामुक्तम्:

अध्ययनं अध्यापनं यजनं याजनं तथा ।
दानं प्रतिग्रहं चैव ब्राह्मणानां विनिर्मितम् ।

अपि च :—

शमो दमः तपः शौचं शान्तिरार्जव मेव च ।
ज्ञानविज्ञानमास्तिक्यं ब्रह्मकर्म स्वभावजम् ॥

(इति गीतायाम् १८-४२)

तथा च क्षत्रिय क्षतात्त्रायति स्म। क्षत:—नाश: तस्मात् नाशात् त्रायति, रक्षति, पालयति य: स क्षत्रिय उच्यते स्म। क्षत्रिया वाक् शूरत्वेनापि आदरं प्राप्नोति स्म। परं हा हन्त:। अद्यत्वे रघुवंशीय-क्षत्रियाणां मर्यादा ... ... ... "प्राण जाए वर वचन न जाए।" इति न दृश्यते कुत्रापि। "क्षतात् किल त्रायते इत्युदग्र क्षत्रस्य शब्दो भुवनेषु रुढ़:" सर्वमिति विहाय अद्यतनीया: क्षत्रिया: स्वार्थं साधनत्वेन आत्मानं खतरिया: इति मन्यन्ते।

शौर्यं तेजो धृतिर्दाक्ष्यं युद्धे चाप्यपलायनम्।
दानमीश्वरभावश्च क्षात्रकर्मं स्वभावजम्। इति ॥

परं हा हन्त। अद्यत्वे इत्थं भूतस्य क्षात्रकर्मस्य लोपो दृश्यते। वर्णव्यवस्थाया: स्वरूपं प्राय: विलोपत्वं गतमेव दृश्यते।

कृषिगोरक्ष्य वाणिज्यं वैश्यकर्मस्वभावजम्।
परिचर्यात्मकं कर्मं शुद्रस्यापि स्वभावजम्।

किम्कर्तव्यं किं न वा? इत्यनेन बिमूढ़ा जना: स्वधर्मे निधनं श्रेयेति विस्मृत्य विभ्रान्तमतय: इतस्तत: धनलोलुपत्वेन निन्दनीय कर्मं कुर्वन्ति शास्त्रासम्मतं धनसाधकं कार्यं रोचते सर्वेभ्य:। किं बहुना—"स्वे २ कर्मण्यभिरत: संसिद्धि लभते नर:" इति भावना न दृश्यते कुत्रापि। यतोहि— उक्तं केनचित्—

Keenly devoted to his own natural duty, man attains the higest perfection in the Shape of God-Realization.

अथ च सोचिय नृपति जो नीति न जाना। जेहि न प्रजा प्रिय प्राण समाना। राजनीति विषये तु भगवता श्रीरामचन्द्रेण स्पष्ट-रूपेण गदितमस्ति यत्—

स्नेहं दयां च सौख्यं च यदि वा जानकीमपि।
लोकानां रञ्जनार्थाय मुञ्चतो नास्ति मे व्यथा॥

अस्मिन्नेव प्रसंगे वाल्मीकिरामायणेऽपि समायाति—

न वनं गन्तु कामस्य त्यजतश्च वासुन्धराम्।
सर्वलोकातिगस्तेव लक्ष्यते चित्तविक्रिया॥

(वा० रा० २-१६-२)

अत: विश्वस्य सर्वेषु भागेषु साम्प्रतं इयं रामनीति नितान्तमुपयोगिनी, प्रेरणादायिनी, कल्याणवर्धिनी च भविष्यति।

शोचनीयं वर्तते यत् नारी पुरुषस्य भूषणमिति प्रसन्नचित्तेन स्वीकुर्वन्ति अद्यतनीय भारतीयाः। शाब्दिकदृष्ट्या व्याकरणानुसार नृ √ इति धातोः अन् प्रत्यये ञितवद् भावेणादि वृद्धिः। स्त्रीत्व विवक्षायां ङीन् प्रत्यये निष्पद्यते नारी। अथवा नृ √ वीरतायाम् इत्यस्योदाहरण- ऋग्वेदेऽपि समायाति। अर्थात् नराणां कृते वीरताभाव ददाति इत्यर्थः।

अथवा नृ √ दाने। नृ √ नेतृत्व करणे। नराय संतति ददाति अथवा नरस्य नेतृत्व कर्त्री नारी। सायणाचार्येण तु स्पष्टरूपेणप्रतिपादितं अस्ति यत् "न अरिः यस्याः" शत्रु=रिपुः रहितत्वेन नारी। गार्हस्थ्य जीवनस्य मुख्याः नारी एव। अतः गार्हस्थ्यमेव नारी। न भवितुमर्हति गार्हस्थ्य नारीं विना। विषयेऽस्मिन् वाल्मीकीय रामायणेऽपि समायाति। यत्—

चतुर्णां आश्रमाणां हि गार्हस्थ्य श्रेष्ठमाश्रमम्।
आहु धर्म-धर्मज्ञास्त कथं त्यक्तुमर्हसि ?
(वा० रा० २-७४-६)

अथ च :—

सानन्दं सदनं सुताश्च सुधिया कान्ता मनोहारिणी।
सन्मित्रं सुधनं सुयोषितिरतिश्चाज्ञाः पराः सेवकाः।
आतिथ्यं शिवपूजनं प्रतिदिनं मिष्टान्नपानं गृहे
साधो संगमुपासते हि सततं धन्यो गृहस्थाश्रमः॥
इति॥

इत्यत्र गृहस्थं वैवाहिकजीवनम्। उक्तञ्चापि यत गृहणी गृह उच्यते। नारीं विना गृहस्थ जीवनं नीरसम्, व्यक्तित्व रहितं, धर्मार्थकाममोक्षादि रहितमुक्तम्। नारी पुरुषस्य आत्मा कथ्यते।

उक्तञ्चापि—रामायणे।

आत्मा हि दारा सर्वेषां दार संग्रहवर्तिनाम्।
आत्मेयमिति रामस्य पालयिष्यति मेदिनीम्॥
(वा० रा० २-३७-२४)

गृहस्थजीवनस्यानन्द दाम्पत्ये प्रगाढस्नेहभावः। तच्च पूर्वार्जितपुण्येनैव प्राप्यते। उक्तञ्चापि केन :—

पूर्वं जन्मार्जिता विद्या पूर्वं जन्मार्जितं धनम्।
पूर्वं जन्मार्जिता नारी पश्चाद्-धावति धावति॥ इति॥

दाम्पत्य जीवनस्य यादृशी शिक्षा सितारामयो: जीवने मिलति न तादृशी अन्यत्र कुत्रचिद् । सिताराम इव जना: अपि यदि पावन-सूत्रे बद्धा भवेयु: तर्हि, शुद्धा: शान्ता: विघ्नरहिता पूताश्च भविष्यन्ति वैवाहिकजीवने सर्वे भारतीया: ।

परं हा हन्त: । सीता सावित्री अनुसूयादिधर्मपरायणजीवन चरित्र विस्मृत्य: अद्यतनीया नार्य कुटिलकलह प्रियेच्छाचारिव्यभिचारि, पतिपञ्चकत्वेन परपतिरतिकर्तृका: च दृश्यन्ते ।

उक्तञ्चापि रामचरित मानसे :—

सोचि अ पुनि पति पञ्चकनारी, कुटिल कलह प्रिय इच्छाधारी ।
पति वञ्चक परपति रति करहीं, रौरव नरक कलपशत परहीं ।।
अवला कच भूषण भूरि छुधा, धनहीन दु:खी ममता बहुधा ।
सुख चाहहिं मूढ़वधमं रता, मतिथोरी कठोरां न कोमलता ।।

अथ अध्ययनं अध्यापनविषये पुरा वेद अनूच्चार्योऽन्तेवासिनं अनुशास्ति स्म । परं हा हन्त: । अद्यतनीया: शिक्षका: मदिरां पीत्वा मांसमण्डकञ्च अनुशास्ति, सहनौ भुनक्तु: । उपदिशन्ति च-मांसेन मांसं प्रवर्धते । मांसेन मेधा, मेधया बुद्धि:, तत: प्राणा: ।

मम सेवको भव । अन्यान् अध्यापकान् यष्टिकाभि: प्रताड्य । भाषां अध्यायं मा पठ, माम् उत्कोच आनय, अहमेव प्रथमश्रेण्यां उत्तारयिष्यामि शिष्या: एतादृशीं शिक्षां प्राप्य प्रतिदिवस लुण्ठन, पाटनं, मारणं, हरणं चौर प्रवृत्या: धनमेकीकृत्य स्वशिक्षकान् तपन्ति ।

हा हन्त, । किं संजातं ? किं संजातम् ?
विपरीतं हि सर्वं जातम् ।।

पुरा तु—

उपनीय तु य: शिष्यं वेदमध्यापयेत् बुध: ।
संकल्पं सरहस्यं च तमाचार्य: प्रचक्षते ।।
इति ।।

परमद्यत्वेऽऽचार्याणां श्रुतिस्मृतिअनुवन्धिकमर्यादा न ।
दृश्यते कुत्रापि, अत: कथमिति ? शोचनीयम् ।।

मुख्याध्यापक—
राज. प्राथ. पाठ. गुमणा वाया जांगला
जिला शिमला (हि. प्र.)



लघुकथा

# स्वर्णपदकम्

डा० जीतसिंह: 'खोखर;'

★

संतोषो निर्धन-कृषकस्य पुत्र आसीत् । स निज परिश्रमेण शास्त्रि-परीक्षायां शिक्षाशास्त्रि-परीक्षायां चापि स्वर्णपदकं लब्धवान् । भाग्यानुकूलता परिश्रमस्य फलं वा आसीत् यत् तेन परिणामस्य द्वितीये दिवसे एव साक्षात्पत्रं प्राप्तम् । तस्य प्रसन्नताया न काऽपि सीमा आसीत् । सः साक्षात्कारार्थं सज्जोऽभवत् ।

साक्षात्कारस्य शुभदिवसोऽपि समागतः । संतोषः साहूकारात् ऋणं नीत्वा साहसेन साक्षात्काराय चलितवान् । यदा स पब्लिकविद्यालये प्राप्तवान् तदा विद्यालयस्य सुन्दरं प्राङ्गणं दृष्ट्वा तस्य मनः प्रफुल्लितम् । स कल्पनासागरे अमज्जत् 'कदाचित्तु मे वत्सोऽपि एतैः बालकैः सह पठिष्यति खेलिष्यति च' तदैव नियोगसमित्या आकारितः । तस्य प्रत्युत्तरैः सदस्याः प्रसन्ना जाताः । एकस्सदस्यस्तु अकथयत—'देहि मह्यं स्वर्णपदकम् कस्यां परीक्षायां तु न प्राप्तम्, अतः केवलं दर्शनस्येच्छा वर्तते ।'

अध्यक्षोऽपि स्वर्णपदकं गृहीत्वा अवदत्—'रे मे वत्स ! शोभनमतिशोभनम् परञ्च यदि आजीवमिच्छसि तर्हि पञ्चसहस्राहिर्ति (डोनेशनम्) देहि । अध्यक्षस्य वचनानि श्रुत्वा संतोषो मौनमभवत् । तस्य परिश्रमः कूपे पतितः । स निज स्वर्णपदकं गृहीत्वा कार्यालयात् निर्गतवान् ।

— राजकीय संस्कृत महाविद्यालय।
नाभा-१४७२०१ (पञ्जाब)

★

पूर्वतोऽनुवृत्तम्—

# सोलनशतकम्

केशवराम शर्मा. दर्शनाचार्य, एम, ए. एम. फिल.
(प्राप्तस्वर्णपदकद्वयः)

★

ग्राम्यो मध्येनगरमुचितं क्रेतुमेतः स्वगेहात्
स्वस्वस्थानं चतुरवणिजाँ कृष्यमाणो दलेन ।
सङ्गस्थेन स्वजनसुहृदा वार्यमाणश्च मन्दं
तिष्ठत्यन्तं दितिज विबुधोन्मथ्यमानामृताभः ।८१।

ग्रामीण व्यक्ति जब आवश्यक वस्तुओं को खरीदने के लिए घर से नगर को आता है तो बाजार में चतुर वणिक् समूह उसे अपनी—२ ओर खेंचता है तथा हितैषी मित्र उसे वंचनभय से रोकते हैं। वह बेचारा दैत्यदेवदलों द्वारा छीने जाते अमृत की तरह बीच में ही घुटता है।

श्रान्ता लोकाः सकलदिवसे स्वीयकार्यालयेषु
दूरीकर्तुं श्रमशिथिलतां मालमार्गे भ्रमन्तः ।
संदृश्यन्ते तरुणबहुला धूम्रपानप्रसक्ताः
स्वर्गोद्याने मुदितहृदयै र्निजरैः स्पर्द्धमानाः ।८२।

सारा दिन अपने कार्यालय के काम से थके लोग, थकान दूर करने के लिए मालमार्ग में घूमने तथा धूम्रपान करते ऐसे दिखाई देते हैं जैसे स्वर्ग के नन्दनवन में देवगण।

न्यस्य ग्रन्थान् निजकरतले मित्रवर्गेण साकं
विद्यागेहं त्वरितचरणैः संप्रयान्त्यस्तरुण्यः ।
गौरास्यानां मधुसुरभिणा मार्गमामोदयन्त्यः
आभान्तीव भ्रमरनिकरोत्कम्पिताः पङ्किजिन्यः ।८३।

पुस्तक हाथ में लिए ... मित्रमण्डली के साथ तेज कदमों से महावि-द्यालय को चलीं युवतियां जब गोरे मुखों की मीठी सुगन्धि से मार्ग को महकाती जाती हैं तो ऐसी लगती है जैसी भ्रमरों द्वारा कम्पाई हुई कोमल कमलिनियां।

वाङ्माधुर्यं किमु परभृतः सुस्मितं किं सुमेभ्यः
चक्षूरागो हृदयहरणो दाडिमीभ्यः किमाभिः।
मत्तं रम्यं कुटिलगमनं निम्नगाभ्यः किमत्रः
अत्रत्याभि मंधुमृदुवपुःसुन्दरीभिर्गृहीतम् ८४

यहां की मधुर कोमल अङ्गों वाली सुन्दरियों ने वाणी का माधुर्य कोयलों से मुस्कराहट फूलों से, हृदयहारी नेत्रों का राग दाडिमी से, तथा रमणीय मस्त चाल क्या पर्वतीय नदियों से नहीं सीखी होगी?

आसां वाचि स्रवति मधुनो निर्झरिण्यो मनोज्ञाः
ओष्ठे शोभा किसलयदलाकारतुल्या विभाति।
कञ्जप्रान्तस्थितमधुकराकारनेत्रे वरास्ये
सीमन्तिन्यो ध्रुवमिहभवा गुल्मिनीं लज्जयन्ति ।८५।

इनकी वाणी में मनोहारी माधुर्य की निर्झरिणियां बहती है। ओष्ठदलों की शोभा किसलयों के आकार वाली है। सुन्दर मुख पर नेत्र ऐसे लगते हैं जैसे कमल के ऊपर भौंरे हों। सचमुच यहां की नारियां लताओं को भी लजा देती हैं।

भूमिं सम्यग्भवनरचनाकर्मणे स्वां वितीर्य
पोषार्थं च श्रमभरसमुत्पादितान्न प्रदाय।
दुग्धैर्लोकान् प्रतिदिनमिमे नागरान् पालयन्ति
ग्रामीणानामुपकृतिरतिर्नान्तमेतीति चित्रम् ।८६।

यहां के ग्रामीण लोगों की भी विचित्र उपकारपरम्परा है। ये अपनी भूमि श्रेष्ठ भवनों को बनाने के लिए देते हैं। जनता को पालने के लिए भारी श्रम से उत्पादित अन्न प्रदान करते हैं तथा दूध के द्वारा प्रतिदिन नागरिकों को पालते हैं।

स्पर्द्धा नित्यं नगशिखरिषु प्रोच्चवृक्षप्रसूतेः
केदारेषु प्रचुरसरसोत्पादनस्यास्ति चेह।

लोके दीर्घप्रततनगरीनिर्मितरुग्मिनोषी
देवानां च सततवसते र्यस्यमानालयेषु ।८७।

उन्नति के इच्छुक जनों में, यहां पर्वतशिखरों पर ऊंचे वृक्षों को पालने को, तथा खेतों में अधिक मधुर स्वादु अन्नोत्पादन की तथा नवनिर्मित भवनों में देवदासगृहों के निर्माण की स्पर्द्धा रहती है।

विद्यागारा भवनरचना ऋद्धशाकाः फलानि
उद्योगानां विततभवनान्यार्द्रकोत्पत्तयश्च
मल्लव्राता महिषनिकराः पुण्ययज्ञप्रसङ्गाः
सर्वोत्कर्षं विदधति पुरस्यास्य राज्ये महिम्न ।८८।

श्रेष्ठ विद्या संस्थाएं, सुन्दर भवन रचना, समृद्ध शाक एवं फल, अनेक उद्योगों के विशाल गृह, अदरक की खेती, मल्लों के समूह महिषवंश, पुण्यप्रद यज्ञ आदि की प्रथा आदि विशेषताएं सम्पूर्ण राज्य में इस नगरी के सर्वातिशायी उत्कर्ष की द्योतक हैं।

शैवाः शाक्ता विनयमधुरा वैष्णवा आर्हताश्च
बौद्धाः सिद्धा गुरुमतविदो यावनज्ञानिनश्च ।
नव्यानेकक्रमरुचिपरा आस्तिका नास्तिकाश्च
सर्वेऽप्यत्र प्रियभुवि जना मोदमाना वसन्ति ।८९।

शैव, शाक्त, विनयप्रिय वैष्णव, जैनी, बौद्ध, सिद्ध, सिक्ख, मुसलमान, अनेक नव्य साम्प्रदायिक, आस्तिक तथा नास्तिक—ये सभी इस प्रिय भूमि में प्रसन्नता पूर्वक रहते हैं।

सर्वप्रान्ताभिजनवसतिः सर्वधर्मिस्वगेह
नानाजातिस्वगृहमिदं नैकशिल्पिस्वधाम ।
नानाविद्याविनिमयपुरं भूरिविद्वद्विहारा
धर्मेणेदं तुलयितुमलं सोलनं वैदिकेन ।९०

यह सोलन तो वैदिकधर्म से तुलना के योग्य है जो अनेक प्रान्त के सभ्य लोगों का निवास है, सभी धर्मों के लोगों का घर है, अनेक जातियों का आश्रय है, अनेक कलाविदों का धाम है, नाना विद्याओं के आदानप्रदान का स्थल है तथा अनेक विद्वानों का विहारस्थान है।

— संस्कृत विभागाध्यक्ष, राजकीय स्नातकोत्तर
महाविद्यालय, सोलन (हि. प्र.)

# श्रीरामदासचरितम्

प्रथमः सर्गः ।

श्रीशो भूभारहरणे प्रार्थितोऽमरपुङ्गवैः
रघुराजकुले जज्ञे श्रीरामस्तं नमाम्यहम् ॥ १ ॥

कवीतरेण ।

आस्कन्दो यवनैर्व्यधीयत यदा वर्षत्रिशत्याः पुरा
धर्मग्लानिरभूत्तदाऽखिलमहाराष्ट्रावनीमण्डले ।
तत्काले समवातरक्षितितले संरक्षितुं पीडितान्
धीमान् श्रीपवनात्मजः स हनुमान् सर्वोऽपि यं वन्दते ।१।

स्रोतस्वतीनां प्रभवो विलीनः समृततः क्वापि गिरिप्रदेशे ।
अविश्रुतस्तिष्ठति दीर्घकालं लीनः पयोधाविव पारिजातः ।२।



(कल्पनाकाशे
विचरन्ती क्षमा)

सम्प्राप्य विस्तारमगाधमेता विशन्ति सिन्धु प्रसभं सफेनम् ।
आकृष्य पश्चात्पथिकस्य दृष्टिं तस्यातुलं विस्मयमावहन्ति ।३।

तथाऽन्वयः सिद्धजनस्य दीर्घकालाश्रुतोऽप्यस्य गुणार्चिषैव ।
प्रज्वाल्यमानोऽक्षयपुण्यदीप्तिविख्यातकीर्त्या ह्यमरत्वमेति ।४।

धन्यं महाराष्ट्रमिदं मनोज्ञं श्रीनामदेवादिमहर्षिभिर्यत् ।
तथा शिवाद्य रणवीरवर्यैर्व्यधायि भास्वच्चरितैः प्रशस्यैः ।५।

गोदावरी तत्र परिस्रवन्ती सरित्सुरम्या सुरनिम्नगेव
यस्यास्तटं दाशरथेः पदाब्जपरागपुञ्जेन बभूव पूतम् ।६।

नद्यास्तटस्थं पुरमध्युवास जाम्भाभिधं कश्चन ठोसराख्यः ।
पुत्रैश्च पौत्रैः शरदां सहस्रात्प्राग्योऽभवत्पूजक ईशनेहे ।७।

द्वाविंशभूतः स परम्परातः प्रवृत्तवंशं त्रिशताब्दपूर्वम् ।
सूर्याजिपन्तोऽगमयद्विकासं सरोरुहं सूर्य इव प्रभाते ।८।

आर्त्विज्यवृत्तिं शुचिमभ्युपेतान् श्रीरामचन्द्रस्य पदाब्जभृङ्गान् ।
प्रपूर्वजानन्वसरत्स शश्वद्यथा निशानाथकरांश्चकोरः ।९।

उपात्तविद्यो भगवत्प्रसादात्प्रायेण पुण्यात्पितुरात्मनश्च ।
परेश्वरध्यानपरः सदैव तस्थौ स पत्न्या सह रेणदेव्या ।१०।

भार्याद्वितीयस्य समाहितस्य तपस्विनः प्रादुरभूत्पुरस्तात् ।
सहस्रमार्तण्डसमप्रकाशः सीतासमेतो भगवान्स रामः ।११।

निर्दिष्टमासीत्परमर्षिभिर्यत्पुरा गृहस्थाश्रमधर्मकार्यम् ।
जायापती तौ नियतेन्द्रियौ तत्समादरेणाचरतामजस्रम् ।१२।

तत्किं विचित्रं यदि माननीयौ न केवलं ग्रामनिवासिनां तौ ।
परं गृहाभ्यागतलोकवृन्दैः पुरान्तरेभ्यो महिताबभूताम् ।१३।

तयोर्निसर्गक्रमतोऽनुरूपौ कुलप्रदीपौ विमलोरुकीर्ती ।
द्युश्रीपयोध्योरिव पुष्पवन्तौ सुतावभूतां गुणपुष्पकान्तौ ।१४।

धर्माभिवृद्धैः सुखशान्तिसिद्धैः प्रायेण सिद्धा भुवि संभवन्ति ।
गर्भाज्जनन्या विमलव्रतायाः परेशनिष्टस्य पितुः सकाशात् ।१५।

पुत्र[illegible]सूर्याजिपन्तस्य च रेणुदेव्याः ।
पुण्यं विधातुर्नियमेन सिद्ध यथा विशुद्धिनिकषेण हेम्नः ।१६।

निरूपितं प्राग्घि यथा भविष्यद्रवज्ञा तथाऽऽशीर्वचनैर्गुरूणाम् ।
प्रासूत रेणुः प्रथमं सुपुत्र ताक्ष्याग्रजं सा विनतेव पूतम् ।१७।

प्राहुर्जना यच्छिशुरेष मातापित्राप्ततीर्थाटनपुण्यपाकात् ।
गङ्गाप्रसादादजनीति लोके ख्यातः स गङ्गाधरनामतोऽभूत् ।१८।

जुहाव पश्चान्मुनिरेकनाथोऽवसत्तदा पैठणपत्तने यः ।
तमग्रजं ज्येष्ठमिति प्रसगाच्छ्रेष्ठाभिधानं व्यतनोन्महात्मा ।१९।

वामतः—

पण्डिता तत्सखी

भारतकोकिला

सरोजिनीनायडू

च ।

सोऽयं प्रकृत्या पितृवत्परेशश्रद्धैकनिष्ठो नववर्षकल्पः ।
समाप्तदीक्षो भगवत्प्रसादान्निरन्तरध्यानपरो बभूव ।२०।
कुक्षेस्तवाविर्भविताऽचिरेण विप्रेन्द्रसाक्षात्पवमानसूनुः ।
दिव्यप्रभावीति स पूर्वमेव सूर्याजिपन्तं मुनिराचचक्षे ।२१।

अथैकनाथादितपस्विवर्याः [illegible] बालाम्
विघोषयन्तः स्तुतिगीतिकाभिर्दिगन्तरालं पपरुः समन्तात् ।२२।

श्रीरामजन्मोत्सववासरेऽलं शुभावहे चैत्रसिते नवम्याम् ।
आरभ्य सूर्योदयतो वभूव सर्याजिपन्तः श्रुतिपाठमग्नः ।२३।

दिनमणिरथ यावद् द्योतते व्योममध्ये
विकिरति च स भक्तः पुष्पपत्राणि विष्णौ ।
समजनि सुतरत्नं तावदस्य प्रियायाम्
दशरथदयितायां यत्क्षणे रामचन्द्रः ।२४।

तदनु रघुवरिष्ठे भक्तिनिष्ठेन तेन
द्विगुणितसुखभाजा भव्यजन्मोत्सवाभ्याम् ।
निखिलपुरजनेभ्यो मिष्टमन्नं विभज्य
सुफलतममकारि प्रार्थनाभिर्दिनं तत् ।२५।

कयापि भासोज्ज्वलितं पितैनं नारायणेत्यर्भकमाजुहाव ।
श्रीरामदासाभिधया समर्थनाम्नापि पश्चात्प्रथितोऽभवत्सः ।२६।

वर्णेन गौरो रुचिराङ्गयष्टिर्वालः स वालेन्दुकलेव कान्त्या ।
दिने दिने वृद्धिमवाप पित्रोः संश्रापयन्मोदरसं समृद्धिम् ।२७।

अथैकदा पैठणमभ्यगच्छत् सूर्याजिपन्तः स्वजनेन साधंम् ।
संद्रष्टुमिच्छन्मुनिमेकनाथं पयट्य दीर्घे पथि तीर्थसेवी ।२८।

प्रागेव येनाभिहितोऽवतारो द्वितीयसूनोर्द्विजपुङ्गवाय ।
स दीर्घदृष्टिर्नचिराद्विदित्वा तदागमं स्वाश्रममत्यतुष्यत् ।२९।

क्रमेण संभाव्य तपोधनस्तान् यथाविधि द्वादशमासकल्पम् ।
शिशुं गृहीत्वा च मुदोपगुह्य मुहुर्मुहुस्तच्चुबुकं चुचुम्ब ।३०।

प्रेमोद्रेकवशाद्यतिस्तमुरसा संपीडयन्नर्भकम्
साक्षाद्वायुसुतावतारममलं जानंस्तपस्तेजसा ।
शश्वद्बाष्पभरेण हर्षविवशः प्रक्षालयन् भूतलम्
प्रावर्तिष्ट स नर्तितुं प्रहसितुं प्रारब्ध तावच्छिशुः ।३१।

तदनु मृदुगिरासौ दम्पती सम्बभाषे
मम सुहृदसि धन्यो जन्मना नन्दनस्य ।

प्रथमजन्म च यस्या गर्भतः सा कृतार्था
लसति शुभकुलं वा तेजसोदात्तमूर्तेः ।३२।

श्रीरामस्य पदाम्बुजेऽनवरतं श्रद्धामहत्या सखे
त्वद्वंशे समवातरत्सुकृततः कोऽपि प्रभावी नरः ।

सोऽयं नूतनयुगस्य हन्त भविता संस्थापकः कीर्तिमान्
त्रात्वार्ताभिजदेशजात् परयुगात्साधून्सति नेष्यति ।३३।

यद्धर्माभ्युदयाख्यकर्मणि चिरात्प्रावर्ति गाढं मया
तद्विस्तीर्य दृढीकरिष्यति महाराष्ट्रे स्वराज्यं वसौ ।

तस्मान्मे चरमा स्थितेर्जवनिकाऽधस्तादिदानीं पतेत्
इत्युक्त्वाऽन्तरधान्मुनिः स नचिरात्पूज्यैकनाथः स्वयम् ।३४।

इति सौ. क्षमायाः कृतौ श्रीरामदासचरिते रामदासावतारो
नाम प्रथमः सर्गः ।

"श्रीराम जय राम जय जय राम"

❋

❋❋❋❋❋❋❋❋❋❋❋❋❋❋❋❋❋❋❋❋❋❋❋

# पाठकाः प्रार्थ्यन्ते

मान्याः !

कृपया वार्षिकशुल्कमविलम्बं प्रेष्यताम् । पत्रप्रेषणेनापि वार्षिकशुल्कप्रेषणार्थं प्रार्थना कृता किन्तु स्वल्पैरेव महानुभावैः शुल्कप्रेषणं कृतम् । अतः सविनयं प्रार्थ्यते यत् शीघ्रमेव शुल्कप्रेषणेन सहायता कार्या ।

— सम्पादकः



# बैंकाके संस्कृतम्

पुरीविश्वविद्यालयस्य भूतपूर्वः कुलपतिः, देहली विश्वविद्यालय-संस्कृतविभागे प्राध्यापकः, नैकेषां संस्कृतग्रन्थानां रचयिता, अनेक देशभाषावगाहनार्जित — अनुभवचयः, संस्कृतसाहित्य — धुरीणः प्रख्यातयशसाम् संस्कृतसंस्कृतमनोविग्रहाणाम् पं० चारुदेव शास्त्रिणाम् सुतनयः डा० सत्यव्रत शास्त्री ईसवीये १९७७-७९ वर्षे संस्कृताध्यापन-प्रसंगेन बैंकाकमध्ये अवसत् । स हि सम्बादप्रसंगेन इत्थम् अस्मान् अश्रावयत—

बैंकाके राज्ञः ! राजकुमारीम् महाचक्रीम् देवरत्न राजसुताम् अहम् संस्कृतम् पाठयामि स्म । तस्या अदृष्टपूर्वा प्रवृतिः माम् संस्कृत-कवेः 'भावस्थिराणि जन्मान्तरसौहृदानि' इतीदं सत्यम् भृशं स्मारयति स्म । भारताद् वहिः संस्कृतेन अनवगाढे भूस्थले सर्वं भौतिक सुखसंप्लाविते राजपरिवारे अपि जातायाः संस्कृते रुचिः प्राक्तन-संस्कारावेगवशादेव स्यात्, किमन्यत् कारणम् ?

सा हि मृच्छकटिक-मुद्राराक्षसेति संस्कृतनाटकयोः अभिनय-दर्शनार्थं अत्युत्सुका अदृश्यत-सा सिरिन शौनं अर्थात् श्रीधरा इत्येव-मपि कथ्यते ।

मम एकः अन्यो विद्यार्थी प्रथोदः (प्रबोधः) इत्यभिधानोऽध्या-सीत् । स हि तद् देशीयः एकस्य बहु विभवपतेः एकमात्र पुत्रः आसीत् । तस्य संस्कृताध्ययने उदग्रा गतिः आसीत् । तत् पिता व्यवसाय विषये ऐम. ए. आसीत् । पिता तमाह – वत्स, स्व विस्तृतव्यवसाय-कारणात् व्यवसायस्नातको भव । स प्राह मम तु संस्कृत–विषये एव रुचिः, नान्यत्र ।

पिता कोपेन प्राह

तत कः स्व व्यवसायम् चालयिष्यति ? सुतः- मम तु अनन्या-भक्तिः संस्कृते, कान्या गतिः ? पिता - यद्येव ते हठधर्मिता तदहम् त्वां स्वं रिक्थस्य उत्तर - दायित्वात् भ्रंशयिष्यामि । सुतः— भवान्

यद्रोचते तत् करोतु, ग्रहन्तु संस्कृते एव दृढमतिर्भवामि । कुतश्चन छात्रवृत्तिं तु लब्ध्वा संस्कृतं पठिष्यामि । नाऽत्र मे मनागपि चिन्ता । इति । अयमपि प्राक्तन संस्काराणामेव पोषकौ दृष्टान्तः ।

संस्कृतम् पठित्वा साम्प्रतं स तद् देशस्थयोः चूलालकौर्न (चूडालंकरणम्) शिल्पाका विश्वविद्यालययोः ग्रन्यतरस्मिन् प्राच्य-विद्याविभागे प्राध्यापकपदे तिष्ठति ।

—:o:—

# भारतस्य — एकता

डा. परमानन्दगुप्तमहाभागानाम् ग्राध्यक्ष्ये सितम्बरमासस्य नवतारिकायाँ संस्कृतसम्मेलनं संजातम् तत्र मुख्यातिथिरूपेण पण्डितवर्याः गुलामदस्तगीरमहोदयाः समुपस्थिता ग्रासन् ते संस्कृतज्ञैः 'किमपेक्ष्यते' इति विषयमादाय स्वसारगर्भाः भावा उद्भाविताः । संस्कृतवाङ्मये कला-शिल्प-ज्ञान-विज्ञानस्य बहवो विषयाः सन्ति । संस्कृतज्ञाः तान्विषयानधीत्य वर्तमान-कला-शिल्प-विज्ञानादिभिः तद्विषयज्ञानं संयुज्य तत्पठनपाठने सहयोग कुर्युः । भारते प्रचलितानां विभाजनभावानां दूरीकरणाय संस्कृतस्य पण्डिताः अग्रे आगच्छन्तु यथा पूर्वं तमिलनाडुप्रदेशे यावत्कालं संस्कृतपण्डिता गृहगुहासु निलीना ग्रासन् तावत्कालं तत्र विभाजनभावा वृद्धिगता जाता परं यदा संस्कृतपण्डिता वहिरागतास्तदा तत्र विभाजनचर्चाऽपि समाप्तप्राया जाता । एतादृशी स्थितिः । भारतस्य अन्येषु प्रान्तेषु ग्रपि तिष्ठति यत्र तत्र संस्कृतस्य प्रचारः प्रसारश्च न्यूनोऽभवत् तत्रैव विभाजनं जातम् अधुनाऽपि तत्रैव उग्रवाद, आतंकवादश्च दरीदृश्यते परं यत्र संस्कृतस्य प्रचारः सम्यग्भवति तत्र तादृशी स्थितिर्नास्ति । अतः भारतस्याखण्डताम् आनेतुं संस्कृतस्य प्रसारः करणीयः । अध्यक्षीयभाषणे डा. परमानन्दगुप्तमहाभागाः प्रेरितवन्तः यद् यावत्कालं वयं संस्कृतभाषायां भाषणं कर्तुं प्रवृत्ताः न भवाम, तावत्कालम् अस्माभिर्गृहीतं विविधविषयज्ञाननैपुण्यम् अपूर्णमेव तिष्ठति । सभाया. संयोजनं संस्कृत विभागस्य प्राचार्यवर्यैः डा कृष्णलाल महाभागैः कृतम् । अन्ते च संस्कृतविभागस्य अध्यक्षमहाभागैः डा. वाचस्पति उपाध्यायनामधेयैः धन्यवादज्ञापनं कृतमिति ।

डा० सत्य देवो वर्मा, य० नगरम्

# सम्पादकीयम्

## पं० क्षमा जयन्ती



धन्या, शास्त्रसुपण्डिता, सुरगिरः श्रेष्ठा परा लेखिका ।
पौर्वात्येऽपि तथैव सा सुनिपुणा पाश्चात्यज्ञाने यथा ।
काव्यान्यत्र तथा कथाश्च विविधाः या निर्मिताः संस्कृते ।
तं स्वर्लोकगताऽपि सा नहि मृता स्थास्यत्यवश्यं सदा ।१।

तां तस्याः खलु जन्ममाससमये शब्दैः स्मरामो वयम् ।
दिव्यज्योतिरिदं प्रकाशयति तां स्वीयेषु पृष्ठेषु वा ।
स्वातन्त्र्यस्य कृते तया बहुतरं यत्प्रेरणापूरितम् ।
साहित्यं ननु निर्मितं सुविमलं सद्राष्ट्रकोषो महान् ।२।

तस्या या खलु पुत्रिका बहुगुणैर्युक्ताऽद्य संराजते ।
सा साहित्यकलाविलासलसिते क्षेत्रेऽत्र संभ्राजते ।
देशे चापि तथा विदेशभुविषु नाट्यैस्तया प्रापितम् ।
मातुस्तत्प्रतिभायुतं सुगदितं गीर्वाणवाण्यां भृशम् ।३।

सा मुम्बापुरवासिनी विजयते गीर्वाणमेवापरा ।
स्वीयां तां जननीं क्षमां नहि क्षमा विस्मर्तुमद्यापि या ।
संलग्नास्ति सदा प्रचारकरणे गीर्वाणवाण्यास्तथा ।
काव्यैश्चापि च दिव्यनाट्यसहितैस्तद्वत् कथाभिर्यथा ।४।

सा सत्यं हि विराजते प्रतिकृतिः किं संस्कृतस्यैव या ?
दिव्यैर्भारतनारिवर्गसुगुणैर्युक्ताऽथ वाग्भूषणैः ।
लीला संस्कृतसंस्कृता शुचिस्मिता शुभ्रा यथा भारती ।
सा जीयात् शतवर्षरोगरहिता सन्मङ्गलैः संयुता ।५।

❀ ❀ ❀ ❀ ❀ ❀ ❀ ❀ ❀ ❀ ❀ ❀ ❀

मुद्रकः प्रकाशक :—
भारतीमुद्रणालय भारती विहार, मशोबरा - शिमला १७१००७ (हि. प्र.)
स्वामीः- श्रीमती आचार्य रत्नकुमारी शर्मा,
दूरभाष : [78459 28-200]
जुलाई १९९३ आषाढ़ २०५० — वर्षम् — ३७ अङ्कः १०
वार्षिक मूल्यम् ५० रु०

R. N. 6384/57 ल—33/एस. एम. / 10/91

# संस्थान के प्रकाशन

१. फलादेश कल्पतरुः (मूल संस्कृत में)
हिन्दी अंग्रेजी टीका सहित ४० वर्ष के अनुसन्धान और अनुभव पर आधारित जातकफल कहने का अनुपम ग्रन्थ ... मू. ७०-००

२. संस्कृत कोशवाङ्मयम् (संस्कृत में)
संस्कृतकोशसाहित्यपर अनुसन्धानपूर्ण विवेचन ... मू. १७५-०

३. झञ्झा (संस्कृत में)
शेक्सपीयर के द टैम्पेस्ट नाटक का सचित्र रूपान्तर ... मू. ५०-००

४. हिमाचलप्रदेशे संस्कृतस्य प्रसारो विकासश्च (संस्कृत में)
हिमाचल में संस्कृत के प्रसार विकास की विस्तृत कहानी ... मू. ५०-००

५. वैजयन्ती (हिन्दी काव्य)
नवीन प्राचीन विचारधाराओं का गीतिमय समन्वय ... मू. १५-००

६. सूनृता (संस्कृत काव्य)
आधुनिक गीतों में गुम्फित अनुपम उपहार ... मू. २५-००

७. शक्तिसौरभ (हिन्दी में)
संस्कृत लेखिकाओं का इतिहास ... ... मू. १५-००

८. विचारामृत (हिन्दी में)
आचार्य जी के विभिन्न विषयों पर जीवनोपयोगी लेख दो भाग मू. १५-००

९. पथ्यापथ्यविनिर्णय
सं. हिं. टीका सहित आयुर्वेद का दुर्लभ ग्रन्थ ... मू. २०-००
(डाकव्यय सर्वत्र पृथक्)

१०. सरिता
(अभिनव सं. कथानिकाएं) ... मू. ५०-००

११. हिमानी
(संस्कृत काव्य हिन्दी अनुवाद सहित) मू. १००-०

सम्पर्क सूत्र :—

सचिव, संस्कृत शोध संस्थान
भारती विहार मशोबरा
शिमला १७१००७ (हि. प्र.)

# दिव्यज्योतिः

संस्कृतस्य सचित्रमासिकम्





## श्री कृष्ण जन्माष्टमी

ना: कृष्णवाहे वसुदेव आगते स्वयं व्यवर्तन्त यथा तमो रवेः ।
ववर्ष पर्जन्य उपांशु गर्जितः शेषोऽन्वगाद् वारि निवारयन्फणैः ॥

शिमला सितम्बर, १९६३

वर्षम् ३७ संख्या १२

दिव्यज्योतिः



संस्थापितम् १९५६
प्रधानसम्पादकः—
आचार्य केशव शर्मा

संस्थापकाः तथा
आद्यसम्पादकाः
आचार्यश्रीदिवाकरदत्त
शर्माणः,
राष्ट्रपतिसम्मानिताः

(पत्रमिदं हि० क० सं० भा० अकादमी प्रदत्तानुदानसाहाय्यम् । पत्रिकागत मुद्रणदोषाणां सम्पादकीयनीति-विषये च अकादमीदायित्वं नास्ति)
हिमाचल प्रदेश—पंजाब—हरियाणा - जम्मूकश्मीर - मध्य प्रदेश राजस्थान-महाराष्ट्र उत्तरप्रदेश शासन—स्वीकृतं केन्द्रशासनपुरस्कृतम्- संस्कृतस्य सचित्रं मासिकम् ।



## पत्रस्य उद्देश्यानि तथा नियमाः

सरलसरस सुबोध-साधनैः सर्वस्मिन् संसारे संस्कृतस्य प्रसारः, साहित्यान्तर्गतानां सकलकलानां समन्वेषणं, संसारस्य हितसम्पादनम्, एवं लौकिक - अलौकिकस्वातन्त्र्यस्य प्राप्तिः ।

"दिव्यज्योतिः" प्रतिमासं पञ्चदशतारिकायाम् (आङ्ग्लमानेन) प्रकाशितं भवति ।

पत्रस्य वार्षिकमूल्यं ५० रु० अर्धवार्षिकं २५ रु० एकस्याङ्कस्यच रु० ४.५० भवति ।

वर्षारम्भः अक्तूबरमासतः भवति ग्राहकः कस्मादपि मासाद् भवितुं शक्नोति । ग्राहकैः, "सम्पादक, दिव्यज्योतिः, भारती विहार, शिमला-१७१०० इति संकेते धनादेशेन वा. शु. प्रेषणीयम् ।

# विषयानुक्रमः

# स्वातन्त्र्यगीतम्

— हरिदत्त ग्वाड़ी "शैलज"



अहो ! स्वराज्यं आर्यजनानां—धन्यं भारतवर्षम् ।
गङ्गा-यमुना-सरयूतीरे- खेलति शुभस्वातन्त्र्यम् ॥
श्वेतकिरीटीतुङ्गहिमाचल-प्रसरति मलयसमीरम् ।
नन्दनकाननकलितकुन्तला-पश्य सखे ! काश्मीरम् ।
वंशीवटतटनटति माधवः- कृत्वा कंसध्वंसम् ॥
गङ्गा - यमुना-सरयू ...
अहो ! स्वराज्यं ...
धर्मोद्धारकपुण्यविचारक - लङ्काविजयी रामः
चक्रसुदर्शननिहतकुचक्रं - चक्रवर्तिघनश्यामः ।
चन्द्रवंश - रघुवंशकौमुदी—किरति आर्यमहिमानम् ॥
गङ्गा-यमुना-सरयूतीरे ...
अहो ! स्वराज्यं ...
आजाद-बोस-सुखदेव—राजगुरु—अमरभारती प्राणः ।
भारतमाता ! पुण्यप्रभाते—पुष्पाञ्जलिगृंहाण ।
नीलाकाशे विश्वविकासे — भवतु सदानोत्कर्षम् ॥
गङ्गा—यमुना सरयूतीरे—खेलति शुभस्वातन्त्र्यम् ।
अहो ! स्वराज्यं ...

— प्रवक्ता
हिमाचल आदर्श संस्कृत महाविद्यालय
जांगला, रोहड़ू , जनपद—शिमला
हि० प्र०

# "पठेयुः स्मरेयुः सफलो भवेयुः"

संदेश गौत्तम पङ्किलः



प्र० १. संस्कृतभाषायाः कतिधारा: सन्ति ?

उ० १. संस्कृत भाषायाः द्वे धारे स्तः। (१) वैदिकभाषायाः धारा (२) लौकिकसंस्कृतभाषायाः धारा।

प्र. २. यत् साहित्यम् पाणिनीयव्याकरणमनुसरति तस्य किमभिधानम् तथा चास्य साहित्यस्तसीमा कुतः कुतः पर्यन्तमस्ति ?

उ. २. लौकिकसाहित्वमस्य शब्दस्य प्रयोगो वैदिकसाहित्यं परित्यज्य सरलसंस्कृतवाङ्मयम् भवति । साहित्येऽस्मिन् रामायण-व्याकरण-सूत्राणाम् पूर्णरूपेण प्रयोगो नास्ति।

प्र. ३. किम् सर्वेषाम् वेदानाम् भाषा समाना एव वर्तते ?

उ. ३. नैव. सकला। वेदाः भाषावैभिन्न्यसंवलिता सन्ति। प्राचीनतमवेदऋग्वेदस्यापि भाषा सर्ववेदेभ्यः भिन्ना प्रतीयते।

प्र. ४. ऋग्वेदादन्येषु वेदेषु किम् वैभिन्न्यमस्ति ?

उ. ४. ऋग्वेदस्यापि भाषा सर्वत्र तुल्या नास्ति, अन्यवेदेषु सरलीकरणस्योन्मुखता प्रतीयते। शब्दरूपाणाम्-धातुरूपाणामनेकतानियमतता दूरम् भवति अन्येषु वेदेषु गद्यस्यापि सृष्टिरस्ति ऋग्वेदो पद्यात्मकः।

प्र. ५. संहिता याव व्याख्यारूपेण के के ग्रन्थाः मिलन्ति ?

उ. ५. ब्राह्मणारण्यकोपनिषदः सकलाः ऋग्यजुसामाथर्वणसंहितानाम् व्याख्या रूपे मिलन्ति ऐकतः सर्वे वैदिकवाङ् मये अगच्छन्ति। लौकिकोन्मुखा वैदिकभाषा एषां भाषास्ति । एषां वाक्य रचना साकल्येन संवलिता पदरूपेषु जटिलता दृश्यते।

प्र. ६. रामायणमहाभारतौ कदा मिलतः ?

उ. ६. वैदिकलौकिकसंस्कृतस्य सन्धिकाले रामायणमहाभारतौ मिलतः एतौ उभौ एव लौकिकसंस्कृतभाषां विकासपथं-नयन्ति ।

प्र. ७. पाणिनिः कदा अजायत्, सः कस्य ग्रन्थकर्ता आसीत ।

उ. ७. रामायण महाभारतयोः काले (५०० ई पू०) भगवान् पाणिनि अभवत् । सः अष्टाध्यायीमरचयत् ।

प्र. ८. भगवान् पाणिनिः वैदिकलौकिकसंस्कृतभाषां कम् कमभिधानं प्रयच्छति ।

उ. ८ भगवान् पाणिनिः वैदिक संस्कृतभाषां "छन्द सि" इति कथयति लौकिकसंस्कृतभाषां केवल भाषा इति कथयति ।

प्र. ९. साहित्यस्य विकासपथि गन्तारः कवयः कस्य व्याकरणस्यानुसरणम् कुर्वन्ति ।

उ. ९. साहित्यस्य विकासपथि गन्तारः सकलाः कवयः पाणिनीय व्याकरणमनुसरन्ति ।

प्र. १०. वैदिकसंस्कृतभाषायाञ्च लौकिकसंस्कृतभाषायाम् के के ग्रन्थाः प्रागच्छन्ति ।

उ. १०. सर्वा वेदसंहिताः, आरण्यकाः, उपनिषदश्च वैदिकसंस्कृत-वाङ्मयेप्रागच्छन्ति । एषां कृते संस्कृतसाहित्ये श्रुतिः शब्दो प्रयुज्यते । लौकिकसंस्कृतभाषायाम् वेदप्रयोगानुकर्तारः ग्रन्थाः वेदाङ्गादयः रामायणम्- महाभारतम्, नाटकमा, काव्य-ग्रन्थाः, सन्ति ।

प्र. ११. वैदिक वाङ्मये कीदृक् साहित्यस्य सृष्टिरभवत ।

उ. ११. वैदिकवाङ्मये धर्मप्रधानसाहित्यस्य सृष्टिरभवत् च लौकिकसाहित्ये जीवनस्यान्यपक्षाणामपि वर्णनमस्ति ।

इति :-

— संस्कृत विभागाध्यक्षः
डी. ए. वी. विद्यालयम्
कोटखाई शिमला १७१२०२



# देशदशा

इदानीं भारते देशे जनानां दुर्दशा जाता
न पश्यन्तीह नेतारो मदान्धाः कर्कशा जाताः
विनष्टं शासनं, धर्मो गतो ऽस्माकं मृता नीतिः
समेषां दुष्टतत्त्वानां मनस्तो निर्गता भीतिः
खलाः क्रूरा भुजंगाः सर्वथा स्वच्छन्दतां प्राप्ताः ।१।
क्वचिच्चौर्यं क्वचिद् धौर्त्यं क्वचिद्हत्या क्वचिद्युद्धम
न विश्वासोऽस्ति कस्यापीह देशे नहि मनः शुद्धम्
अहो ? हन्त्यत्र संकोचं विना स्वभ्रातरं भ्राता ।२।
यथा निजवर्गचिन्ता, नास्ति तद्वद् देशहितचिन्ता
समस्या सम्प्रदायानां विदेशीयैः कृताऽनन्ता
समंतात् राष्ट्रहन्तारो न कश्चिद् दृश्यते त्राता ।३।
समेषामेव चित्ते केवलं स्वार्थस्य साम्राज्यम्
धनैश्वर्यं मतं साध्यं हि लोकाराधनं त्याज्यम्
चरति मायामृगो सर्वत्र नहि रामो न वा सीता ।४।
वृकाः संरक्षका भूत्वा स्वयं खादन्ति निजरक्ष्यम्
क्षुधा चैतादृशी तेषां मतं स्वं राष्ट्रमपि भक्ष्यम्
क एतस्यामवस्थायां भविष्यति देशसंगोप्ता ? ।५।
सुदीर्घा भारती सीमा क्रमाल्लघ्वीकृता पापैः
विलोक्यैतत् क्षतं रूपं ज्वलत्यस्मन्मनस्तापैः
विनाऽस्मद् रक्तदानैर्न स्वरूपं पूर्ववद् भाता ।६।
पवित्रा भारती भूमिः वयं सर्वे सुतास्तस्याः
करिष्यामो वयं स्वयमत्र रक्षां सर्वथा तस्याः
स इह देहार्पणं कर्ता स भविता राष्ट्रनिर्माता ।७।

— डा० शिवशरण शर्मा
५१-विनयनगर (प्रथम) जेलमार्ग ग्वालियर (म. प्र.) ४७४०१३

# "सूक्ति-सुधा-संकलनम्"

(संकलन कर्त्री ऋचाशर्मा)

यस्य कृत्यं न जानन्ति
मन्त्रं वा मन्त्रितं परे ।
कृतमेवास्य जानन्ति
स वै पण्डित उच्यते ॥

महा उ. प. अ. ३३-२३

यस्य कृत्यं न विघ्नन्ति
शीतमुष्णं भयं रतिः ।
समृद्धिरसमृद्धिर्वा
स वै पण्डित उच्यते ॥

वही ३३-२४

निश्चित्य यः प्रक्रमते
नान्तर्वसति कर्मणः ।
अव-ध्यकालो वश्यात्मा
स वै पण्डित उच्यते ॥

वही ३३-६६

न हृष्यत्यात्मसम्माने
नावमानेन तप्यते ।
गाङ्गो ह्रद इवा क्षोभ्यो
यः सः पण्डित उच्यते ॥

वही ३३-२१

प्रवृत्तवाक् चित्रकथ
ऊहावान्प्रतिभामवान
आशुग्रन्थस्य वक्ता च
यः सः पण्डित उच्यते ॥

वही ३३-३३

— दयानन्दादर्श विद्यालय सोलनम् —



# संस्कृतभाषायाः वैशिष्ट्यम्

(संसदा आयोजितायां 'गैर्वाण्यां एवमन्यासु तन्नैकटिकासु भाषासु अर्थविश्लेषणसिद्धान्तः, ज्ञानप्रतिरूपणं च इत्यस्यां विचारगोष्ठ्यां विद्वद्भि पण्डितरत्नं के. एस. वरदाचार्यैः प्रतिपादितो विषयः)

संस्कृतभाषायाः वैशिष्ट्यमधिकृत्य तदा, तत्र तत्र विद्वद्वरेण्यैः विविधः विमर्शः क्रियत एव । तत्रापि विशिष्य 'इयं भाषा इतरभाषापेक्षया 'कम्प्यूटर' यन्त्रस्य अनुगुणा वर्तते इति प्रकटनानन्तरम् इयं जिज्ञासा वर्धते । इयं हि भाषा सृष्ट्या सहैवाविर्भूता यतः, अतः इयं 'Natural Language' सहजा भाषा इत्यपि कैश्चिद्वर्ण्यते । यद्यपि सर्वा अपि भाषाः सहजा एव । न हि कश्चित् कांचन भाषां स्वयं कल्पयित्वा जनानामुपरि आरोपयितुं प्रभवति । अतः सर्वा अपि भाषाः तत्तत्कक्ष्यायां सहजा एव । अथापि संस्कृतस्य सहजत्वं न तावन्मात्रेण ।

संस्कृतभाषा कदा आविर्भूता ? कथमाविर्भूता ? इति प्रश्नस्य उत्तरं प्रथममन्वेष्टव्यम् । आरम्भे सहजा भाषा प्राकृता आसीत् पाणिन्यादिभिर्व्याकरणादिना तस्यास्संस्कारदानात् सा संस्कृता' अभूत् इति केचन मन्यन्ते । परन्तु इदं न क्षोदक्षमम् । भाषाया बहुमुखाभिवृद्ध्यनन्तरमेव व्याकरणरचनायां प्रवृत्तिः स्यात् । महाभाष्यादिष्वपि 'प्रयुक्तानां शब्दानामेवान्वाख्यानम्' वर्ण्यते । 'प्रयोगशरणा हि वैयाकरणाः' इति किलाभाणकः । अतः प्राकृतमेव संस्कृतमभूदिति न सर्वथा युक्तम् । प्रत्युत संस्कृतमेव क्रमशः प्राकृतमभूत् इति कथनमेव युज्येतापि ॥

इदमत्रावधेयम्—'व्याकरणम्' इति पदं उपनिषदि श्रूयते तद्धेदं तर्ह्यव्याकृतमासीत्, तन्नामरूपाभ्यां व्याक्रियत' (वृ. उ. ३-४-७)

'नामरूपे व्याकरवाणि' (छां. उ. ६-३-२) 'नामरूपे व्याकरोत्' (छां.उ. ६-३-३) इति। 'नामरूपव्याकरणम्' इति वेदान्तिनां प्रसिद्धमिदम्। 'संज्ञामूर्तिक्लृप्तिस्तु त्रिवृत्कुर्वत उपदेशात्' (ब्र. सू. २-४-१७) इति सूत्रम् एतद्विचारार्थमेव प्रवृत्तम्। 'सर्वाणि रूपाणि विचित्य धीरः। नामानि कृत्वा ग्रभिवदत् यदास्ते' इति च (पु. सू. प्रसिद्धमेव। ग्रतश्च व्याकरणं - नामव्याकरणम्, रूपव्याकरणम् इति इति द्विविधम् तत्र नामव्याकरणं प्रसिद्धम्, सर्वेऽपि जानन्त्येव। तदेव च शब्दव्याकरणम्, शब्दशास्त्रम्, इति प्रसिद्धम्। रूपव्याकरणं नाम किम् ?

जलानयनसाधनभूतं वस्तु चिकीर्षुः तदनुगुणाकरविशिष्टमेव घटादिकं करोतीति सर्वविदितम्। तद्वदेव, सृष्टिसिद्धाः ये ये ग्राकाराः पशुपक्षिसरीसृपमनुष्यादीनाम्, ते ग्राकाराः सृष्टिकर्त्रा प्रकृत्या वा केनचिदुद्देशेनैव निर्मिता भवेयुः। नो चेत्, 'ग्रस्य वस्तुनः, ग्रस्य प्राणिनां वा ग्राकारः एवमेव कुतोऽभवत् ?' इति प्रश्नः निरुत्तरः स्यात्॥

यथा वा यस्य कस्य च नूतनस्य यन्त्रस्य निर्माता, तान्त्रिकः, यदुद्देशेन तं यन्त्रं सिसृक्षति, तदुद्देशानुगुणमेव तेन तस्याकारः करणीयो भवेत्। परिभ्रमणकार्यार्थं क्रियमाणं हि चक्रं तदनुगुणं वर्तुलाकारमेव हि भवेत्, न तु चतुरश्राकारम्। एवमेव एतज्जगत्स्रष्टा वा, प्रकृतिर्वा स्वोद्देशानुगुणाकारविशिष्टमेव किल वस्तूनि सृजेत्। ग्रतश्च वस्तूनां रूपकरणमेव रूपव्याकरणम्'। रूपो नाम ग्राकारः। ब्रह्मसूत्रे हि 'नामरूपव्याकरणम्' इत्येतस्मिन्नर्थे 'संज्ञामूर्तिक्लृप्तिः' इति दृश्यते। तत्र संज्ञाक्लृप्तिः = नामव्याकरणम्, मूर्तिक्लृप्तिः = रूपव्याकरणम्। क्लृप्तिः = कल्पनम् सृष्टिः। 'धाता यथापूर्वमकल्पयत्' (नारा, १-३८) इत्यत्र कल्पनं = सृष्टिः इति सम्प्रतिपन्नम्।

एवं च एतज्जगत्स्रष्टा, एतद्वस्तूनां सृष्टिसमय एव तत्तदुद्देशानुगुणं रूपम्, नाम च स्वयमेव कृतवान् करोति वा - इत्येव नामरूपव्याकरणपदार्थः। ग्रत एव नामरूपव्याकरणमेव सृष्टिपदार्थः इति वेदान्तिभिरुच्यते। ग्रनेन ज्ञायते—सृष्टिसहजसिद्धानां वस्तूनाम् ग्राकारेण साकमेव नाम्नोऽपि सृष्टिर्भवति। उभयमपि समानकालिकमेव। एतानि च पदानि तत्तन्निर्वचनेनैव तत्तदर्थवाचकानि भवन्तीत्यपि

सर्वविदितम् । यथा 'देवः' इति पदं 'दिवुक्रीडाविजिगीषा' इत्यर्थकधातुतो निष्पन्नम् इति शब्दव्याकरणं वर्ण्यते, तथैव क्रीडादिव्यापारानुगुण एव कश्चन आकारोऽपि देवस्य सिद्ध्यति ।

एवं रीत्या संस्कृतपदानि सर्वाण्यपि कारणजन्यानि । 'सर्वं धातुजमाह पाणिनिः' इति किल श्रूयते । अत एव 'भू' इत्यादीनां 'धातुः' इति नाम । धातुर्नाम मूलकारणं वस्तु । अतः संस्कृतभाषायां तत्तत्पदानि, तत्तन्निर्वचनेनैव तत्तदर्थवाचकानि ज्ञातुं शक्यन्ते । यथा देववाचकानि 'अमरा निर्जरादेवाः त्रिदशाः'– इत्यादीनि पदानि, यदा निरुच्यन्ते, तदैव देवानां स्वरूपस्वभावादिपरिचयोऽपि तेनैव भवत्यस्माकम् । एवमेकैकस्य वस्तुनः अनेकधर्मखचितत्वादेव, संस्कृतभाषायां एकस्य वस्तुनः अनेके पर्यायशब्दाः प्रवृत्ताः । एतेषां परिशीलनेन तत्तद्वस्तूनां स्थानमानप्रयोजनादिकं सर्वं ज्ञातुं शक्येत । अत एव चेयं संस्कृता भाषा सहजा = सृष्टिसहजाभाषा । तेन च सृष्टिविज्ञानं सर्वमप्यस्माकं परिचितं भवति स्वयमेव । तेन चैतेषां वर्गीकरणादिकमपि सुलभम्, असंकीर्णं च भवितुमर्हति । अत एव 'कम्प्यूटर' यन्त्रे इतरभाषापेक्षया अस्या आनुगुण्यातिशयोऽपि युक्त एव ।

किं च—भाषायां प्रधानो विषयः— 'स्वरः' । भाषा किल अभिप्रायप्रकटनसाधनम् । एकस्यैव पदस्य विविधस्वरयुक्ततयोच्चारणे अर्थभेदः प्रसिद्धः । व्याध्यादिपीडितस्य वेदनासूचको यो ध्वनिः 'हुम्' इत्यादिरूपः, तस्य श्रवणेन किल व्याधेः स्वरूपपरिमाणादिकं ज्ञातुं शक्यते । आनन्दवर्धनादिभिः प्रतिपादितः 'ध्वनि' वादः एतन्मूलक एव किल । अत एव तस्य 'ध्वनिः' इत्येव नाम कृतम् । अतश्च अभिप्रायाविष्करणे ध्वनेः=स्वरविशेषस्य स्थानं महत्तरमेव । संस्कृतभाषायां किल वर्णानाम्, पदानाम्, वाक्यानां च स्वरविशेषाः वर्ण्यन्ते । 'इन्द्रशत्रु' पदे हि, तत्पुरुषबहुव्रीहिसमासभेदेन स्वरभेदः अर्थभेदश्च प्रसिद्धः । 'पुरुष एवेदं सर्वम्' इति पुरुषसूक्तवाक्ये दकारः उदात्त एव पठनीयः । अनुदात्तस्वरकथने, निर्दिष्टवस्तुन एव पुरुषात्मकत्वं लभ्यते; न तु सर्वस्य । अतः संस्कृतभाषायां स्वरः अत्यन्तं प्रधानम् । 'वर्णक्रम' प्रभृतिषु इदं व्यक्तं वैदिकानाम् ।

एतादृशविषयाणां सर्वेषां सावधानाध्ययनेन हि अस्या वैशिष्टयमसाधारणं ज्ञायेत । तेन च अर्थाभिव्यक्तौ स्पष्टता, असांकर्यम् इत्यादयो लाभाः सुलभा अस्यां भाषायाम् ।

वेदवाङ्मये तु इदं सर्वमपि स्पष्टं निरूपयितुं शक्यम् । एवं सृष्ट्या साकमेवाविर्भावात् वर्धनाच्च इयं भाषा न पुरुषसृष्टा, किन्तु दैवी वाक् । अत एव च देवभाषेयम् । अत एव च नैकस्य समाजस्य, देशस्य वा इयं भाषा परिमिता गण्यते । देवा यथा सर्वेषां समानाः तद्वदेवेयमपि ।

अत एवेयं भाषा न 'मृतभाषा' । न हि एकस्य भाषायाः, एकेन समाजेन, देशेन, कालेन वा सीमितत्वमात्रात्, अन्यदेशकालादावनुपयोगमात्राच्च मृतत्वं वक्तुं शक्यम् । तदा हि लौकिकी भाषा, परिमितदेशकालसमाजमात्रसम्बन्धिनी 'मृता' भवेत् । अतः संस्कृतं देवभाषा, अमराणां भाषा । सा कदापि न मरिष्यति जनानां दौर्भाग्यवशात्, किंचिदिव मलिनेव कदाचित् भायात् । परन्तु समयविशेषे सा पुनरुन्मिषिता विजृम्भेदेव न संशयः । एतत्सर्वं परिशीलने भारतीयानाम्, विशिष्य संस्कृतविदुषां भारः महानेव । तं वोढुं तदनुगुणशक्तिसामर्थ्यादिकग्रहणात्वस्माकं सैव देवी वाणी ।

❀❀❀❀❀❀❀❀❀❀❀❀❀❀❀❀❀❀❀❀❀❀❀❀❀

## पाठकाः प्रार्थ्यन्ते

मान्याः !

कृपया वार्षिकशुल्कमविलम्बं प्रेष्यताम् । पत्रप्रेषणेनापि वार्षिकशुल्कप्रेषणार्थं प्रार्थना कृता किन्तु स्वल्पैरेव महानुभावैः शुल्कप्रेषणं कृतम् । अतः सविनयं प्रार्थ्यते यत् शीघ्रमेव शुल्कप्रेषणेन सहायता कार्या ।

— सम्पादकः



# मुक्तकानि

डा० लेखराम शर्मा
एम० ए० दर्शनाचार्य



विद्याच्युते वीक्ष्य महाधनत्वं
विद्या महार्घी न अपेक्षणीया ।
भूषावृताङ्गीं कुलटां हि दृष्ट्वा
नार्यः कुलीनास्तु न यान्ति, गर्ते ।१।

विद्या हि येनात्र लब्धा उदारा
किं तेन लब्धं न मनुष्यलोके ।
तस्मान्निरीक्ष्य भुवि सावधानं
विद्यां विभान्तीं मनसा लभध्वम् ।२।

मिथ्यावचोभिस्तु विलोक्य सौख्यं
सत्यं महार्घं न अपेक्षणीयम् ।
सौख्यमनित्यं ननु वंचकानाम्
दृष्ट्वा न गच्छेह महान्धकूपम् ।३।

दुष्टैरनेकैश्च समीक्ष्य मोदम्
पौर्वात्यपन्थाः न अपेक्षणीयः ।

सौख्यं द्विदैनं खलु द्यूतवन्तः
भुक्त्वेह दृष्टाः नरकं प्रयाताः ।४।

सौख्यं विलोक्य परपीडकानाम्
सेवा परार्था न अपेक्षणीया ।
मानं असत्य परपीडकानाम्
तस्मिन्हि वासो न शुभः कदाचित् ।५।

कन्यापितुः प्रार्थ्यं प्रभूतराशिं
कश्चिन्न दृष्टः ननु भुञ्जमानः ।
काकेव लोके ऽस्थि विहाय–नूनम्
प्राणान्विहतुं भुवि चेष्टमानः ।६।

पौरं निवासं बहु इच्छमानाः
कष्टं सहन्ते सततं हि बालाः ।
पश्चात्तपन्ते जननीसमक्षे
पक्षिप्रजाता इव मातृ – अङ्के ।७।

वन्यानि छित्वा निशितैस्तु शस्त्रैः
दृष्टाः हि लोके बहुमोदमानाः ।
कामं जनाः निर्धनतां प्रयाताः
नश्यन्तु प्राणाःसुमहार्घभूताश् ।८।

वत्सैः प्रभूतैः न सुखं कदाचित्
उत्पाद्यमानैः अबुधैर्वृथा हि ।
सिंहस्य सूनुः सुखमेति नित्यम्
वन्यानशेषान्ननु शासमानः ।९।

शब्दैः प्रभूतैरिह सेव्यमानैः
नानाजनैश्चापि अबाधमानैः ।
प्राप्नोति श्रोत्रेषु कष्टं हि कश्चित्
कश्चिच्च मान्द्यं मनसः प्रयाति ।१०।

दोषं जलस्येह विलोकयन्नः
मनुष्ययोनेर्न कष्टं सहध्वम् ।
नैर्मल्यमाप्तं हि विहन्य अम्भः
कार्यं न किंचित् भुवि देहगेहे ।११।

पत्रालय -- देवठी ग्राम घाला
सोलन (हि० प्र०)



---

# निवेदन

जिन्हें किसी भी मास की २५ तिथि तक अंक प्राप्त न हो उन्हें कार्यालय को सूचित करना चाहिए जिससे अंक पुनः भेजा जा सके। विलम्ब से सूचना मिलने पर अंक अप्राप्य हो जाते हैं।

— व्यवस्थापक



# "कलियुगे कलिप्रथमचरणे"

आचार्य श्री सुरेश



वर्तमानकाले अशान्ति - अधर्म - नास्तिकतासाम्प्रदायिकतादम्ब-द्वेष-पाखण्डमिथ्याचारः यदि कञ्चिदपि वर्तते, तत्सर्वं कालवशात्। इदं तु अस्माकम् पुराणेतिहासग्रन्थेषु पूर्वमेव कथितमस्ति। द्रष्टव्यम् स्कन्दपुराणस्य कथनं :—

यत् घोरे कलियुगे सम्प्राप्ते :—

"कामार्ता ह्रस्वदेहाश्च लुब्धाः अन्योन्यतत्पराः ।
कलौ सर्वे भविष्यन्ति स्वल्पायुर्बहुपुत्रकाः ।"

श्रीमद्भागवतपुराणे कलियुगस्य इतोऽपि स्पष्ट वर्णनमस्ति। तत्र देवर्षिनारदः कलियुगविषये कथयति यत्—

"सत्यं नास्ति तपः शौचं दया दानं न विद्यते ।
उदरम्भरिणो जीवाः वराकाः कूटभाषिणः ॥

मन्दा सुमन्द मतयो मन्दभाग्या ह्युपद्रुता।
पाखण्डनिरताः सन्तो विरक्ता सपरिग्रहाः ॥
तरुणीप्रभुता गेहे श्यालको बुद्धिदायकः ।
कन्या विक्रयिणो लोभाद्दम्पतीनां च कल्कनम् ॥

आश्रमा यवनै रुद्धाः तीर्थानि सरितस्तथा ।
देवतायतनान्यत्र दुष्टैर्नष्टानि भूरिशः ॥

न योगी नैव सिद्धो वा न ज्ञानी सत्क्रियो नरः ।
कलिदावानलेनाद्य साधन भस्मतां गतम् ॥
अट्टशूला जनपदा शिवशूला द्विजातयः ।
कामिन्यः केशशूलिन्यः सम्भवन्ति कलाविह ॥

सन्तगोस्वामी तुलसीदासेन श्रीरामचरितमानसे उत्तरकाण्डे वर्णितमस्ति यत्—

'कलि मलग्रसे धर्म सब लुप्त भए सद्ग्रन्थ ।
दंभिन्ह निजमति कल्पि करि प्रगट किए बहु पंथ ।।"

विश्वधर्म नहिं आश्रमचारि श्रुति विरोधरत सब नर नारी ।
द्विज श्रुति बेचक भूप प्रजा सब कोउ नहिं मान निगम अनुशासन ।।

मारग सोई जा कहुं जोई भावा पंडित सोइ जो गाल वजावा ।
मिथ्यारम्भ देभ रत जोई ता कहुं सेत दृहुं सब कोई ।।

"अशुभ वेष भूषन धरे भच्छाभच्छ जे खाहिं ।
तेइ जोगी तेइ सिद्धनर पूज्य ते कलियुग माहिं ।।"

अतः वर्तमानकाले यादृश्यः परिस्थितयः अस्माकम् समक्षं वर्तन्ते तासां साक्षात्कारः भारतीय ऋषि मुनिभिः सहस्रवर्षाणि पूर्वमेव कृतः। वर्तमानपाश्चात्योन्मुखीसभ्यतायाः कल्याणकरं एकमेव साधनमस्ति यत्—

"कलिजुग सम युग आन नहिं जौ नर करि विश्वास ।
गाइ राम गुन गन विमल भवतर विनहि प्रयास ।।"

अन्यदपि—

हरेर्नाम हरेर्नाम हरेर्नामैव केवलम् ।
कलौ नास्त्येव नास्त्येव नास्त्येव गतिरन्यथा ।।

— एस० डी० कालेज
सुबाथु



# अग्निभविष्यपुराणयोः निसर्गसन्तुलनम्

— डा० कला आचार्य



आमोदैर्मरुते मृगः किसलयोल्लासैस्त्वचा तापसाः
पुष्पैः षट्चरणाः फलैः शकुनयो धर्मादितश्छायया
स्कन्धैर्गन्धगजास्त्वयेन विहिताः सर्वे कृतार्थास्ततः
त्वं विश्वोपकृतिक्षमोऽसि भवता भग्नापदोऽन्ये मृगाः ।

महायुद्धयोः अनन्तरं न केवलं मानवैः अपि तु सर्वैरेव जीवैः प्रदूषणस्य दुष्परिणामाः अनुभूताः । स्वार्थस्य कृते एकतः अजस्रमेव वनानां संहारः क्रियते अन्यत्र च नित्यनूतनानां नगराणां निर्मितिः भवति । निसर्गस्य संतुलनमनेन प्रकारेण नष्टं भवति । 'वयं सर्वज्ञाः' 'वयं सर्वज्ञाः' इति अभिमानः आधुनिक-मानवानां वर्तते । तेषां विविधेषु क्षेत्रेषु प्रगतिं दृष्ट्वा तद्विषये श्रद्धाऽपि जायते । किन्तु निसर्ग-सन्तुलनविषये अस्माकं पूर्वजाः एव अतिशायिनः इत्यत्र न शङ्कालेशोऽपि ।

विल्सनमहाभागः प्राचीन-भारतीयानां वनस्पतिज्ञानविषये सादरं निर्देशं करोति ... ... They (Hindus) were very careful-observers both of the internal and external properties of plants and furnished, copious lists of the vegetable world, with sensible notices of their uses and names significant of their poculiarities. (Mill's History of India Vol. II, P. 97)

'जगदिदम् सर्वं यत्किञ्च जगत्यां जगत ।' (यजुर्वेद ४०.१ ईशोपनिषद्) अतः न केवलं मानवाः अपि तु ईश्वरेण निर्मिताः सर्वे एव जन्तवः सृष्टौ अस्यां जीवितुमर्हन्ति इति उदात्तः दृष्टिकोणः प्राचीनैः धृतः । अतः एव सर्वेषां प्राणिनां कृते भूतयज्ञः आसीत । वनस्पतिवर्गः अपि सजीवः । उदुम्बरः, पलाशादिकाः वृक्षाः पवित्राः पावकाः इति

प्राचीनानां श्रद्धा । 'माऽवीर् नः सन्त्वोषधीः ।' इति ऋग्वेदः १ (१.९०) वैद्याः ओषधीनामुपयोगं सम्यक् जानन्ति स्म इत्यपि ऋग्वेदे निर्दिष्टम्—

"यत्रोषधीः समग्मत राजानः समिताविव ।
विप्रः स उच्यते भिषग् रक्षोहामीवचातनः ॥"

(ऋग्वेद १०-९-७६)

यजुर्वेदे अथर्ववेदे च निर्दिश्यते —

"ओषधयः शान्तिः
वनस्पतयः शान्तिः इति ॥" (यजुर्वेदः ३६.१७)
(अथर्ववेदः १९.९.१४)

अथर्ववेदे मदावती, अरुन्धती, जीवला, रेवती आदीनां नैकानां वनस्पतीनां रोगनिवारकशक्तीनां निर्देशः प्राप्यते । अथर्ववेदस्य उपवेदः आयुर्वेदः भारतीयानामलौकिकः प्राचीनः निधिः । सः वनस्पति ओषधीनामुपयोगैः रोगप्रतिबंधकनिवारणशक्तिविषये आरोग्यसम्पादनविषये च ज्ञानं वितरति ।

भगवद्गीतायां विभूतिवर्णने—

"अश्वत्थः सर्ववृक्षाणां ..." (गीता १०.२६)
इति भगवान् कृष्णः वदति
महाभारते वनानां रक्षणं कर्तव्यमेव इति उपदेशः ।

पुराणानि तु अतः अपि आधुनिकतरं दृष्टिकोणं धारयन्ति । वृक्षारोपणं कर्तव्यम् उद्यानानि च दानरूपेण समष्टये दातव्यानि । स्मृतिवाङ्मये अपि आरामदानम् । पूर्तदानेषु सन्निविष्टम् । "पुष्करिणी कूपणारामादि तदेवमनलसः सश्रित्यकाम्यस्वर्गादिफलरहितं श्रद्धया कुर्यात्," इति कुल्लूकः । (मनुस्मृति ४,२२६) कौटिलीयेऽर्थशास्त्रे सीताध्यक्षप्रकरणे वनस्पतिशास्त्रसम्बन्धिनः उल्लेखाः सन्ति । वृक्षायुर्वेदनिष्णातस्य अधिकारिणः सीताध्यक्षपदे नियुक्तिः कर्तव्या । गोडस्थिशकृत् मत्स्यादीनामुपयोगः वृक्षसंवर्धने कार्यः इति तत्र निर्देशः । बृहत्संहितायां वृक्षायुर्वेदप्रकरणे वराहमिहिरेण उपवनविद्यायाः निर्देशः वर्णनं च सविस्तरं कृतम् । वृक्षाणां कलमपद्धतिः, सेवनकालः, रोगाः,

तेषां, शल्यचिकित्सा च इत्यादयः शास्त्रीयाः निर्देशाः बृहत्संहितायां प्राप्यन्ते। नगरेषु उपवनानि आसन्। अयोध्या - कपिलवस्तु - उज्जयिनी - नगर्यः उपवनसौंदर्यशालिन्यः। वसन्तोत्सवः मानवानां वृक्षप्रीतेः प्रकटीकरणप्रसंगः एव। वृक्षाः कुटुम्बिनः एव इति भारतीयानामुदात्ताऽऽसीत् धारणा। अत एव राजतरंगिण्यां निर्दिश्यते—

"सप्रसूनफला वृक्षा गृहस्था इव पतिताः।
कुटुम्बैरिव रोलम्बैरशोच्यन्त पदे पदे।:"

(राजतिरंगिणी ७,१२२४)

लौकिकसंस्कृतसाहित्येऽपि अस्यैव दृष्टिकोणस्य प्रतीतिः। शकुन्तला यदा श्वशुरगृहं गच्छति तदा लताः अपि विरहकातराः पत्रमोचनछद्मना अश्रूणि मुञ्चन्ति।

"उद्गलितदर्भकवला मृग्यः परित्यक्तनर्तनाः मयूराः।
अपसृतपाण्डुपत्रा मुञ्चन्त्यश्रूणीव लताः।"
(अभिज्ञानशाकुन्तलम् ४,११)

पयोघटेन बालैः शिशुवृक्षाणां संपोषणं संवर्धनं च क्रियते स्म।

"अतन्द्रिता सा स्वयमेव वृक्षकान्घटस्तनप्रस्रवणैर्व्यवर्धयत्।
"गृहोऽपि येषां प्रथमाप्तजन्मनां न पुत्रवात्सल्यमपाकरिष्यति।"

(कुमारसम्भवः ५.१४)

"पयोधरैराश्रमबालवृक्षान्संवर्धयन्ती स्वबलानुरूपैः।"
"असंशयं प्राक्तनयोपपत्ते स्तनंधयं प्रीतिमवाप्स्यसि त्वम्।"

(रघुवंशः १४.७८)

आश्रमपादपानां रक्षणविषये राजानः अपि उद्यमशीलाः। अत एव रघुः कौत्सं पृच्छति ...

आधारबन्धप्रमुखैः प्रयत्नैः संवर्धितानां सुतनिर्विशेषम्।
कच्चिन्न वाय्वादिरुपप्लवो वः श्रमच्छिदामाश्रमपादपानाम्।"

(रघुवंशः ५.६)

राजभिः अपि वृक्षाः आदरणीयाः इति महाभारतम्।

(सभापर्वम् ५.१०३)

भविष्यपुराणे मध्यमपर्वणि चतुर्थेऽध्याये पूर्तकर्मण निर्देशः वर्तते । २ तत्रैव वृक्षारोपणमतिगौरवेण निर्दिष्टम् । वृक्षारामदानविषये उप-दिश्यते यद् आरामार्थे या भूमिः निश्चिता सा त्रिदिनपर्यन्तं कृष्णवृषैः वाहयेत् । तदनन्तरं तत्र पञ्चव्रीहीन् वापयेत् । देवपक्षे आरामकरणे मृद्गमाषौ धान्यतिलाः, श्यामाकः, मसूरः कलायः इति सप्तव्रीहिगणं वापयेत् । बिल्ववृक्षैः ध्वजदिने धूपशने कुर्यात् । पत्रपुष्पफलवृक्षाणां निर्मितिः अस्यां सृष्टौ नवनिर्मितिः एव । सृष्टौ अस्यामेषः क्रमः यद् यद् पुरातनं वा प्राचीनं वा जीर्णं वा शीर्णं वा तत् तत् सर्वं विलयं गच्छति तत्स्थाने च नवनिर्मितिः सातत्येन भवति । तथापि नूतन-प्राचीनयोः मनोज्ञः सङ्गमः भारतीयसंस्कृतौ सदा एव क्रियते ।

"पत्रपुष्पफलानां च रजोरेणुसमागमाः ।
पोषयन्ति च पितरं प्रत्यहं प्रतिकर्मणि ॥"

(भविष्यपुराणम् मध्यमपर्वन् ४.२४)

पत्रपुष्पफलवृक्षाणां निर्मितिः अस्यां सृष्टौ नवनिर्मितिः तथा पुराणः पितराः तृप्यन्ति इत्येषः नूतनपुरातनयोः मनोज्ञः सङ्गमः । Nature is the best friend of man' इति आंग्लकवेः Wordsworth इत्यस्य श्रद्धाऽऽसीत् । आदिमयुगे तु मानवानां अन्नव-स्त्रगृहरूपिणः अत्यावश्यकाः त्रयः अपि अर्थाः वृक्षाः एव साधयन्ति । वृक्षस्य 'ओक' इति आंग्ल नामधेयं गृहस्य कृते च 'ओकस्' इति संस्कृतसंज्ञा वृक्षमानवयोः निकटतमं सम्बन्धं स्पष्टीकरोति । न केवलं मानववृक्षयोः मध्ये सम्बन्धः अपि तु प्राणिपक्षिवृक्षेषु अपि परस्परा-वलम्बित्वं निसर्गसिद्धम् । अतः मानवप्राणिपक्षिवृक्षसम्बन्धः व्यापकं रूपं धारयति ।

"अन्यस्य छायां कुर्वन्ति तिष्ठन्ति स्वयमातपे ।
फलान्यपि परार्थाय वृक्षाः सत्पुरुषाः इव ॥"

इति सुभाषितं परमार्थेन ग्रहीतव्यम् । वृक्षाः जीवानां जीवनमेव । ते अन्येषां तापं हरन्ति । पत्रपुष्पफलादिभिः प्राणिनः उपकुर्वन्ति । पर्णस्कन्धशाखादिभिः मनुजस्य गृहाणि रचयन्ति । मानवस्य लज्जार-क्षणार्थं कार्पासः तत्परः ।

'त्वमेवावरणं यस्माल्लोकानामिह सर्वदा ।
कार्पासाचल नस्तस्मादघौघध्वसंनो भव ।'
इति कार्पासाचलदानमन्त्र: (भविष्यपुराणम् उत्तरपर्वन् २००.७)

मानवानां कार्पासं प्रति कृतज्ञतां प्रकटीकरोति यत: कार्पास: एव तेषां आवरक: इति तै: सम्यक् ज्ञातम्। कर्वद्विप्राणिनं वायु दिवसे गृहीत्वा रात्रौ मुञ्चन्त: वृक्षा: मानवस्याऽऽरोग्यरक्षणशीला: एव। पुनश्च औषधीगुणै: मानवजीवनस्य ते-पुष्टिं कुर्वन्ति। स्वमूलै: मृद सुदृढं धारयन्ति भूमे: क्षरणं च स्थगयन्ति। पर्यावरणे आर्द्रताया: वारणमपि वृक्षैरेव क्रियते। अत: वृक्षारोपणमावश्यकमेव। किन्तु यदि जनसामान्यानां कृते फलं न कथ्यते तर्हि कर्मणि तेषां प्रवृत्ति: न भवति। अत: उच्यते...

'यस्तु वृक्षं प्रकुरुते छायापुष्पफलोपगम्।
पथि देवालये वापि पापात्तारयते पितृन्।
अतीतानागतांश्चात: पितृन्स स्वर्गतो द्विजा:।
तारयेद् वृक्षारोपी च तस्माद्वृक्षं प्ररोपयेत्।"

पथि अपि वृक्षा: रोपणीया: इति निर्देश: शास्त्र दृष्ट्या: सुसङ्गत: एव। कुतश्चेति चेत्, ज्ञायते एतद् अस्माभि: सर्वै:, यद् भाविका: जना: देवालयस्य पुरत: धर्मार्थं वृक्षारोपणं कुर्वन्ति। तेषां कृते ईश्वरस्यैषा सेवा। किन्तु सन्तानामपि सेवा करणीया ईदृश. दृष्टिकोण: सहजतया न धारयन्ति जना: इति ज्ञात्वा एव एष: विशेष: निर्देश: क्रियते पथि य: वृक्षं प्रकुरुते सोऽपि पापात पितृन् तारयते इति राजभि: पुरा वृक्षारोपणं क्रियते स्म। अशोकस्य, चन्द्रगुप्तस्य, खारवेलस्य च उदाहरणमत्र सर्वथा अनुकरणीयम् ते वृक्षारोपणे तत्परा: इति तेषां शिलालेखै: ज्ञायते।

पुनश्च हीका कल्पना निर्दिष्टाऽस्ति भविष्यपुराणे। अस्माभि: अनुभूयते एव यद् जगति अस्मिन् वहव: जना: निष्पुत्रका: सन्ति। विशेषत: पुत्रोत्पत्त्या पितरौ सन्तुष्यत: 'पुत्राय नरकात् त्रायते इति पुत्र:' इति श्रद्धा वर्तते जनमानसे। किन्तु अतीव मनोज्ञा 'एषा कल्पना आधुनिकश्च एष: दृष्टिकोण: पुराणेषु दृश्यते यत् पादपा: एव पुत्ररूपेण

मनुजस्याऽस्तित्वं पृथिव्यामवशिष्यते । किन्तु यदि पुत्रः न जायते तर्हि वृक्षः मनुजस्य पुत्रत्वं करोति, इत्येषा अहो मनोज्ञा आधुनिकी च संकल्पना ।

तदुक्तमस्ति भविष्यपुराणे...
"अपुत्रस्य हि पुत्रत्वं पादपा इह कुर्वते ।
यत्नेनापि च विप्रेन्द्रा अश्वत्थारोपणं कुरु।"
(भविष्यपुराणम् मध्यमपर्वन् ४.२७)

एकः वृक्षः शतपुत्रान् अथवा सहस्रपुत्रान् जयति इत्यपि पुराणे उद्घोषितम् ।

अतः पुत्रसहस्राणामेक एव विशिष्यते । कामेन रोपयेद्विप्रा एकद्वित्रि-प्रसंख्यया ।

पुनश्च धार्मिका एकः निर्बन्धः स्थापितः येन जनाः वृक्षारोपणशीलाः भवितुमर्हन्ति । तच्चानेन प्रकारेण कृतम् । जनाः जीवनेऽपराधान् कुर्वन्ति एव । न कोऽपि जनः प्रमादरहितः । शुद्ध्यर्थं प्रायश्चित्तं ग्रहीतव्यमेव । प्रायश्चित्तार्थं वृक्षारोपणमुपदिष्टमस्ति शातातपस्मृतौ । यः प्रतिमाभञ्जनं करोति तेन त्रिवर्षं यावत् पिप्पलवृक्षसेचनं कर्तव्यम् । स्त्रीहन्ता दशपिप्पलवृक्षारोपणं करोतु । (शातातपस्मृतिः १८-२-२७)

पिण्डदानमपि वृक्षे कर्तव्यम् । वृक्षहत्या नाम गोहत्या एव । वृक्षदाने भिन्नं भिन्नं फलम् भविष्यपुराणे प्रोक्तम् । यः अश्वत्थवृक्षमारोपयति सः धनाढ्यः भवति यः अशोकवृक्षमारोपयति-स शोकरहितः भवति प्लक्षवृक्षः भार्याप्रदः ब्रह्मदश्चैव बिल्वः आयुष्यदः स्मृतः । धनदः ।

(भविष्यपुराणम् मध्यपर्वन् ४.१९.३०)

"धनी चाश्वत्थवृक्षे च अशोकः शोकनाशनः ।
प्लक्षो भार्याप्रदश्चैव बिल्व आयुष्यद स्मृतः
धनप्रदो जम्बुवृक्षो ब्रह्मदः प्लक्षवृक्षकः "

तिंदुकात्कुलवृद्धिः स्याद् दाडिमी कामिनीप्रदः । बकुलः वञ्जुलश्चैव पापहा बलबुद्धिदः । धातकी स्वर्गप्रदा स्मृता । बटः मोक्षप्रदायकः । सहकारः कामप्रदः गुवाकः सिद्धिमादिशति । बलबलः मधुकः अर्जुनश्च सर्वशस्य

यच्छति । कदम्बारोपणेन विपुला कीर्तिः प्राप्यते जीवन्त्या रोगशान्तिः भवति । केशरा शत्रुमर्दनः । वटः श्वेतवटश्च धनप्रदा । शिशवा अर्जुनः जयन्ती, हामारकः, श्रीवृक्षः किंशुकश्चैव स्वर्गप्रदः । (भविष्यपुराणम् मध्यमपर्वन् (४.३१.१६) आमाक्षोडप्रदानेन सर्वान् कामानवाप्नुयात् । इति विष्णुधर्मोत्तर-पुराणम् । (३.२९७.११ क) पालीवतास्त्री दत्वा उत्तमां तृप्तिमाप्नोति मनुजः । (विष्णुधर्मोत्तरपुराणम् ३.२९७.११ दत्वा पालीवतास्त्रो तु तृप्तिमाप्नोत्यनुत्तमाम् । नारङ्गदानाद् भवति नरो रूपसमन्वितः । )

(विष्णुधर्मोत्तर पुराणम् ३.२९७ ११)

बीजपूरकदानेन सौभाग्यं महदाप्नुयात् ।

विष्णुधर्मोत्तरपुराणम् ३.२९७.११)

चम्पकं मल्लिकाजातीं श्रेष्ठाः पुष्पकराः मताः । अतः एतान् दत्वा अन्येभ्यः अधिकमाप्नोति फलम् । (विष्णुधर्मोत्तरपुराणम् ३.२९७.७)

गुल्मः, लतावास् च यः प्रयच्छति स नन्दने वसति । (दानसागरः पृष्ठम् ५१४) यः धर्ममुद्दिश्य फलवृक्षं यच्छति सः सर्वकामतृप्तात्मा सन् वरुणमन्दिरं गच्छति कामकलान्वितश्च स तत्र युगं वसति इति नन्दिपुराणम् । पुष्पदं फलदं वृक्षं विप्राय भक्तितः दत्वा मनुजः स्वर्गे वसति । यदा तस्य पुण्यक्षयः भवति तदा पृथिवीमागतः स नगराधिपतिर्भवति । (दानसागर ५१२) यजमानेन, पुष्पप्रदः अथवा फलप्रदः वृक्षः दातव्यः इति निर्दिष्टमस्ति महाभारते "पुष्पोपगं वाऽथ फलोपगं वा, य पादप स्पर्शयते द्विजाम् ।

स स्त्रीसमृद्धं बहुरत्नपूर्णं लभत्यनत्नोपगतं गृहं वै ।

(महाभारतम् अनुशासनपर्वन् ५७.३६)

दानस्य मन्त्रा ईदृशः ।

ओम् अमुकगोत्रायामुकवेदामुकशाखाध्यायिनेऽमुकदेवशर्मणे तुभ्यं महाभारतोक्तं पुष्पपत्रपादपदानफलप्राप्तिकामोऽहमेत पादपं ददामि । प्रतिग्रहीता स्वस्तीत्युक्त्वा सावित्रीं पठित्वा पादपोऽयं वनस्पतिदैवतः कृत्वैतद्दानप्रतिष्ठार्थं तुभ्यमहं दक्षिणादानमिदं काञ्चनं ददामि । प्रतिग्रहीता स्वस्तीत्युक्त्वा वृक्षमूलदेशे स्पृशेत ।

निरोगिता उत्कृष्टरूपप्राप्तिः इति वृक्षदानस्य फलं विशेषतया उक्तम् ।

"स्रग्वधूपगन्धान्यनुलेपनानि स्नानानि माल्यानि च मानवो यः ।
दद्यात्द्विजेभ्यः स भवेदरोगस्तथाभिरूपश्च नरेन्द्रलोके ।

(महाभारतम् अनुशासनपर्वन् ५७.३६)

नारङ्गदानाद्भवति नरो रूपसमन्वितः ।
(विष्णुधर्मोत्तरपुराणम् ३.२९७ ६)

स्वर्गे वासः पुण्यपरिक्षयात् पृथिव्यां जन्म पुनश्च आधिपत्यमिति अपि वृक्षदानस्य फलद्वयम् । गुल्मं पुष्पपदं यस्तु लतावासं प्रयच्छति । विमाने नन्दने सोऽथ क्रीडत्यप्सरसां गणैः ।

(दानसागरः पृष्ठम् ५१३)

फलवृक्षन्तु यो दद्याद् धर्ममुद्दिश्य मानवः स सर्वकामतृप्तात्मा गच्छेद्वरुणमन्दिरम् । वसेच्च तत्र पुरुषो युगं कामफलान्वितः । (नन्दि-पुराणम् दानसागरः पृष्ठम् ५१२)

पुष्पदं फलदं वृक्षं दत्वा विप्राय भक्तितः । स्वर्गलोकपरिभ्रष्टो नगराधिपतिर्भवेत् ।

(विष्णुधर्मोत्तरपुराणम् दानसागरः पृष्ठम् ५१३)

अग्निपुराणे पुष्पवर्गकथनम् नाम स्वतन्त्रः एव अध्यायः दीयते । विविधपुष्पाणां देवेभ्यः समर्पणं तेन समर्पणेन च प्राप्तव्यं फलं तत्र प्रोक्तम् । पुष्पैः हरिस्तुष्यते इति तत्र निर्देशः । मालतीपुष्पं श्रेष्ठम् । तमालः भुक्तिमुक्तिमान् । मल्लिका सर्वपापनाशं करोति । यूथिका, पाटला, करवीरः च विष्णुलोकप्रदः तथैव कर्णिकारः, पावन्तीं, कुब्जका, तगराश्च विष्णुलोकं प्रापयन्ति नरम् । जपापुष्पसमर्पणेन पुण्यम् प्राप्यते । कुरुजका, तगराश्च विष्णुलोके प्रापयन्ति नरम् । कुरुण्ठैः, केतकीभिः, तथा च कुन्दपुष्पैः परां गतिः प्राप्यते । वाणपुष्पैः वर्वराभिः च हरिलोकभाक् भवति नरः । अशोकैः तिलकैः च मुक्तिं प्रयाति विल्वपत्रैः परागतिः प्राप्यते । भृङ्गराजैः तमालस्य दलैः कृष्णगौराख्यया तुलस्या कल्हारैः

उत्पलैश्च विष्णुः तुष्टः भवति । नीपार्जुनकदम्बवकुलैश्च विष्णोः प्रसादः भवति । किंशुकैः, मुनिपुष्पैः, गोकर्णैः, सन्ध्यापुष्पैः केतकीभिः, कूष्माण्डैः, तथैव काश इत्यादिभिः पुष्पैः मनुजः भोगान् प्राप्नोति तस्य सर्वाणि पापानि विलयं गच्छन्ति च स मुक्तिमाप्नोति शिवाय केतकीं न दद्यात् । शिवः अर्कमन्दारधत्तूरकुसुमैः अर्चनीयः । गन्धरहित-पुष्पाणां पैशाच इति संज्ञा । (अग्निपुराणम् ७९.१.१५) चन्दनपनस वृक्षयोः पुण्यं लक्ष्मी च इति फलद्वयमुपदिष्टम् । चम्पकः सौभाग्यदः । वकुलेन कुलवृद्धिः । (अग्निपुराणम् २०२.२०७)

अग्निपुराणे ११०. ११७, १२० तमेषु च अध्यायेषु औषधानां तथैव ११९ तमे अध्याये वृक्षायुर्वेदस्य विवेचनं वर्तते तत्र उक्तम् —

पर्पटकोशीरचन्दनोदीच्यनागराणां ज्वरार्तस्य कृते उपयोगः। तथैव नीवारयवमुद्गमसूरचणककुलत्थानां पटोलनिम्बदाडिमानां, सक्तु गोधूमशालीनां विडङ्गमरिचमुस्त - कुष्ठलोध्रसुवर्चिकादीनां च रोगानुसारं उपायः कथं कर्तव्यः इति विवेचनं सविस्तरं कृतम् (अग्निपुराणम् ११६.१.६३) एषामोषधीनां न केवलं भक्षणमपि तु लेपादिकाः उपायाः अपि कथ्यन्ते ।

अस्यैव पुराणस्य १२० तमे अध्याये वचा, शङ्खपुष्पी, देवदारु, पयोमुक् जातिफल नारिकेल इत्यादीनां वनस्पतीनां रोगनिवारकशक्तिः प्रोक्ता । दूर्वारसस्योपयोगः नासिकारोगाणां कृते कर्तव्यः इति निर्दि-श्यते । (अग्निपुराणम् १२०) अग्निपुराणम् १२०.७ ख नासारक्तहरो नस्याद्दूर्वारस इहोत्तमः ।

भल्लातको - त्रिफला - पिप्पली - भिगुण्डी - एरण्ड - पद्मउ-त्पल - कार्पास - पाटलि इति वनस्पतयः सहजतयोपलभ्यन्ते तैः केषां केषां रोगाणां प्रतिकारः क्रियते तदत्र निर्दिष्टम् अग्निपुराणस्य ११९ तमे अध्याये वृक्षायुर्वेदः वर्ण्यते । प्लक्षः वृक्ष उत्तरस्यां दिशि आरोपणीयः । प्राच्यां वटः, दक्षिणदिशि आम्रः, पश्चिमायां च दिशि अश्वत्थः आरोपणीयः इति वृक्षरोपणस्य निर्बन्धाः अत्रोपदिश्यन्ते । (अग्निपुराणम् ११९.१)

दक्षिणस्यां दिशि कण्टकद्रुमाः आरोपणीयाः । तिलवृक्षाः पुष्पिताः वृक्षाश्च मानवसान्निध्ये सन्तु । (अग्निपुराणम् ११९.२)

आरोपणात् प्राक् चन्द्रस्य तथैव ब्राह्मणानां पूजा करणीया। वायव्यं हस्तं च नक्षत्रं वृक्षारोपणे शस्यते। अरिष्टाशोकपुंनागशिरीषाः प्रियंगवः, अशोकः, कदली, जम्बु, वकुलदाडिमा सायं प्रातः सेवितव्याः। वृक्षारोपणसमये वृक्षाणां मध्ये विंशतिः हस्तानां अथवा षोडशहस्तानामन्तरमावश्यकम्। (अग्निपुराणम् ११९.८)

फलनाशे कुलत्थमाषगुड्गयाम्रतिलैः धृतशीतजलाभ्यां सार्धं सेचयेत्। आविकाजशकृत् तिलानि, गोमांसं च वृक्ष पोषयन्ति। मत्स्यजलेन शाखिनः वृद्धिः भवति। विशेषतः विडंगतण्डुलोपेतं मात्स्यं मांसं वृक्षाणाम् पुष्टिकरम्। वृक्षारोपणेन रोगमर्दनम् भवति इति तात्पर्यम् कथितम्।

(अग्निपुराणम ११९.१०.१४)

वृक्षारोपणादनन्तरं तेषां पोषणेऽपि जागरितव्यम् अतः एव जलसिञ्चनं कदा कर्तव्यं कतिवारं कर्तव्यं इति उल्लेखाः प्राप्यन्ते। तथैव पोषकद्रव्याणामुपयोगः अपि वर्ण्यते। उद्यानस्य संरक्षणाय प्रकाराः आसन्। ह्यु - एन - त्सांग इत्यनेन भारतदेशस्य विविधेषु प्रदेशेषु वर्तमानानां वृक्षाणां वर्णनं कृतम् : प्रत्येकग्रामस्य सीमाभागे आरोपिताः वटकिंशुकशाल्मलिसालतमालाश्च सीमाभागं दर्शयन्ति स्म।

अधुना स्वार्थपराः जनाः वृक्षान् कृन्तन्ति। किन्तु वृक्षाणां हानिकरः पुरुषः दण्ड्यः इति मनुः।

वनस्पतीनां सर्वेषामुपभोगे यथा यथा।
तथा तथा दमः कार्यो हिंसायामिति धारणा।

(मनुस्मृतिः ८.२८५)

वृक्षाणां हानिकरः प्रायश्चित्तमर्हति इति महाभारतम्। तदुक्तमस्ति महाभारते —

तिर्यग्योनिबधं कृत्वा द्रुमांश्छित्वेतरान्बहून्।
त्रिरात्रं वायुभक्षः स्यात्कर्म च प्रथयन्नरः।

(महाभारतम् शान्तिपर्वन् ३५.३३४)

अतः संक्षेपेण इदमेव वक्तुमुचितं यद् प्राचीनभारतीयानां निसर्गस्य संतुलने अपारा श्रद्धाऽऽसीत यामाश्रित्य तैः सुष्टु व्यवहृतम्।

★



# राज्यस्तरीयः संस्कृतदिवससमारोहः रेणुकायां सुसम्पन्नः

ओमप्रकाश 'राही'
रा० व० मा० वि० राजगढ़



श्रावणी पूर्णिमायाः पवित्रपर्वणि अगस्त मासस्य द्वितीये दिवसे सिरमौर जनपदस्य पवित्रायां रमणीयायाञ्च रेणुकाख्यायाम् साधनास्थल्याम् हिमाचलभाषाविभागेन समायोजितः राज्यस्तरीयः संस्कृत दिवस समारोहः सोल्लासं सुसम्पन्नः। समारोहस्य अध्यक्षपदमलंकुर्वाणः आयुक्त एवं सचिवः भाषासंस्कृतिः श्री कृष्णचन्द्र शर्मा महाभागः दीपं प्रज्वाल्य कार्यक्रमस्य उद्घाटनं व्यदधात्। अवसरेऽस्मिन् भाषा एवं संस्कृति विभागस्य निदेशकः श्री ललित महाभागः मुख्यातिथेः उपस्थितानाञ्च विदुषां स्वागतमकरोत्। स्वीये होरार्धकालीने संस्कृतभाषायां प्रदत्ते विद्वत्तापूर्णे उद्घाटन भाषणे श्री शर्मा महोदयः संस्कृतभाषायाः तथा चैतस्याः साहित्यस्य संरक्षणस्य आवश्यकतां प्रत्यपादयत्। सोऽकथयत् यत् राष्ट्रीयगरिमायाः रक्षणाय संस्कृतसाहित्यस्यानुसन्धानस्य संवर्धनस्य च महती आवश्यकता अस्ति। सर्वैः रक्षणीयेयं गीर्वाणवाणी। यतोहि संस्कृतम् रक्षति रक्षितान्। संस्कृतसागरे बहूनि बहुमूल्यानि रत्नानि सन्ति येषामन्वेषणाय संस्कृतस्य रक्षा अनिवार्या अस्ति। तेनोक्तं यत् संस्कृतविदुषाम् व्याख्यानमाला नयनादेवी स्थले अस्मिन्नेव मासे प्रारंभते। अधिकारी विदुषाम् एवं विधानि व्याख्यानानि सामाजिक-चेतनायाः उद्बोधनाय यथावसरं विविधेषु सांस्कृतिक स्थलेषु भविष्यन्ति।

उदघाटनानन्तरं दर्शनशास्त्रस्य प्रसिद्धः विद्वान् आचार्यः शालिग्राम शर्मा 'वेदान्तस्य प्रासङ्गिकता' विषये स्व शोधपत्रं प्रस्तुतवान्।

वेदान्तदर्शनस्य विस्तृतविवेचनानन्तरं आधुनिकसन्दर्भे वेदान्तस्य प्रासङ्गिता विषयपत्रेऽस्मिन् संदर्शिता। प्रो० बलवन्त कुमार डा० नीलमणि उपाध्याय— प्रो० तुलसीरमण— आचार्य कुमार सिंह-उजागरसिंह तोमर आचार्य शुकदेव आचार्य रामानन्द परमानन्द शास्त्री प्रभृतयोऽनेके विद्वांसः विषयपत्रचर्चायां विस्तरेण वेदान्तस्य प्रासङ्गिकतामुपयोगिताञ्च प्रत्यपादयन्। विदुषां परिचर्चानन्तरं शंका समाधानं कुर्वन् आचार्यः शालिग्राम शर्मा अकथयत् यत् वेदान्तस्य उपयोगिता न केवलं मुमुक्षुभ्यः एवापितु पापाचारसम्बद्धेभ्यः मानवेभ्योऽपि तावत्येव विद्यते। अतः मानवैः वेदान्तस्य उपयोगः स्वजीवने एव करणीयः।

लेखक गोष्ठ्यनन्तरं सन्ध्यायां कविसम्मेलनं सञ्जातम् कविसम्मेलने डा० नागदत्त डिम्मरी-मदनमोहन शर्मा-ओमप्रकाश राही प्रेमलाल गौतम - हरिवल्लभ शर्मा-नरोत्तमदत्त शर्मा तथा आचार्य शुकदेवश्चैते अष्टौ कवयः सस्वरं स्व कवितापाठं व्यदधुः।

स्वीये-अध्यक्षीये भाषणे श्री कृष्णचन्द्र शर्मा अकथयत् यत् वेदान्तः ज्ञानस्य पराकाष्ठा अस्ति। वेदान्तः मानवे मानवेतरजंगति च सामञ्जस्यं विदधाति। जीवनं सर्वाङ्गीणादर्शमपेक्षते श्रीकृष्णस्य सुदर्शनं (चक्र) असत्योपरि सत्यविजयस्य सु दर्शनमासीत्। संस्कृतस्य मंजूषायां प्रच्छन्ना संस्कृतिः सर्वैः रक्षणीया।

विभागस्य निदेशकः श्री ललित महाभागः उपस्थितविदुषां जनानाञ्च धन्यवादं अकरोत् एवं सम्मेलनस्य सफलसमापनं सञ्जातम्।



# डा० परमारः भृशं स्मृतः"

हिमाचल प्रदेश कला-संस्कृति एवं भाषा अकादम्याः सौजन्येन हिमाचल प्रदेशस्य प्रथममुख्यमन्त्रिणः डा० यशवन्त सिंह परमारस्य राज्यस्तरीय - जयन्तीसमारोहः सिरमौरजनपदान्तर्गत — राजगढ़ क्षेत्रस्य ऐतिहासिक-प्राकृतिक सामाजिकमहत्तासम्पन्ने फागू स्थले अगस्तमासस्य चतुर्थे दिवसे सोल्लासं समायोजितः। अवसरे

अस्मिन् समायोजिते प्रथमे सत्रे लेखक गोष्ठ्याः अध्यक्षतां कुर्वन् श्री कृष्ण चन्द्र शर्मा आयुक्त एवं सचिवः (भाषा संस्कृतिः) दीप प्रज्वाल्य डा० परमारस्य चित्रस्य अनावरणं माल्यार्पणं च विधाय कार्यक्रमस्य उद्घाटनं व्यदधात् । अकादम्या परमारस्य एकं चित्रं स्थानीय उच्च विद्यालयाय उपहारस्वरूपमपि प्रदत्तम् ।

लेखक गोष्ठ्यां प्रो० चन्द्रवर्करः अधिकतमान् विद्यार्थिनः विलोक्य स्व लिखितं विषयपत्रं न पठित्वा विद्यार्थिनां यूनां तथा च जन-साधारणानां रुच्यनुरूपं डा० परमारसम्बन्धितानि कानिचित् रुचि-कराणि संस्मरणानि प्रस्तुतवान् । गोष्ठी चर्चायां डा. विद्याचन्द ठाकुर-विद्यानन्द सरैक - भगवान् देव चैतन्य - डा० खुशीराम गौतम - चन्द्र-मणि वसिष्ठ प्रभृतयो विद्वांसः डा० परमारस्य जीवनचरित-सम्बन्धितानि प्रेरकाणि संस्मरणानि प्रस्तुतवन्तः । डा० परमारस्य हिमाचलसेवानामुल्लेखं विदधन् श्री शर्मा स्वीयेऽध्यक्षीये भाषणे दिवंगतात्मने श्रद्धाञ्जलिं प्रायच्छत् ।

सायंतनीये द्वितीयसत्रे सञ्जाते कवि सम्मेलने प्रदेशस्य विवि-धेभ्यः जनपदेभ्यः समागताः विंशतिः कवयः कवितापाठमकुर्वन् । प्रो० नरेन्द्र अरुण · मनोहर सागर पालमपुरी - विद्यानन्द सरैक - रत्नचन्द निर्झर-हेतराम पहाड़िया - किरणादि कवीनां कविताः डा० परमारस्य जीवनचरितानुबद्धाः आसन् । श्रीमती कमला सत्यप्रिया स्व सुमधुर गेय शैल्यां प्रस्तुतया 'नारी-महिमा' रचनया श्रोतॄणां मनांसि आनन्द-यत् । श्रीमती आशा शैली - ऋषिराम भारद्वाज ऋषि - ध्यानसिंह भागटा - मरवीर लाम्बा ओंकार सिंह काहनसिंह जमाल - श्रीमती सुदर्शना डोगरा प्रभृतिभिः प्रतिपादिताः कविताः सामयिक विषयानु-रूपाः आसन् । एभिः सहैव श्री शेरजंग चौहानयोगेश ममगाई प्रभृतीनां कविताः अपि श्रोतृभिः भृशमभिनन्दिताः ।

कविसम्मेलनस्य अध्यक्षपदमलङ्कुर्वाणः श्री चन्द्रमणि वसिष्ठः स्वीयेऽध्यक्षीयभाषणे ग्राम्यसंस्कृति उपासकस्य डा० परमारस्य जयन्तीसमारोहं ग्रामस्तरे समायोजितुं अकादम्यै वर्धापनानि प्रायच्छन् । तेनोक्तं यत् डा० परमार, हिमाचली वेश भूषा खान-पान स्वभाषा प्रयोगादीनां प्रबल-समर्थकः आसीत् किन्तु आधुनिक-

तायामासक्ताः वयमेतत्सर्वं विस्मरामः । इदमेव विषयमधिकृत्य तेन स्वीया सुमधुर रचना प्रस्तुता या दर्शकैः श्रोतृभिश्च भृशं संस्तुता । सोऽकल्पयत् यदा हि डा० परमारः पुनः जन्म लभेत तर्हि सः सर्वप्रथममिदमेव प्रक्ष्यति— "रे छोटुग्रो लोइया किदा पाया ?"

समापन समारोहे अकादमी सचिवः श्री सुदर्शन वसिष्ठः प्रदेशस्य विभिन्नस्थलेभ्यः समागतानाम् विदुषां कवीनां तथा च समुपस्थितानां जनानां धन्यवादमकरोत् इत्थं ग्रामस्तरे समायोगितः एषः समारोहः फागूवासिनां निकटवर्तिनाञ्च जनानां मनस्सु मधुरां स्मृतिमस्थापयत् ।

— रा० व० मा० वि० राजगढ़
१७३१०१ सिरमौरः (हि. प्र.)



# स्वतन्त्रतादिवसपूर्वसन्ध्यायां संस्कृत – कविसम्मेलनम्

दिल्ली ! अत्रत्य संस्कृत अकादम्याः स्थानीय संस्कृतकविसम्मेलन मत्रायोजि । अस्मिन्– कवि सम्मेलने डा० रामकिशन शर्मा, डा० वासुदेवकृष्ण चतुर्वेदी, डा० रमाकान्त शुक्लः, श्रीमती प्रवेश सक्सेना श्री वीरेन्द्र झा, डा० रामेश्वरदत्तशास्त्री, डा० प्रियव्रत शास्त्री, डा० सुधिकान्त भारद्वाज, डा० राजेशकुमार भारद्वाज, डा० रामकिशोर मिश्र, श्री दयालसिंह पंवार, (नेत्रहीनः) श्री शशिपाल शर्मा-आदि-अनेकैः संस्कृत कविभिः देशभक्तिः, स्वतन्त्रता, पर्यावरणम्, भ्रातृभावः, सरस्वती-आदिषु विभिन्नविषय सम्वलिताः कविताः श्राविताः श्रोतृभिः करतालिकादानपुरस्सरं आनन्दानुभूतिः कृता । अस्योद्घाटनं श्री विद्यानिवासमिश्रेण नवभारतटाइम्सपत्रसम्पादकेन दीपं प्रज्वाल्य वैदिकमन्त्रोच्चारेण कृतम् । राष्ट्रीयसंग्रहालयनिदेशकः डा. आर. सी. शर्मा अस्याध्यक्षतामकरोत् । श्री कृष्णसेमवालः कविसम्मेलनसञ्चालनमकरोत् ।

—–

# महाविद्यालये संस्कृतदिवससमारोहः

प्रेषकः काशी प्रसाद मिश्रः
परिषदोऽध्यक्षः



चुनार ! स्थानीयश्रीमतीभागीरथीट्रस्टादर्शसंस्कृतमहाविद्यालये समायोजितसंस्कृतदिवससमारोहोऽवरमहापुलिस — निदेशकानां श्रीमतां चमन लाल प्रद्योत महोदयानां मुख्यातिथित्वे तथा परगनाधिकारिणां श्री संकटाप्रसादतिवारिमहाभागानामाध्यक्ष्ये च २-८-९३ दिनाङ्केऽपराह्ने चतुर्वादने समपद्यत । महाविद्यालयस्यास्य प्राचार्यवर्यैः श्रीगणेशप्रसादमिश्रमहोदयैः कृतज्ञतापूर्वकं माल्यार्पणं कुर्वद्भिः कार्यक्रमः सञ्चालितः । तदनु छात्राः सुभाषितपद्यैः समागतातिथीनां स्वागतमकार्षुः । स्वीयेऽभिभाषणे मुख्यातिथिमहोदयैर्भणितम् यत संस्कृतभाषा विश्वभाषाऽस्ति, इयं निखिलभाषाणां जननी । जीवने शाश्वत सुखावाप्तये संस्कृतभाषाया अध्ययनमवश्यं कर्तव्यम् । एतदध्ययनजन्यज्ञानेनैव जनानामैहिकामुष्मिकोऽभ्युदयः संभावितोऽस्ति । स्वकीयेऽध्यक्षीयप्रवचने परगनाधिकारिमहोदयैः संक्षेपेण संस्कृतभाषायाः प्रचारस्यावश्यकतां प्रति सारगर्भितं व्याख्यानं दत्तम् । तैरुक्तं यद् व्यक्तेः जीवनस्य निखिलं कृत्यं शास्त्रीयरीत्या सम्पद्यते, शास्त्राणि तु संस्कृतभाषानिबद्धानि, अतः तद्रहस्यमवगन्तु जीवनं च सुसंस्कृतं कर्तुं संस्कृताध्ययनं परमावश्यकम् । एतदवसरे समुपस्थितेष्वनेकेषु विद्वत्सु प्रमुखरूपेण सर्वं श्री डा० रामप्यारे मिश्रः श्री चन्द्रशेखर शर्मा, श्री चन्द्रधर चतुर्वेदी, डा० ब्रह्मानन्द शुक्लः, श्री वी. पी. तिवारी, श्री नन्द किशोर त्रिपाठ्यादि वक्तारः स्वोपज्ञतापूर्णसंस्कृताध्ययने तत्प्रचार प्रसार विषये स्वीयान् विचारान् प्रकटितवन्तः ।

उपर्युक्तकार्यक्रमानन्तरं "तुलसी जयन्त्याः" समापनावसरे श्री प्राचार्यमहोदयैः श्रीरामचरितमानसमाधारीकृत्य मानसस्य गूढ रहस्या उद्घाटिताः ।

अन्ते महाविद्यालयस्य प्राचार्याः श्री गणेश प्रसाद मिश्राः आगतप्रतिनिधीन् प्रति कृतज्ञतां ज्ञापितवन्तः, तदनन्तरं गोष्ठी विसर्जिता ।

— भा. ट्र. सं. म. विद्यालय मिर्जापुर (उ. प्र.)

# डा० गोस्वामी गिरिधारी लाल जयन्ती

दिल्ली । संस्कृत अकादम्याः १९-८-९३ दिवसे उल्लिखितजयन्ती-समारोहः आयोजितः ।

गोस्वामी गिरिधारी लालः इतिहास-पुरुष आसीदिति सांसद् सज्जनकुमारः अवादीत् । आयुर्वेदज्योतिषयोर्मिथः सम्बन्धः "इति विषयोऽत्र विशेषेण, व्याख्येय आसीत् ।" धर्म जाति भेदंविस्मृत्य श्री शास्त्री, मानवमात्र कल्याणाय सामाजिकराजनैतिकसाहित्यिक-धार्मिकादिविभिन्नक्षेत्रेषु महत्वपूर्णकार्यमकरोत् । असौ, पथप्रदर्शकः दिग्दर्शकश्चासीत् - इति पूर्वकार्यकारि— दिल्लीपार्षदः श्री कुलानन्द भीरतीयोऽवदत् । तत्प्रदर्शित मार्गानुसरणमेव तत्कृते श्रेष्ठा श्रद्धाञ्ज-लिरित्यपि सोऽवादीत् । डा० गिरिधारीलाल गोस्वामी संस्कृत–सस्कृति सनातनधर्मादीनां प्रतीक-पुरुष-आसीदिति डा० श्री मण्डनमिश्रोऽभाणीत्, डा० मिश्रः श्री लालबहादुरशास्त्री संस्कृतविद्यापीठस्य कुलपति-रस्ति । विद्यापीठज्योतिषविभागस्याध्यक्षः श्री शुकदेव चतुर्वेदः-आयुर्वेदज्योतिषशास्त्रयोः परस्परसम्बन्धविषये स्वकीयं सारग-र्भितभाषणमकरोत् । तिथिनक्षत्रग्रहाधारे प्रयुक्तमौषधंचमत्कार-पूर्ण प्रभावं करोति : इत्यपि तेन भणितम् । प्राचीनसचिवालयस्य सभागारे समायोजिते समारोहेऽस्मिन् डा० सत्यव्रतः शास्त्री प्रो० मदनलाल शर्मा, श्री रमाकान्त गोस्वामी तथाऽन्येऽनेके विद्वांसः स्व स्व बिचारान् प्रकटयामासुः ।

श्री कृष्ण सेमवालः अकादमी सचिवः अवादीत् - श्री गोस्वामी ज्योतिषस्य संस्कृतस्य च प्रकाण्डपण्डितः आसीत् । स उभयोः प्रचा-राय आजीवनं कार्यमकरोत् ।

——

## संस्कृतसाहित्ये-आतङ्कवादस्य निराकरणोपायाः

दिल्लीस्थ महानगरपरिषत्सभागारे पुराणसचिवालये उल्लिखितविषयोपरि विचारकरणाय सभैका समायोजिता दिल्लीसंस्कृत-अकादम्याः ४-९-९३ दिवसे। दिल्ली प्रशासनस्य पूर्वमुख्यकार्यकारि पार्षदः श्री विजयकुमार मल्होत्रा मुख्यातिथिरासीत्। विशिष्टातिथिरासीत् श्रीमान् रामलालवर्मं महोदयः दिल्याः पूर्वकार्यकारि-पार्षदः। दिल्लीविश्वविद्यालयस्य संस्कृतविभागप्रवाचकः डा० सत्यपाल नारङ्गः मुख्यवक्ता आसीत्। भारतसंस्कृतपरिषत्महामन्त्रिणा आचार्यरामनाथसुमनेन अध्यक्षता कृता। समारोहोऽयं पूर्वसांसद श्रीरामचन्द्रविकलमहोदयस्य सान्निध्ये जातः।



## संस्कृतशोधसंस्थाने संस्कृतदिवससमारोहः

मशोबरा। अगस्त्यमासे ऋषितर्पणिदिवसे संस्थाने संस्कृत दिवससमारोहः आचार्य श्री दिवाकरदत्त शर्मणां अध्यक्षतायां सम्पन्नः। अत्र इटली, ब्रिटेन, अमेरिकातः संस्थाने ऽनुसंधानाय समागतशोधकर्तृभिः तथा महाराष्ट्र-केरलीयअनुसन्धानकर्मणि लग्नै विद्वद्भिरपि भागो गृहीतः ऋषिपरम्परा प्रसूतज्ञानस्य च भूरिशः प्रशंसा कृता।

छात्राणां भाषण-संगीत-श्लोक प्रतियोगितायाः अनन्तरं प्रस्तावोऽयं पारित्तोऽभूत् सर्वसम्मत्या :— "प्रदेशप्रशासनं संस्कृतम्प्रति उदासीनतां प्रकटयति दिनप्रतिदिनम्।" एषा प्रवृत्तिः देशघातिका वतते। व, मा. विद्यालयेष्वपि कालेजेष्वपि च संस्कृतस्यानिवार्य-अध्ययनं कृतं स्यात्। व, मा. विद्यालयेषु संस्कृतप्राध्यापकानां नियुक्तिः कृता स्यात्। संस्कृतमहाविद्यालयानां दशायाँ सुधारः क्रियेत्।" प्रस्तावोऽयं राज्यपालाय प्रहितः आवश्यक कार्यकरणाय।

———

# संस्कृतमहाविद्यालयप्राध्यापकानां प्रकरणविजयः

हिमाचल प्रदेश संस्कृत महाविद्यालयप्राध्यापकैः कतिपयवर्षपूर्वं प्रकरणमेकं न्यायाधिकरणे संस्थापितमासीत् । समानकार्यं समानवेतनमाननीतिमाधारी कृत्य-एतेषां कथनमासीत् यत् राजकीय महाविद्यालय प्राध्यापकानां समानमेवैतेषामपि वेतनं भवेत् समानकार्यकरणकारणात् प्रदेश — न्यायाधिकरणेन तेषामभियोगः स्वीकृतः, एव न अपितु तत्र ते विजयिनोऽपि समुद्घोषिताः । हर्षप्रद समाचारोऽयं संस्कृतमहाविद्यालय प्राध्यापकानां कृते ।

एवमपि श्रूयते यत् प्रशासनं सर्वोच्चन्यायालये गच्छेत् । तत्कृतेऽपि एका व्यवस्था बर्तते यदि संस्कृत महाविद्यालयप्राध्यापकाः तस्या व्यवस्थायाः विषये प्राड्विवाकैः सह विचारं कृत्वा तदनुसरण कुर्युस्तु प्रशासनं सम्भवतः सर्वोच्चन्यायालयशरणमधिगन्तुमर्हं न स्यात् । सर्वोच्चन्यायालयेन तु पूर्वमपि - एतदेव समुद्घोषितमस्ति यदेते संस्कृत महाविद्यालयाः – अन्यमहाविद्यालयसमाना एव वेतनादि विषये सन्ति । परन्तु तत्र गते प्रकरणे समयो लगति । पञ्चवर्षाणि वा दशवर्षाणि वा इति को जानाति । तस्मात् संस्कृतमहाविद्यालय प्राध्यापकैः पारस्परिकभेदभावं परित्यज्य स्व कर्तव्यानुसरणमालस्यं विहाय विधेयमिति दिव्यज्योतिषः सम्मतिः । सहैव एतदर्थमपि प्रयासः प्राध्यापकैः कार्या यन्महाविद्यालयेषु संस्कृतस्तरः पतमान एव दिनानुदिनं न स्यात् ।

# म्पादकीयम्

## किमु वेदाः पुराणानि वा मेषपालकगीतानि ?

केचनाज्ञाः आधुनिकाः — 'वयं विद्वांसः, वैज्ञानिकाः, सुधारकाः, राष्ट्रनेतारो" वा तस्मात् ते मूढमतिं प्राप्य समस्तविश्वकल्याणज्ञानराशिं मेषपालकानामज्ञानाम्बा प्रलपितमिति भणन्ति । अहो खलु देशस्यास्य ज्ञानदारिद्र्यम् । अद्य समस्तसंसारः प्रदूषणभीतः वर्तते । कथं खलु प्रदूषणात् संसारस्य रक्षा स्यादिति कृते चिन्तामग्नाः सर्वेऽपि लोकाः । यत्र तत्र अनावृष्टिः अतिवृष्टि—भूकम्पमहामारीप्रसार - जलौघध्वंस— दूषित-जल-वायु-भूमि विषमिश्रणप्रताड़ितोऽयं लोकः नरकायमानः दिनानुदिनं ... प्रहृत्य - शीत-प्राण ... ताड्यमानोऽद्यतन जनः ...रितः निराशस्तिष्ठति । अस्यां घोर—गम्भीरसंकटदशायां निराशायाञ्च कोऽस्ति रक्षयिता । प्रतिदिनं विषयमिमं—आधारी कृत्य सर्वेषु देशेषु तद्विशेषज्ञानां सम्मेलनानि गोष्ठयश्च भवन्ति । ततोऽपि कश्चिदपि-...पायः— यो हि रामबाणः सिद्ध्येत—समक्षं नायाति ।

अस्यां परिस्थितौ वेदाः पुराणानि स्मृतयश्चान्तिम उपायरूपेण समक्षमायान्ति । इति विचार्य एव साधारणजनज्ञानाय प्रदूषणसन्निरोधसम्बन्धि लेखः दिव्यज्योतिषि प्रदत्तः । पठित्वा सर्वमिदं विज्ञानामविज्ञानामपि सर्वेषां अक्षि - उद्घाटनं यदि भवेत्—भारतीयशास्त्रशरणगमनञ्चेत—अधुनापि क्रियेत तु विश्वसंहारकप्रदूषणात् - रक्षा सुलभा नात्र कोऽपि सन्देहः । यतोहि शास्त्रलिखितोपायानां चमत्कारपूर्ण—प्रभावाः अस्माभिः स्वयं दृष्टाः अनुभूताश्च ।

— केशव शर्मा

※ ※ ※ ※ ※ ※ ※ ※ ※ ※ ※ ※ ※

मुद्रकः प्रकाशक :—
भारतीमुद्रणालय भारती विहार, मशोबरा - शिमला १७१००७ (हि. प्र.)
स्वामी:- श्रीमती आचार्य रत्नकुमारी शर्मा,

दूरभाष : [78459 28-200]

सितम्बर १९९३ भाद्रपद २०५० — वर्षम् - ३७ अङ्कः १२

वार्षिक मूल्यम् ५० रु०

R. N. 6584/57 ल—33/एस. एम. / 10/91

# संस्थान के प्रकाशन

१. फलादेश कल्पतरुः (मूल संस्कृत में)
हिन्दी अंग्रेजी टीका सहित ४० वर्ष के अनुसन्धान और अनुभव पर आधारित जातकफल कहने का अनुपम ग्रन्थ ... मू. ७०-०

२. संस्कृत कोशवाङ्मयम् (संस्कृत में)
संस्कृतकोशसाहित्यपर अनुसन्धानपूर्ण विवेचन ... मू. १७५-

३. झञ्झा (संस्कृत में)
शेक्सपीयर के द टैम्पेस्ट नाटक का सचित्र रूपान्तर ... मू. ५०-

४. हिमाचलप्रदेशे संस्कृतस्य प्रसारो विकासश्च (संस्कृत में)
हिमाचल में संस्कृत के प्रसार विकास की विस्तृत कहानी ... मू. ५०-०

५. वैजयन्ती (हिन्दी काव्य)
नवीन प्राचीन विचारधाराओं का गीतिमय समन्वय — मू. १५-०

६. सूनृता (संस्कृत काव्य)
आधुनिक गीतों में गुम्फित अनुपम उपहार ... मू. २५-०

७. शक्तिसौरभ (हिन्दी में)
संस्कृत लेखिकाओं का इतिहास ... ... मू. १५-

८. विचारामृत (हिन्दी में)
आचार्य जी के विभिन्न विषयों पर जीवनोपयोगी लेख दो भाग मू. १५-

९. पथ्यापथ्यविनिर्णय
सं. हि. टीका सहित आयुर्वेद का दुर्लभ ग्रन्थ ... मू. २०-
(डाकव्यय सर्वत्र पृथक्)

१०. सरिता
(अभिनव सं. कथानिकाएं) — ... मू. ५०-

११, हिमानी
(संस्कृत काव्य हिन्दी अनुवाद सहित) — मू. १०

सम्पर्क सूत्र।—
सचिव, संस्कृत शोध संस्थान
भारती विहार मशोबरा
शिमला १७१००७ )हि.

